# ऋग्वेदः सूक्तं २.१

ऋग्वेदः - मण्डल २
सूक्तं २.१
गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः
सूक्तं २.२ →

## दे. अग्निः। जगती

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।

त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥१॥

तवाग्ने होत्रं तव पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः ।

तव प्रशास्त्रं त्वमध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे ॥२॥

त्वमग्न इन्द्रो वृषभः सतामसि त्वं विष्णुरुरुगायो नमस्यः ।

त्वं ब्रह्मा रयिविद्ब्रह्मणस्पते त्वं विधर्तः सचसे पुरंध्या ॥३॥

त्वमग्ने राजा वरुणो धृतव्रतस्त्वं मित्रो भवसि दस्म ईड्यः ।

त्वमर्यमा सत्पतिर्यस्य सम्भुजं त्वमंशो विदथे देव भाजयुः ॥४॥

त्वमग्ने त्वष्टा विधते सुवीर्यं तव ग्नावो मित्रमहः सजात्यम् ।

त्वमाशुहेमा ररिषे स्वश्व्यं त्वं नरां शर्धो असि पुरूवसुः ॥५॥

त्वमग्ने रुद्रो असुरो महो दिवस्त्वं शर्धो मारुतं पृक्ष ईशिषे ।

त्वं वातैररुणैर्यासि शंगयस्त्वं पूषा विधतः पासि नु त्मना ॥६॥

त्वमग्ने द्रविणोदा अरंकृते त्वं देवः सविता रत्नधा असि ।

त्वं भगो नृपते वस्व ईशिषे त्वं पायुर्दमे यस्तेऽविधत् ॥७॥

त्वामग्ने दम आ विश्पतिं विशस्त्वां राजानं सुविदत्रमृञ्जते ।

त्वं विश्वानि स्वनीक पत्यसे त्वं सहस्राणि शता दश प्रति ॥८॥

त्वामग्ने पितरमिष्टिभिर्नरस्त्वां भ्रात्राय शम्या तनूरुचम् ।

त्वं पुत्रो भवसि यस्तेऽविधत्त्वं सखा सुशेवः पास्याधृषः ॥९॥

त्वमग्न ऋभुराके नमस्यस्त्वं वाजस्य क्षुमतो राय ईशिषे ।

त्वं वि भास्यनु दक्षि दावने त्वं विशिक्षुरसि यज्ञमातनिः ॥१०॥

त्वमग्ने अदितिर्देव दाशुषे त्वं होत्रा भारती वर्धसे गिरा ।

त्वमिळा शतहिमासि दक्षसे त्वं वृत्रहा वसुपते सरस्वती ॥११॥

त्वमग्ने सुभृत उत्तमं वयस्तव स्पार्हे वर्ण आ संदृशि श्रियः ।

त्वं वाजः प्रतरणो बृहन्नसि त्वं रयिर्बहुलो विश्वतस्पृथुः ॥१२॥

त्वामग्न आदित्यास आस्यं त्वां जिह्वां शुचयश्चक्रिरे कवे ।

त्वां रातिषाचो अध्वरेषु सश्चिरे त्वे देवा हविरदन्त्याहुतम् ॥१३॥

त्वे अग्ने विश्वे अमृतासो अद्रुह आसा देवा हविरदन्त्याहुतम् ।

त्वया मर्तासः स्वदन्त आसुतिं त्वं गर्भो वीरुधां जज्ञिषे शुचिः ॥१४॥

त्वं तान्सं च प्रति चासि मज्मनाग्ने सुजात प्र च देव रिच्यसे ।

पृक्षो यदत्र महिना वि ते भुवदनु द्यावापृथिवी रोदसी उभे ॥१५॥

ये स्तोतृभ्यो गोअग्रामश्वपेशसमग्ने रातिमुपसृजन्ति सूरयः ।

अस्माञ्च ताँश्च प्र हि नेषि वस्य आ बृहद्वदेम विदथे सुवीराः ॥१६॥

## सायणभाष्यम्

॥ अथ द्वितीयं मंडलं ॥ शतर्चिनां प्रथमं मंडलं व्याख्यातं । अथ गार्त्समदं द्वितीयं मंडलं व्याख्यायते । त्वमग्ने द्युभिरित्यादिकं द्वितीयं मंडलं । चत्वारोऽनुवाकाः । तेषु प्रथमेऽनुवाक एकादश सूक्तानि । तत्र त्वमग्ने द्युभिरिति षोडशर्चं प्रथमं सूक्तं । मंडलद्रष्टा गृत्समद ऋषिः । स च पूर्वमांगिरसकुले शुनहोत्रस्य पुत्रः सन् यज्ञकालेऽसुरैर्गृहीत इंद्रेण मोचितः। पश्चात्तद्वचनेनैव भृगुकुले शुनकपुत्रो गृत्समदनामाभूत्। तथा चानुक्रमणिका । य आंगिरस: शौनहोत्रो भूत्वा भार्गव: शौनकोऽभवत्स गृत्समदो द्वितीयं मंडलमपश्यदिति। तथा तस्यैव शौनकस्य वचनमृष्यनुक्रमणे। त्वमग्न इति गृत्समदः शौनको भृगुतां गतः । शौनहोत्र: प्रकृत्या तु य आंगिरस उच्यत इति। तस्मान्मंडलद्रष्टा शौनको गृत्समद ऋषिः। जगती छंदः। मंडलादिपरिभाषयाग्नेयं । अत्रानुक्रमणिका। त्वमग्ने जागतं त्विति ॥ प्रातरनुवाकाश्विन शस्त्रयोर्जागते छंदसीदमादिसूक्तद्वयस्य विनियोगः । त्वमग्ने द्युभिरिति

सूक्ते । आ०४, १३.। इति सूत्रितत्वात ॥
उपाकरणोत्सर्जनयोरप्याद्या विनियुक्ता ॥

त्वम॑ग्ने॒ द्युभि॒स्त्वमा॑शुशु॒क्षणि॒स्त्वम॒द्भ्यस्त्वमश्म॑न॒स्परि॑ ।

त्वं वने॑भ्य॒स्त्वमोष॑धीभ्य॒स्त्वं नृ॒णां नृ॑पते जायसे॒ शुचि॑ः ॥१

त्वम् । अ॒ग्ने॒ । द्युऽभि॑ः । त्वम् । आ॒शु॒शु॒क्षणि॑ः । त्वम् ।
अ॒त्ऽभ्यः । त्वम् । अश्म॑नः । परि॑ ।

त्वम् । वने॑भ्यः । त्वम् । ओष॑धीभ्यः । त्वम् । नृ॒णाम् ।
नृ॒ऽप॒ते॒ । जा॒य॒से॒ । शुचि॑ः ॥१

त्वम् । अग्ने । द्युऽभिः । त्वम् । आशुशुक्षणिः । त्वम् ।
अत्ऽभ्यः । त्वम् । अश्मनः । परि ।

त्वम् । वनेभ्यः । त्वम् । ओषधीभ्यः । त्वम् । नृणाम् । नृऽपते । जायसे । शुचिः ॥१

हे अग्ने अग्रणीत्वादिगुणविशिष्ट हे नृणां नृपते। नृणां मनुष्याणां मध्ये ये नरा यष्टार: संति तेषां विशेषेण पालयितः। यद्वोभाभ्यां पदाभ्यां बहुत्वं नित्यस्वामित्वं च प्रतिपाद्यते। सर्वेषामपि नराणां नित्यपालकेत्यर्थः। नृणामित्यस्य निघाताभावश्छांदसः ॥ तादृश हे देव त्वं द्युभिर्यागदिवसैर्निमित्तभूतैर्जायसे । यागार्थं मथनेनोत्पद्यस इत्यर्थः। यद्वा तादृशैर्दिवसैः सहितो जायसे।तत्तद्यागदिवसेषु प्रसिद्धो भवसीत्यर्थः। तथा त्वमाशुशुक्षणिर्जायसे । आ सर्वतो दीप्यमानो भवसि ॥ आङ्युपपदे शुच दीप्तावित्येतस्य सनंतस्य छांदसमिदं रूपं । यद्वा आशु शीघ्रं शुच दीप्त: सन् यतः स सेव्यत इति। आशु शुचं शोकं सनोति ददाति शत्रुभ्यो दाहादिनेत्याशुशुक्षणिः ॥ तादृशो भवसि । एवं सर्वत्र

प्रतिविशेषणं जायस इति योज्यं । हे अग्ने त्वमद्भ्यो वृष्ट्युदकेभ्यो जायसे वैद्युतरूपेण वाडवरूपेण वा समुद्रोदकेभ्यः। अश्मनो मेघात्पाषाणाद्वा परि जायसे । यो अश्मनोरंतरग्निं जजान।।२. १२.३ । इति हि मंत्रांतरं। त्वं वनेभ्यो वृक्षादिसमूहेभ्यो दावरूपण। त्वमोषधीभ्यो वैश्वानररूपेण । एवं महानुभावस्त्वं मथनेनोत्पन्नः सन् सर्वात्मको भवसीत्यर्थः। शुचिरेव जायसे । यद्वा शुचिरादित्यरूपो जायस इत्यर्थ:। अत्र त्वमग्ने द्युभिरहोभिरित्यादि निरुक्तमनुसंधेयं। नि० ६. १ ॥

तवांग्ने हो॒त्रं तवं पो॒त्रमृ॒त्वियं॒ तवं ने॒ष्ट्रं त्वम॒ग्निदृंताय॒तः ।

तवं प्रशा॒स्त्रं त्वमंध्वरीयसि ब्र॒ह्मा चासिं गृ॒हपंतिश्च नो॒ दमें ॥२

तवं । अ॒ग्ने॒ । हो॒त्रम् । तवं । पो॒त्रम् । ऋ॒त्वियंम् । तवं । ने॒ष्ट्रम् । त्वम् । अ॒ग्नित् । ऋ॒त॒ऽय॒तः ।

तवं । प्र॒ऽशा॒स्त्रम् । त्वम् । अ॒ध्व॒रि॒ऽय॒सि॒ । ब्र॒ह्मा । च॒ । असिं । गृ॒हऽपंतिः । च॒ । न॒ः । दमें ॥२

तव । अग्ने । होत्रम् । तव । पोत्रम् । ऋत्वियम् । तव । नेष्ट्रम् । त्वम् । अग्नित् । ऋतऽयतः ।

तव । प्रऽशास्त्रम् । त्वम् । अध्वरिऽयसि । ब्रह्मा । च । असि । गृहऽपतिः । च । नः । दमे ॥२

हे अग्ने होत्रं होतुः कर्म शस्त्रयाज्यादिलक्षणं यदस्ति तदपि तवैव । त्वदर्थमित्यर्थः । तथा पोत्रं पोतुः कर्म यदस्ति तदपि तवैव । तथा ऋत्वियं प्राप्तकालमार्त्विज्यं तवैव । नेष्ट्रं नेष्टुः कर्म प्रस्थितयाज्यादिरूपं तव ।। हे अग्ने त्वमग्नित् अग्नीध्रश्च त्वमेवासि । तथा ऋतायतो

यज्ञमिच्छतस्तवैव प्रशास्त्रं यत्प्रशास्तुर्मैत्रावरुणस्य कर्म तत् । हे अग्ने त्वमध्वरीयसि । अध्वरं यज्ञं कामयसे । अध्वर्युर्भवसीत्यर्थः । तथाध्वर्युशब्दव्युत्पत्तेः । अध्वर्युरध्वरयुरध्वरं कामयत इति वेति हि निरुक्तं ।। १. ८. ॥ तथा ब्रह्मा ब्राह्मणाच्छंस्यप्यसि । तथा नो दमेऽस्मद्यज्ञगृहे गृहपतिश्चासीति ॥

त्वमं॑ग्न॒ इन्द्रो॑ वृष॒भः स॒तामं॑सि॒ त्वं विष्णु॑रुरुगा॒यो नं॑म॒स्यः॑ ।

त्वं ब्र॒ह्मा रं॑यि॒विद्ब्रं॑ह्मणस्पत॒े त्वं विं॑धर्तः सचस॒े पुरं॑ध्या ॥३

त्वम् । अ॒ग्ने॒ । इन्द्रः॑ । वृ॒ष॒भः । स॒ताम् । अ॒सि॒ । त्वम् । विष्णुः॑ । उ॒रु॒ऽगा॒यः । न॒म॒स्यः॑ ।

त्वम् । ब्र॒ह्मा । र॒यि॒ऽवित् । ब्र॒ह्म॒ण॒ः । प॒ते॒ । त्वम् ।
वि॒ध॒र्त॒रितिं विऽधर्तः । स॒च॒से॒ । पुरंम्ऽध्या ॥३

त्वम् । अग्ने । इन्द्रः । वृषभः । सताम् । असि । त्वम् ।
विष्णुः । उरुऽगायः । नमस्यः ।

त्वम् । ब्रह्मा । रयिऽवित् । ब्रह्मणः । पते । त्वम् ।
विधर्तरिति विऽधर्तः । सचसे । पुरम्ऽध्या ॥३

हे अग्ने त्वं यतः सतां वृषभो वर्षितासि अत इंद्रोऽसि । यद्वा सतां साधूनामिंद्रोऽसि । कामानां वर्षितासि। त्वं विष्णुरसि । यत उरुगायो बहुभिर्गीयमानो नमस्यो नमस्कार्यश्च भवसि । हे ब्रह्मणस्पते परिवृढस्य कर्मणो मंत्रस्य वा पालयितस्त्वं यतो रयिवित् गवादिधनस्य वेत्ता अतो ब्रह्मासि । हे विधर्तर्विविधकारक वैश्वानररूपाग्ने पुरंध्या बहुप्रकारया बुद्ध्या सचसे । सह वर्तसे । सर्वदा बुद्ध्या स्तूयस इत्यर्थः ॥

त्वमं॑ग्ने॒ राजा॒ वरु॑णो धृ॒तव्र॑त॒स्त्वं मि॒त्रो भ॑वसि द॒स्म ईड्यः॑ ।

त्वम॑र्य॒मा सत्प॑ति॒र्यस्य॑ स॒म्भुजं॒ त्वमंशो॑ वि॒दथे॑ देव भाज॒युः ॥४

त्वम् । अ॒ग्ने॒ । राजा॑ । वरु॑णः । धृ॒तऽव्र॑तः । त्वम् । मि॒त्रः । भ॒व॒सि॒ । द॒स्मः । ईड्यः॑ ।

त्वम् । अ॒र्य॒मा । सत्ऽप॑तिः । यस्य॑ । स॒म्ऽभुज॑म् । त्वम् । अंशः॑ । वि॒दथे॑ । दे॒व॒ । भ॒ा॒ज॒युः ॥४

त्वम् । अग्ने । राजा । वरुणः । धृतऽव्रतः । त्वम् । मित्रः । भवसि । दस्मः । ईड्यः ।

त्वम् । अर्यमा । सत्ऽपतिः । यस्य । सम्ऽभुजम् । त्वम् । अंशः । विदथे । देव । भाजयुः ॥४

हे अग्ने त्वं यतो धृतव्रतो धारितकर्मासि अतो वरुणो राजासि । यतो दस्मः शत्रूणामुपक्षपयिता ईडयः स्तुत्यश्च अतो मित्र एतन्नामको देवोऽसि । यतः सत्पतिः सतामभिमतप्रदानेन पालयिता अतोऽर्यमा भवसि । दातृत्वं चार्यम्णो लिंगं। अर्यमेति तमाहुर्यो ददातीति। यस्यार्यम्णो दानं संभुजं संततभुजं व्यापकं भवति। यद्वा यस्य धनं संभुजं सम्यक् भोगाय साधु ग्रहीतॄणां । तथा त्वमंशः सूर्यमूर्त्यंतरभूत एतन्नामको देवोऽसि । तादृश हे देव विदथेऽस्मदीये यज्ञे भाजयुः फलानां भाजयिता प्रापयितासि ॥

त्वम॑ग्ने॒ त्वष्टा॑ विध॒ते सु॒वीर्यं॒ तव॒ ग्नावो॑ मित्रमहः सजा॒त्यं॑म्
।

त्वमांशुहेमां ररिषे स्वश्व्यं त्वं नरां शर्धो॑ असि पुरूवसुः ॥
५

त्वम् । अग्ने । त्वष्टां । विधते । सुऽवीर्यम् । तवं । ग्नावः ।
मित्रऽमहः । सऽजात्यम् ।

त्वम् । आशुऽहेमां । ररिषे । सुऽअश्व्यंम् । त्वम् । नराम् ।
शर्धः । असि । पुरुऽवसुः ॥५

त्वम् । अग्ने । त्वष्टा । विधते । सुऽवीर्यम् । तव । ग्नावः ।
मित्रऽमहः । सऽजात्यम् ।

त्वम् । आशुऽहेमा । ररिषे । सुऽअश्व्यम् । त्वम् । नराम् ।
शर्धः । असि । पुरुऽवसुः ॥५

हे अग्ने त्वष्टा फलस्य साधु संपादयिता त्वं विधते परिचरते जनाय सुवीर्यं शोभनवीर्यं। वीर्यं धनं। हेतुर्भवसि । ग्नावो याः स्तुतिवाचः संति तास्तव स्वभूताः । हे

मित्रमहः हितकारितेजः सजात्यमस्माकं बांधवं रजस इत्यर्थ:। हे अग्ने आशुहेमा आशु प्रेरयिता त्वं स्वश्व्यं शोभनाश्वसमूहोपेतं फलं ररिषे। ददासि । हे अग्ने पुरूवसुः प्रभूतधनस्त्वं नरां नराणां शर्धो बलस्थानीयोऽसि ॥ ॥१७॥

त्वमंग्ने रु॒द्रो असुंरो म॒हो दि॒वस्त्वं शर्धो॒ मारुंतं पृ॒क्ष ईंशिषे ।

त्वं वातैंररु॒णैर्यांसि शंग॒यस्त्वं पू॒षा विंध॒तः पांसि॒ नु त्मनां ॥६

त्वम् । अ॒ग्ने॒ । रु॒द्रः । असुंरः । म॒हः । दि॒वः । त्वम् । शर्धः । मारुंतम् । पृ॒क्षः । ई॒शि॒षे॒ ।

त्वम् । वातैः॑ । अ॒रु॒णैः । या॒सि॒ । श॒म्ऽग॒यः । त्वम् । पू॒षा
। वि॒ध॒तः । पा॒सि॒ । नु । त्मना॑ ॥६

त्वम् । अग्ने । रुद्रः । असुरः । महः । दिवः । त्वम् । शर्धः
। मारुतम् । पृक्षः । ईशिषे ।

त्वम् । वातैः । अरुणैः । यासि । शम्ऽगयः । त्वम् । पूषा
। विधतः । पासि । नु । त्मना ॥६

हे अग्ने त्वं महो दिवो महतो द्युलोकात् । उपलक्षणमेतत् । लोकत्रयात् । असुरः शत्रूणां निरसिता रुद्रो ऽसि । रुद्दुःखं दुःखहेतुर्वा पापादिः। तस्य द्रावयिता एतन्नामको देवोऽसि । रुद्रो वा एष यदग्निः। तै० ५.४.३.। इत्यादिष्वग्ने रुद्रशब्देन व्यवहारात्। यद्वा त्वं रुद्रः। रौति मामनिष्ट्वा नरा दुःखे पतिष्यंतीति रुद्रः। तादृशोऽसि । रुद्रो रौतीति सत इति हि निरुक्तं । तथा महो महतो द्युलोकस्य संबंध्यसुरोऽसि । असुर्बलं । तस्य

दातादित्यरूपश्च त्वमसि । अग्नेर्द्युलोकसंबंध्यसुरत्वमुत वा दिवो असुराय मन्म । ५.४१. ३. । इत्यादिषु । तथा त्वं मारुतं शर्धो मरुत्समूहरूपं बलमसि । वायुरूपश्च त्वमसीत्यर्थः । एवमग्न्यादित्यवायुरूपस्त्वं । पृक्षोऽन्नस्य हविर्लक्षणस्य त्वमीशिषे। ईश्वरो भवसि। यस्मादेवं तस्मात्त्वं वातेर्वायुसदृशैररुणैररुणवर्णैरश्वैः शंगयः सुखस्य गृहरूप आवासभूतः सन् यासि । प्राप्नोषि यागगृहं । यद्वा अरुणैर्गमनशीलैर्वातैर्वायुभिरुत्पन्नः सन् यासि वने तथा त्वं पूषा सर्वस्य पोषकः सन् नु क्षिप्रं त्मना आत्मनानुग्रहरूपया स्वबुद्ध्यैव विधतः परिचरतो यजमानान् पासि ॥

त्वमंग्ने द्रविणोदा अंरंकृते त्वं देवः संविता रंत्नधा अंसि ।

त्वं भगों नृपते वस्वं ईशिषे त्वं पायुर्दमे यस्तेऽविंधत् ॥७

त्वम् । अ॒ग्ने॒ । द्र॒वि॒णः॒ऽदाः । अ॒र॒म्ऽकृते॑ । त्वम् । दे॒वः ।
स॒वि॒ता । र॒त्न॒ऽधाः । अ॒सि॒ ।

त्वम् । भगः॑ । नृ॒ऽप॒ते॒ । वस्वः॑ । ई॒शि॒षे॒ । त्वम् । पा॒युः ।
दमे॑ । यः । ते॒ । अवि॑धत् ॥७

त्वम् । अग्ने । द्रविणःऽदाः । अरम्ऽकृते । त्वम् । देवः ।
सविता । रत्नऽधाः । असि ।

त्वम् । भगः । नृऽपते । वस्वः । ईशिषे । त्वम् । पायुः ।
दमे । यः । ते । अविधत् ॥७

हे अग्ने त्वमरंकृते स्वामलंकुर्वते यजमानाय द्रविणोदाः। हिरण्यस्य दातासि । देवो द्योतमानः सविता सर्वस्य सत्कर्मसु प्रेरकस्त्वं रत्नधा रमणीयानां धनानां मणिमुक्तादीनां धारयितासि । तथा हे नृपते नृणां पालकाग्ने त्वं भगो भजनीयः सन् वस्वो वसुनो

धनस्येशिषे । समर्थों भवसि दातुं । यो यजमानो दमे यज्ञगृहे ते त्वामविधत् परिचरति तस्य पायुः पालकस्त्वमसि ॥

त्वाम॑ग्ने॒ दम॒ आ वि॒श्पति॒ं विश॒स्त्वां राजा॑नं सुवि॒दत्र॑मृञ्जते ।

त्वं विश्वा॑नि स्वनीक पत्यसे॒ त्वं स॒हस्रा॑णि श॒ता दश॒ प्रति॑ ॥८

त्वाम् । अ॒ग्ने॒ । दमे॑ । आ । वि॒श्पति॑म् । विशः॑ । त्वाम् । राजा॑नम् । सु॒ऽवि॒दत्र॑म् । ऋ॒ञ्ज॒ते॒ ।

त्वम् । विश्वा॑नि । सु॒ऽअ॒नी॒क॒ । प॒त्य॒से॒ । त्वम् । स॒हस्रा॑णि । श॒ता । दश॑ । प्रति॑ ॥८

त्वाम् । अग्ने । दमे । आ । विश्पतिम् । विशः । त्वाम् । राजानम् । सुऽविदत्रम् । ऋञ्जते ।

त्वम् । विश्वानि । सुऽअनीक । पत्यसे । त्वम् । सहस्राणि । शता । दश । प्रति ॥८

हे अग्ने विश्पतिं यजमानानां पालकं त्वां विशो यजमाना दमे स्वकीये यज्ञगृह आ । आसादयति। उपसर्गवशाद्योग्यक्रियाध्याहारः ॥ तथा कृत्वा राजानं दीप्यमानं सुविदत्रं शोभनज्ञानमस्मदनुकूलचेतस्कं सुधनं वा त्वामृंजते । प्रसाधयंति ॥ ऋंजतिः प्रसाधनकर्मेति यास्कः ॥ यत एवं ततो हे स्वनीक शोभनज्वालारूपसेन त्वं विश्वानि सर्वाणि। हवींषीति शेषः। षष्ट्यर्थे द्वितीया। विश्वेषां हविषामाज्यसोमपुरोडाशादीनां पठ्यसे। ईश्वरो भवसि। ईश्वरनामैतत्। इरज्यति पत्यति इति तन्नामसु पाठात्। यद्वा पतिभावमाचरसि। त्वं तु सहस्राणि शता

शतानि दश एतत्संख्याकानि प्रति।

एतत्संख्याकानामभिमतसाधनानां प्रतिनिधिरित्यर्थः॥

प्रतिः प्रतिनिधिप्रतिदानयोरिति कर्मप्रवचनीयत्वं ॥

तैर्यत्फलं भवति तत्त्वया लभ्यत इत्यर्थः ॥

त्वाम॑ग्ने पि॒तर॑मि॒ष्टिभि॒र्नर॒स्त्वां भ्रा॒त्राय॒ शम्या॑ तनू॒रुच॑म् ।

त्वं पु॒त्रो भ॑वसि॒ यस्ते॑ऽवि॑ध॒त्त्वं सखा॑ सु॒शेव॑ः पास्या॒धृष॑ः ॥
९

त्वाम् । अ॒ग्ने॒ । पि॒तर॑म् । इ॒ष्टिऽभि॑ः । नर॑ः । त्वाम् । भ्रा॒त्राय॑ । शम्या॑ । त॒नू॒ऽरुच॑म् ।

त्वम् । पु॒त्रः । भ॒व॒सि॒ । यः । ते॒ । अवि॑धत् । त्वम् । सखा॑ । सु॒ऽशेव॑ः । पा॒सि॒ । आ॒ऽधृष॑ः ॥९

त्वाम् । अग्ने । पितरम् । इष्टिऽभिः । नरः । त्वाम् । भ्रात्राय । शम्या । तनूऽरुचम् ।

त्वम् । पुत्रः । भवसि । यः । ते । अविधत् । त्वम् । सखा । सुऽशेवः । पासि । आऽधृषः ॥९

हे अग्ने पितरं पालकं त्वां नरो नेतारो यजमाना इष्टिभिरेषणसाधनेर्यागैर्यजंत इति शेषः। पितृवत्पालनाय यजंत इत्यर्थः । तथा तनूरुचं शरीराणां दीपकं शरीरेषु दीप्यमानं वैश्वानरात्मना त्वां भ्रात्राय भ्रातृत्वाय सौभ्रात्राय शम्या ॥ कर्मनामैतत् ॥ कर्मणा यजंत इति शेषः। यद्वोभयत्र वक्ष्यमाणेनाविधदित्यनेन संबंध: । हे अग्ने यो नरस्ते त्वामविधत् परिचरति तस्य त्वं पुत्रो भवसि। पुत्रवत्पालयिता भवसि। तथा त्वं सखा समानख्यानः सखिवद्धितकारी सुशेवः। शेवमिति सुखनाम। सुष्ठुसुखकारी सन् आधृष आधर्षकात्मा पासि । रक्षसि ।

पितृत्वकामाय पितृत्वेन भ्रातृत्वकामाय भ्रातृत्वेन पुत्रत्वकामाय पुत्रस्थानीयो भवसि । त्रिप्रकारेण रक्षसीत्यर्थः ॥

त्वमंग्न ऋ॒भुरा॒के नंम॒स्य१॒स्त्वं वाजंस्य क्षु॒मतों रा॒य ईंशिषे ।

त्वं वि भा॒स्यनुं दक्षि दा॒वने॒ त्वं वि॒शिक्षुंरसि य॒ज्ञमा॒तनिः ॥ १०

त्वम् । अ॒ग्ने॒ । ऋ॒भुः । आ॒के । न॒म॒स्यः᳚ । त्वम् । वाजंस्य । क्षु॒ऽमतः᳚ । रा॒यः । ई॒शि॒षे॒ ।

त्वम् । वि । भा॒सि॒ । अनुं । ध॒क्षि॒ । दा॒वनें । त्वम् । वि॒ऽशिक्षुः᳚ । अ॒सि॒ । य॒ज्ञम् । आ॒ऽतनिः᳚ ॥१०

त्वम् । अग्ने । ऋभुः । आके । नमस्यः । त्वम् । वाजस्य । क्षुऽमतः । रायः । ईशिषे ।

त्वम् । वि । भासि । अनु । धक्षि । दावने । त्वम् । विऽशिक्षुः । असि । यज्ञम् । आऽतनिः ॥१०

हे अग्ने त्वमृभुः । उरुभासमानो मेधावी वा । त्वमाकेंऽतिके संनिधावेव नमस्यो नमस्कार्यः । स्तुत्य इत्यर्थः। इतरदेवतावन्मंत्रप्रतिपाद्याकारेण स्तुत्यो न भवसि किंतु प्रत्यक्ष इत्यर्थः। तथा त्वं क्षुमतः शब्दवतः सर्वत्र श्रूयमाणस्य वाजस्यान्नस्य रायो धनस्य चेशिषे । स्वामी भवसि । अतस्तद्देहीत्यर्थः । हे अग्ने त्वं विभासि । विशेषण दीप्यसे । तदर्थमनुक्रमेणैव धक्षि। दहसि काष्ठादीन् ॥ दहेर्लटि सिपि रूपं । संहितायां भष्भावाभावश्छांदसः ॥ किमर्थमेवं। दावने छेदनायांधकारस्य । यद्वा हविषो दानवते यजमानाय वा।

किंच त्वं यज्ञं विशिक्षुर्विशेषेण शिक्षयिता साधयितासि ॥ न लोकाव्ययेति षष्ठ्या निषेधः ॥ तथातनिः । फलस्य सर्वतो विस्तारयिता ॥ ॥ १८ ॥

त्वम॑ग्ने॒ अदि॑तिर्दे॑व दा॒शुषे॒ त्वं होत्रा॒ भार॑ती वर्धसे गि॒रा ।

त्वमिळा॑ श॒तहि॑मासि॒ दक्ष॑से॒ त्वं वृ॑त्र॒हा व॑सुपते॒ सर॑स्वती ॥ ११

त्वम् । अ॒ग्ने॒ । अदि॑तिः । दे॒व॒ । दा॒शुषे॑ । त्वम् । होत्रा॑ । भार॑ती । व॒र्ध॒से॒ । गि॒रा ।

त्वम् । इळा॑ । श॒तऽहि॑मा । अ॒सि॒ । दक्ष॑से । त्वम् । वृ॒त्र॒ऽहा । व॒सु॒ऽप॒ते॒ । सर॑स्वती ॥११

त्वम् । अग्ने । अदितिः । देव । दाशुषे । त्वम् । होत्रा । भारती । वर्धसे । गिरा ।

त्वम् । इळा । शतऽहिमा । असि । दक्षसे । त्वम् । वृत्रऽहा । वसुऽपते । सरस्वती ॥११

हे अग्ने देव त्वं दाशुषे हविर्दत्तवते यजमानायादितिरखंडयिता परिपालयितासि । यद्वा अदीना भूमिरसि । किंच त्वं होत्रा होमनिष्पादका भारती भरतख्यादित्यस्यादित्यसंबंधिनी रश्मिरूपा सती गिरा स्तुत्वा वर्धसे । प्रवृद्धो भवसि । किंच त्वं शतहिमा । हिमशब्दः कालोपलक्षकः । अपरिमितकाला नित्येळा भूमिरसि । तादृशी सती दक्षसे दानाय समर्था भवसि ॥ तिङ् उत्तरवादनिघातः ॥ तथा हे वसुपते धनपालक वृत्रहा पापादेर्हंता त्वं सरस्वती। सरणवान्वायुः। तत्संबंधिन्येतन्नियामका माध्यमिकासि। आदित्याग्निवायुना संबंधिन्यो भारतीऴासरस्वत्याख्या यास्तिस्रो देव्यः संति ता अपि त्वमेवेत्यर्थः ॥

त्वम॑ग्ने॒ सुभृ॑त उत्त॒मं वय॒स्तव॑ स्पा॒र्हे॑ वर्ण॒ आ स॒ंदृशि॒ श्रियः॑
।

त्वं वाजः॑ प्र॒तर॑णो बृ॒हन्न॑सि॒ त्वं र॒यिर्ब॑हु॒लो वि॒श्वत॑स्पृ॒थुः ॥
१२

त्वम् । अ॒ग्ने॒ । सुऽभृ॑तः । उ॒त्ऽत॒मम् । वयः॑ । तव॑ । स्पा॒र्हे
। वर्णे॑ । आ । स॒म्ऽदृशि॑ । श्रियः॑ ।

त्वम् । वाजः॑ । प्र॒ऽतर॑णः । बृ॒हन् । अ॒सि॒ । त्वम् । र॒यिः ।
ब॒हु॒लः । वि॒श्वतः॑ । पृ॒थुः ॥१२

त्वम् । अग्ने । सुऽभृतः । उत्ऽतमम् । वयः । तव । स्पार्हे
। वर्णे । आ । सम्ऽदृशि । श्रियः ।

त्वम् । वाजः । प्रऽतरणः । बृहन् । असि । त्वम् । रयिः ।
बहुलः । विश्वतः । पृथुः ॥१२

हे अग्ने त्वं सुभृतः सुष्टु पोषितः सन् उत्तमं निरतिशयं वयोऽन्नमायुष्यं वा त्वमसि । तत्संपादकोऽसीत्यर्थः । तथा तव स्पार्हे स्पृहणीये वर्णे लोहितशुष्कादिलक्षणे संदृशि सम्यग्दर्शनीये श्रिय ऐश्वर्याणि कांतयो वाश्रित्य वर्तंते ॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥ किंच त्वं वाजोऽन्नं । तत्साधकत्वात्ताच्छब्द्यं । अन्नसाधक इत्यर्थः । प्रतरणः प्रतारयिता पापात् । अत एव बृहन् महानसि । तथा त्वं रयिर्धनरूपोऽसि बहुलः सर्वविषयबाहुल्योपेतो विश्वतः पृथुर्विस्तीर्णः प्रख्यात इत्यर्थः ॥

त्वाम॑ग्न आदि॒त्यास॑ आ॒स्यं१॒॑ त्वां जि॒ह्वां शुच॑यश्चक्रिरे कवे ।

त्वां रा॑ति॒षाचो॑ अध्व॒रेषु॑ सश्चिरे॒ त्वे दे॒वा ह॒विर॑द॒न्त्याहु॑तम् ॥१३

त्वाम् । अ॒ग्ने॒ । आ॒दि॒त्यासः॑ । आ॒स्य॑म् । त्वाम् । जि॒ह्वाम् । शुच॑यः । च॒क्रि॒रे॒ । क॒वे॒ ।

त्वाम् । रा॒ति॒ऽसाचः॑ । अ॒ध्व॒रेषु॑ । स॒श्चि॒रे॒ । त्वे इति॑ । दे॒वाः । ह॒विः । अ॒द॒न्ति॒ । आऽहु॑तम् ॥१३

त्वाम् । अग्ने । आदित्यासः । आस्यम् । त्वाम् । जिह्वाम् । शुचयः । चक्रिरे । कवे ।

त्वाम् । रातिऽसाचः । अध्वरेषु । सश्चिरे । त्वे इति । देवाः । हविः । अदन्ति । आऽहुतम् ॥१३

हे अग्ने त्वामादित्यासोऽदितेः पुत्रा इंद्रादय आस्यं स्वकीयं मुखं भक्षणपानादिसाधनं चक्रिर इति वक्ष्यमाणेन संबंधः । तथा हे कवे कांतप्रज्ञ त्वामेव शुचयः शुद्धा दीप्ता वा देवा जिह्वां स्वकीयजिह्वास्थानीयमास्वादनसाधनं चक्रिरे । त्वन्मुखेनैव भक्षयंति त्वज्जिहयैवास्वादयंतीत्यर्थः ।

तथा त्वामेव रातिषाचः । रातिर्दान दत्तं हविरादि धनं वा। तेन समवेता देवा अध्वरेषु यज्ञेषु सश्चिरे । सेवंत त्वामेव प्रतीक्षंते विना त्वया स्वेषां हविर्भक्षणायोगात् । एवं कृत्वा त्वे त्वयि देवाः सर्व आहुतं सर्वतो दत्तं हविरदंति । भक्षयंति । एवं सर्वदेवोपकारिणं महानुभावं स्तौमीत्यर्थः ॥

त्वे अ॑ग्ने॒ विश्वे॑ अ॒मृता॑सो अ॒द्रुह॑ आ॒सा दे॒वा ह॒विर॑द॒न्त्याहु॑तम् ।

त्वया॒ मर्ता॑सः स्वदन्त आसु॒तिं त्वं गर्भो॑ वी॒रुधां॑ जज्ञिषे॒ शुचि॑ः ॥१४

त्वे इति॑ । अ॒ग्ने॒ । विश्वे॑ । अ॒मृता॑सः । अ॒द्रुह॑ः । आ॒सा । दे॒वाः । ह॒विः । अ॒द॒न्ति॒ । आऽहु॑तम् ।

त्वया॑ । मर्ता॑सः । स्व॒द॒न्ते॒ । आ॒ऽसु॒तिम् । त्वम् । गर्भः॑ ।
वी॒रुधा॑म् । ज॒ज्ञि॒षे॒ । शुचिः॑ ॥१४

त्वे इति । अग्ने । विश्वे । अमृतासः । अद्रुहः । आसा ।
देवाः । हविः । अदन्ति । आऽहुतम् ।

त्वया । मर्तासः । स्वदन्ते । आऽसुतिम् । त्वम् । गर्भः ।
वीरुधाम् । जज्ञिषे । शुचिः ॥१४

हे अग्ने त्वे त्वयि विश्वे सर्वेऽमृतासोऽमरणधर्माणोऽद्रुहोऽद्रोग्धारो देवा आसा त्वदीयेनास्येनाहुतं हविरदंति । भक्षयंति ॥ आस्यशब्दस्य तृतीयेकवचने पद्दन्नोमासित्यादिनान्नादेशः । ऊडिदंपदादीति विभक्तेरुदात्तत्वं ॥ तथा मर्तासो मनुष्या अपि त्वया साधनभूतेनासुतिं रसरूपमन्नादिकं स्वदंते । आस्वादयंति । त्वमेव वीरुधां लतादीनां गर्भो

गर्भस्थानीयः तेषां मध्यावस्थानात् । वसुः सर्वेषां निवासभूतः सन् जज्ञिषे । उत्पादयसि सस्याद्यन्नं ॥

त्वं तान्सं च॒ प्रति॑ चासि म॒ज्मनाग्ने॑ सुजात॒ प्र च॑ देव रिच्यसे ।

पृ॒क्षो यदत्र॑ महि॒ना वि ते॒ भुव॒दनु॒ द्यावा॑पृथि॒वी रोद॑सी उ॒भे ॥१५

त्वम् । तान् । सम् । च॒ । प्रति॑ । च॒ । अ॒सि॒ । म॒ज्मना॑ । अग्ने॑ । सु॒ऽजा॒त॒ । प्र । च॒ । दे॒व॒ । रि॒च्य॒से॒ ।

पृ॒क्षः । यत् । अत्र॑ । म॒हि॒ना । वि । ते॒ । भुव॑त् । अनु॑ । द्यावा॑पृथि॒वी इति॑ । रोद॑सी॒ इति॑ । उ॒भे इति॑ ॥१५

त्वम् । तान् । सम् । च । प्रति । च । असि । मज्मना । अग्ने । सुऽजात । प्र । च । देव । रिच्यसे ।

पृक्षः । यत् । अत्र । महिना । वि । ते । भुवत् । अनु । द्यावापृथिवी इति । रोदसी इति । उभे इति ॥१५

हे अग्ने त्वं मज्मना बलेन तान् प्रसिद्धान्देवान् सं चासि । संगच्छसि । तैः सहितोऽपि भवसि । तथा सामर्थ्येन प्रति चासि। प्रत्येकं तैर्विभिन्नः प्रतिनिधिर्वा भवसि। प्रतिस्वीकारसमये तैः सहितो भवसि वियुक्तश्च भवसीत्यर्थः। हे सुजात शोभनजनन। शोभनमंत्रसहितमथनेनोत्पन्नत्वादग्नेः सुजन्मत्वं। तादृशाग्ने हे देव प्ररिच्यसे च । तैर्बलेन चाधिको भवसि । आधिक्ये कारणमाह ।। यत् यस्मादत्रास्मिन्यज्ञे पृक्षः सर्वमप्यन्नं ॥ व्यत्ययेन बहुवचनं। ते तवैव विभुवत्। समर्थं भवति महिना माहात्म्येन। यतो महत्त्वमस्ति अत इत्यर्थः। कुत्रेति तदुच्यते । रोदसी सर्वनिरोदनस्वभावे उभे द्यावापृथिव्यावनु । ते प्रति । तयोर्मध्ये व्याप्तमित्यर्थः । त्वयि हुतमन्नं त्वन्महत्त्वेन लोकत्रये व्याप्तमित्यर्थः ॥

ये स्तो॒तृभ्यो॒ गोअं॑ग्रा॒मश्वं॑पेशस॒मग्ने॑ रा॒तिमु॑पसृ॒जन्ति॑ सू॒रयः॑
।

अ॒स्माञ्च॒ ताँश्च॒ प्र हि नेषि॒ वस्य॒ आ बृ॒हद्वं॑देम वि॒दथे॑
सु॒वीराः॑ ॥१६

ये । स्तो॒तृऽभ्यः॑ । गोऽअं॑ग्राम् । अश्वं॑ऽपेशसम् । अग्ने॑ ।
रा॒तिम् । उ॒प॒ऽसृ॒जन्ति॑ । सू॒रयः॑ ।

अ॒स्मान् । च॒ । तान् । च॒ । प्र । हि । नेषिं॑ । वस्यः॑ । आ ।
बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥१६

ये । स्तोतृऽभ्यः । गोऽअग्राम् । अश्वऽपेशसम् । अग्ने ।
रातिम् । उपऽसृजन्ति । सूरयः ।

अस्मान् । च । तान् । च । प्र । हि । नेषि । वस्यः । आ ।
बृहत् । वदेम । विदथे । सुऽवीराः ॥१६

अनया होता स्तुतिनिगमव्याजेनाभिमतमाशास्ते । हे अग्ने सूरयो मेधाविनः प्रेरयितारो वा यजमानाः स्तोतृभ्यः स्तुतिकर्तृभ्यो गोअग्रां गावो ऽग्रगामिन्यो यस्यास्तादृशीं गोप्रमुखामश्वपेशसं ॥ पेश इति रूपनाम ॥ अश्वेन निरूपणीयां । एतद्द्वयप्राधान्याभिप्रायां । गौश्चाश्वश्चाजाश्चेति दक्षिणापरिगणनेषु गवाश्वयोः प्राथम्यात्। तादृशीं रातिमुपसृजंति। ददते। तान्यजमानानसमांश्चर्त्विजो वस्यो वसीयः श्रेष्ठं स्वर्गादिस्थान आ सर्वतः प्र हि नेषि । प्रकर्षेण नयसि खलु । नयेत्यर्थः । हि प्रसिद्धौ । वयं च सुवीराः शोभनपुत्रादिसहिता विदथे यज्ञे बृहन्महन्मंत्रजातं वदेम । उच्चारयामः । स्तुम इत्यर्थः ॥ ॥ १ ॥

अस्तौद्गृत्समदोऽग्निं च जातवेदस्यमाप्रियः । यज्ञेनाथ समिद्धोऽग्निर् अतोऽग्निं सप्तभिर्हुवे । ।बृहद्देवता ४.६५।
।

# ऋग्वेदः सूक्तं २.२

ऋग्वेदः - मण्डल २
← सूक्तं २.१
सूक्तं २.२
सूक्तं २.३ →
गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः

## दे. अग्निः। जगती

यज्ञेन वर्धत जातवेदसमग्निं यजध्वं हविषा तना गिरा ।

समिधानं सुप्रयसं स्वर्णरं द्युक्षं होतारं वृजनेषु धूर्षदम् ॥१॥

अभि त्वा नक्तीरुषसो ववाशिरेऽग्ने वत्सं न स्वसरेषु धेनवः ।

दिव इवेदरतिर्मानुषा युगा क्षपो भासि पुरुवार संयतः ॥२॥

तं देवा बुध्ने रजसः सुदंससं दिवस्पृथिव्योररतिं न्येरिरे ।

रथमिव वेद्यं शुक्रशोचिषमग्निं मित्रं न क्षितिषु प्रशंस्यम् ॥३॥

तमुक्षमाणं रजसि स्व आ दमे चन्द्रमिव सुरुचं ह्वार आ दधुः ।

पृश्न्याः पतरं चितयन्तमक्षभिः पाथो न पायुं जनसी उभे अनु ॥४॥

स होता विश्वं परि भूत्वध्वरं तमु हव्यैर्मनुष ऋञ्जते गिरा ।

हिरिशिप्रो वृधसानासु जर्भुरद्द्यौर्न स्तृभिश्चितयद्रोदसी अनु ॥५॥

स नो रेवत्समिधानः स्वस्तये संददस्वान्रयिमस्मासु दीदिहि ।

आ नः कृणुष्व सुविताय रोदसी अग्ने हव्या मनुषो देव वीतये ॥६॥

दा नो अग्ने बृहतो दाः सहस्रिणो दुरो न वाजं श्रुत्या अपा वृधि ।

प्राची द्यावापृथिवी ब्रह्मणा कृधि स्वर्ण शुक्रमुषसो वि दिद्युतः ॥७॥

स इधान उषसो राम्या अनु स्वर्ण दीदेदरुषेण भानुना ।

होत्राभिरग्निर्मनुषः स्वध्वरो राजा विशामतिथिश्चारुरायवे ॥८॥

एवा नो अग्ने अमृतेषु पूर्व्य धीष्पीपाय बृहद्दिवेषु मानुषा ।

दुहाना धेनुर्वृजनेषु कारवे त्मना शतिनं पुरुरूपमिषणि ॥९॥

वयमग्ने अर्वता वा सुवीर्यं ब्रह्मणा वा चितयेमा जनाँ अति ।

अस्माकं द्युम्नमधि पञ्च कृष्टिषूच्चा स्वर्ण शुशुचीत दुष्टरम् ॥१०॥

स नो बोधि सहस्य प्रशंस्यो यस्मिन्सुजाता इषयन्त सूरयः ।

यमग्ने यज्ञमुपयन्ति वाजिनो नित्ये तोके दीदिवांसं स्वे दमे ॥११॥

उभयासो जातवेदः स्याम ते स्तोतारो अग्ने सूरयश्च शर्मणि ।

वस्वो रायः पुरुश्चन्द्रस्य भूयसः प्रजावतः स्वपत्यस्य शग्धि नः ॥१२॥

ये स्तोतृभ्यो गोअग्रामश्वपेशसमग्ने रातिमुपसृजन्ति सूरयः ।

अस्माञ्च ताँश्च प्र हि नेषि वस्य आ बृहद्वदेम विदथे सुवीराः ॥१३॥

## सायणभाष्यम्

' यज्ञेन वर्धत ' इति त्रयोदशर्चं द्वितीयं सूक्तं मण्डलद्रष्टुर्गृत्समदस्यार्षम् । ' मण्डलादिष्वाग्नेयम् ' इति परिभाषयाग्नेयम् । तुशब्दानुकर्षादिदमपि जागतम् । ' यज्ञेन सप्तोना ' इत्यनुक्रान्तम् ।

प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसि अस्य विनियोगः । सूत्रं तु पूर्वसूक्ते एवोक्तम् । तथा चातुर्विंशिके तृतीयसवने जातवेदस्य निविद्धानीयम् इदम् । ' यज्ञेन वर्धतेत्याग्निमारुतम् ' ( आश्व. श्रौ. ७. ४) इति सूत्रितत्वात् । पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽह्न्यपि जातवेदस्यनिविद्धानम् इदम् । चातुर्विंशिकं तृतीयसवनम् इति चतुर्विंशादतिदिष्टत्वात् ।

य॒ज्ञेन॑ वर्धत जा॒तवे॑दसम॒ग्निं य॑जध्वं ह॒विषा॒ तना॑ गि॒रा ।

स॒मि॒धा॒नं सु॑प्र॒यसं॒ स्व॑र्णरं द्यु॒क्षं होता॑रं वृ॒जने॑षु धू॒र्षद॑म् ॥१

य॒ज्ञेन॑ । व॒र्ध॒त॒ । जा॒तऽवे॑दसम् । अ॒ग्निम् । य॒ज॒ध्व॒म् । ह॒विषा॑ । तना॑ । गि॒रा ।

स॒म्ऽइ॒धा॒नम् । सु॒ऽप्र॒यस॑म् । स्वः॑ऽनरम् । द्यु॒क्षम् ।
होता॑रम् । वृ॒जने॑षु । धू॒ःऽसद॑म् ॥१

यज्ञेन । वर्धत । जातऽवेदसम् । अग्निम् । यजध्वम् ।
हविषा । तना । गिरा ।

सम्ऽइधानम् । सुऽप्रयसम् । स्वःऽनरम् । द्युक्षम् ।
होतारम् । वृजनेषु । धूःऽसदम् ॥१

हे यजमाना ऋत्विजो वा यूयं “जातवेदसं जातानां वेदितारं जातधनं जातप्रज्ञं वा “अग्निं “यज्ञेन यागेन “वर्धत प्रवर्धत । सामान्येनोक्त्वा विशेषेणाह । “हविषा चरुपुरोडाशादिना “तना विस्तृतया "गिरा स्तुत्या च “यजध्वं पूजयध्वम् । कीदृशं तम् । “समिधानं समिध्यमानम् । “सुप्रयसं शोभनान्नम् । “स्वर्णरं स्वर्गे नेतव्या यजमाना यस्य तादृशम् । यद्वा स्वरिति सर्वपर्यायः । स्तुतीनां नेतारः स्तोतारः । बहुस्तोतारमित्यर्थः । “द्युक्षं

दीप्तं द्युनिवासिनं वा । "होतारं होमसंपादकम् । "वृजनेषु बलेषु “धूर्षदं बलस्य कर्तारमित्यर्थः । अग्निपाटवे सति शारीरं बलं भवतीति प्रसिद्धम् ॥

अ॒भि त्वा॒ नक्ती॑रु॒षसो॑ ववाशि॒रेऽग्ने॑ व॒त्सं न स्वस॑रेषु धे॒नवः॑ ।

दि॒व इ॒वेद॑र॒तिर्मानु॑षा यु॒गा क्षपो॑ भासि पुरुवार सं॒यतः॑ ॥२

अ॒भि । त्वा॒ । नक्तीः॑ । उ॒षसः॑ । व॒वा॒शि॒रे॒ । अग्ने॑ । व॒त्सम् । न । स्वस॑रेषु । धे॒नवः॑ ।

दि॒वःऽइ॑व । इत् । अ॒र॒तिः । मानु॑षा । यु॒गा । आ । क्षपः॑ । भा॒सि॒ । पु॒रु॒ऽवा॒र॒ । स॒म्ऽयतः॑ ॥२

अभि । त्वा । नक्तीः । उषसः । ववाशिरे । अग्ने । वत्सम् । न । स्वसरेषु । धेनवः ।

दिवःऽइव । इत् । अरतिः । मानुषा । युगा । आ । क्षपः । भासि । पुरुऽवार । सम्ऽयतः ॥२

हे “अग्ने “त्वा त्वां “अभि प्रति “नक्तीः रात्रीः "उषसः अहानि । सर्वासु रात्रिषु सर्वेष्वपि अहःसु । यद्वा नक्तशब्दः सायंकालं लक्षयति सायंप्रातरग्निहोत्रस्य सद्भावात् । सर्वेषु कालेषु सायंप्रातःकालेषु वा "ववाशिरे आकांक्षन्ते यजमाना यष्टुम् । यद्वा अहानि रात्रयश्च त्वामेव कामयन्ते होतुम् । काले कर्मणश्चोदनात् कालानां कामनमुपचर्यते । तत्र दृष्टान्तः । “स्वसरेषु स्वयंसरणशीलेष्वहःसु सुखसरणाधिकरणेषु गोष्ठेषु वा “धेनवः "वत्सं “न । वत्समिव । किंच हे “पुरुवार बहुभिर्वरणीयाग्ने “संयतः नियतस्त्वं “दिवइव द्युलोकस्येव “अरतिः। व्याप्तो विस्तृतः। तत्रत्यानां देवानां हविःप्रदानायैव सर्वत्र व्याप्त इत्यर्थः । “मानुषा मनुष्याणां यजमानानां संबन्धीनि “युगा युगानि । युगशब्दः

कालोपलक्षकः । प्रातरादिसवनानि । सर्वेषु सवनेषु ॥ अत्यन्तसंयोगे द्वितीया ॥ “क्षपः रात्रीः । सर्वासु रात्रिष्वपि “आ “भासि समन्ताद्दीप्यसे ।।

तं दे॒वा बु॒ध्ने रजं॑सः सु॒दंसं॑सं दि॒वस्पृं॑थि॒व्योरं॑र॒तिं न्यें॑रिरे ।

रथं॑मिव॒ वेद्यं॑ शु॒क्रशों॑चिषम॒ग्निं मि॒त्रं न क्षि॒तिषुं॑ प्र॒शंस्यं॑म् ॥ ३

तम् । दे॒वाः । बु॒ध्ने । रजं॑सः । सु॒ऽदंसं॑सम् । दि॒वःपृं॑थि॒व्योः । अ॒र॒तिम् । नि । ए॒रि॒रे॒ ।

रथं॑म्ऽइव । वेद्यं॑म् । शु॒क्रऽशों॑चिषम् । अ॒ग्निम् । मि॒त्रम् । न । क्षि॒तिषुं॑ । प्र॒ऽशंस्यं॑म् ॥३

तम् । देवाः । बुध्ने । रजसः । सुऽदंससम् । दिवःपृथिव्योः । अरतिम् । नि । एरिरे ।

रथम्ऽइव । वेद्यम् । शुक्रऽशोचिषम् । अग्निम् । मित्रम् । न । क्षितिषु । प्रऽशंस्यम् ॥३

“तं प्रसिद्धम् उक्तगुणविशिष्टमग्निं “देवाः प्रसिद्धा व्यवहर्तार ऋत्विजो वा “रजसः रञ्जनात्मकस्य लोकस्य “बुध्ने मूले । पृथिव्यां वेद्यामित्यर्थः । तत्र “न्येरिरे नितरामीरयन्ति । व्यापारयन्ति स्वस्वहविर्लाभाय । ऋत्विक्पक्षे स्तोत्रादिना नितरां गच्छन्ति भजन्ते । कीदृशमित्याह । “सुदंससं शोभनदर्शनं “दिवस्पृथिव्योः द्यावापृथिव्योः “अरतिम्। ईश्वरं गन्तारं व्याप्तं वा । “वेद्यम् । वेदो धनम् । तस्मै हितम् । “रथमिव । रथं यथा स्वाभिमतलाभाय आश्रयन्ते तद्वत् । यद्वा रथमिव प्राप्तिसाधनत्वेन वर्तमानं वेद्यं वेदितव्यम् । “शुक्रशोचिषं दीप्तवर्णम् “अग्निं "मित्रं "न सखिवत्कार्यसाधकम् । यद्वा आदित्यमिव । “क्षितिषु यागभूमिषु मनुष्येषु वा "प्रशंस्यं प्रकर्षेण स्तुत्यम् । एवं महानुभावमग्निं न्येरिर इति ॥

त॒मु॒क्षमा॑णं॒ रज॑सि॒ स्व आ दमे॑ च॒न्द्रमि॑व सु॒रुचं॑ ह्वा॒र आ द॑धुः ।

पृश्न्याः᳚ पत॒रं चि॒तय॑न्तम॒क्षभिः᳚ पा॒थो न पा॒युं जन॑सी उ॒भे अनु॑ ॥४

तम् । उ॒क्षमा॑णम् । रज॑सि । स्वे । आ । दमे॑ । च॒न्द्रम्ऽइ॑व । सु॒ऽरुच॑म् । ह्वा॒रे । आ । द॒धुः॒ ।

पृश्न्याः᳚ । प॒त॒रम् । चि॒तय॑न्तम् । अ॒क्षऽभिः᳚ । पा॒थः । न । पा॒युम् । जन॑सी॒ इति॑ । उ॒भे इति॑ । अनु॑ ॥४

तम् । उक्षमाणम् । रजसि । स्वे । आ । दमे । चन्द्रम्ऽइव । सुऽरुचम् । ह्वारे । आ । दधुः ।

पृश्न्याः । पतरम् । चितयन्तम् । अक्षऽभिः । पाथः । न । पायुम् । जनसी इति । उभे इति । अनु ॥४

“तं स्तुत्यतरं “रजसि अन्तरिक्षे “आ “उक्षमाणं सर्वतः सिञ्चन्तं वृष्टिजलं रजसि पृथिव्यां वेद्यां घृतादिना आसिच्यमानं वा। "स्वे स्वकीये "ह्वारे विजने “दमे यागगृहे "आ "दधुः आदधते । कीदृशं तम् । “चन्द्रमिव "सुरुचम् । चन्द्रमिति हिरण्यनाम। हिरण्यमिव शोभन1दीप्तिम् । पश्चात् प्रवृद्धावस्थायां “पृश्न्याः "पतरं द्युलोकस्यान्तरिक्षस्य गन्तारम् । “अक्षभिः स्वकीयैर्ज्वालारूपैरवयवैः “चितयन्तं चेतयमानम् । "पाथो “न "पायुम् । उदकमिव रक्षकम् । “उभे "जनसी सर्वस्य जनयित्र्यौ द्यावापृथिव्यौ "अनु व्याप्तम् । भूम्यां होमाधारत्वेन स्थित्वा हविष्प्रापणाय द्युलोकगामिनमिति भावः । एवंरूपमग्निमादधते ॥

स होता॒ विश्वं॒ परिं भूत्वध्व॒रं तमु॑ ह॒व्यैर्मनु॑ष ऋञ्जते गि॒रा ।

हि॒रि॒शि॒प्रो वृंधसा॒नासु॒ जर्भुं॒रद्द्यौर्न स्तृभिंश्चितय॒द्रोदंसी॒
अनुं ॥५

सः । होतां । विश्वंम् । परिं । भू॒तु॒ । अ॒ध्व॒रम् । तम् । ऊँ॒
इतिं । ह॒व्यैः । मनुंषः । ऋ॒ञ्ज॒ते॒ । गि॒रा ।

हि॒रि॒ऽशि॒प्रः । वृ॒ध॒सा॒नासुं । जर्भुंरत् । द्यौः । न । स्तृऽभिः॑
। चि॒त॒य॒त् । रोदंसी॒ इतिं । अनुं ॥५

सः । होता । विश्वम् । परि । भूतु । अध्वरम् । तम् । ऊं
इति । हव्यैः । मनुषः । ऋञ्जते । गिरा ।

हिरिऽशिप्रः । वृधसानासु । जर्भुरत् । द्यौः । न । स्तृऽभिः
। चितयत् । रोदसी इति । अनु ॥५

“सः अग्निः “होता होमनिष्पादकः सन् “विश्वं सर्वम्
“अध्वरं यागं “परि “भूतु परितो भवतु । “तमु तमेवाग्निं
“हव्यैः हविर्भिः “गिरा स्तुत्या च "मनुषः मनुष्याः “ऋञ्जते

प्रसाधयन्ति । ऋञ्जतिः प्रसाधनकर्मा । “हिरिशिप्रः हरणशीलहनुर्दीप्तोष्णीषो वा । ‘ शिप्राः शीर्षसु वितता हिरण्ययीः ' (ऋ. सं. ५. ५४. ११ ) इत्यादि मन्त्रान्तरात् । “वृधसानासु प्रवर्धमानास्वोषधीषु ज्वालासु वा “जर्भुरत् । पूर्यमाणो यज्ञं गन्ता । शत्रन्तं पदम् । यद्वा द्वितीयार्थे सप्तमी । वर्धमाना ओषधीर्जर्भुरत् पुनःपुनर्दहन्नित्यर्थः । “द्यौः द्युलोकान्तरिक्षं “स्तृभिः "न नक्षत्रैरिव “रोदसी “अनु द्यावापृथिव्यावनु “चितयत् चेतयति । ज्वालाभिर्विस्फुलिङ्गैश्च भुवमन्तरिक्षं च व्याप्नोतीत्यर्थः ॥ ॥ २० ॥

स नों रे॒वत्सं॑मिधा॒नः स्व॒स्तयें संदद॒स्वान्र॒यिम॒स्मासुं दीदिहि ।

आ नः॑ कृणुष्व सुवि॒ताय॒ रोदं॑सी॒ अग्ने॑ ह॒व्या मनुं॑षो देव वी॒तये॑ ॥६

सः । न॒ः । रे॒वत् । स॒म्ऽइ॒धा॒नः । स्व॒स्तये॑ । स॒म्ऽद॒द॒स्वान् । र॒यिम् । अ॒स्मासुं । दी॒दि॒हि॒ ।

आ । न॒ः । कृ॒णु॒ष्व॒ । सु॒वि॒तायं । रोदं॑सी॒ इतिं । अग्ने॑ । ह॒व्या । मनुं॑षः । दे॒व॒ । वी॒तये॑ ॥६

सः । नः । रेवत् । सम्ऽइधानः । स्वस्तये । सम्ऽददस्वान् । रयिम् । अस्मासु । दीदिहि ।

आ । नः । कृणुष्व । सुविताय । रोदसी इति । अग्ने । हव्या । मनुषः । देव । वीतये ॥६

हे अग्ने “सः तादृशस्त्वं “नः अस्माकं “स्वस्तये। स्वस्तीत्यविनाशनाम। क्षेमाय। “रेवत् रयिमत् “रयिं धनं उपर्युपरिवृद्धिमद्दानयोग्यं वा धनम् “अस्मासु “संददस्वान्

सम्यक् प्रयच्छन् “समिधानः अस्माभिः सम्यगिध्यमानः सन् “दीदिहि दीप्यस्व । यद्वा रेवदिति क्रियाविशेषणम्। रा धनं समृद्धिमद्यथा तथा दीप्यस्वेति । तथाभूतः सन् 'नः अस्मभ्यं “सुविताय सुहिताय शोभनफलाय “रोदसी द्यावापृथिव्यौ “आ “कृणुष्व सर्वतः कुरुष्व । उभौ लोकौ भोगप्रदौ कुर्वित्यर्थः । किमर्थमिति तदुच्यते । हे “देव “अग्ने “मनुषः मनुष्यस्य यजमानस्य मम संबन्धीनि “हव्या हवींषि “वीतये देवेभ्यो भक्षणाय । पुनःपुनर्यागाद्यनुष्ठानायेत्यर्थः ।

दा नों अग्ने बृह॒तो दाः स॑ह॒स्रिणों दु॒रो न वाज॒ं श्रुत्या॒ अपां वृधि ।

प्राची॒ द्यावा॑पृथि॒वी ब्रह्म॑णा कृधि॒ स्व१॒र्ण शु॒क्रमु॒षसो॒ वि दि॑द्युतः ॥७

दाः । नः॒ । अ॒ग्ने॒ । बृ॒ह॒तः । दाः । स॒ह॒स्रिणः॑ । दु॒रः । न । वाजंम् । श्रुत्यैं । अपं । वृ॒धि॒ ।

प्राची॒ इतिं । द्यावांपृथि॒वी इतिं । ब्रह्मंणा । कृ॒धि॒ । स्वः॑ । न । शु॒क्रम् । उ॒षसः॑ । वि । दि॒द्यु॒तः॒ ॥७

दाः । नः । अग्ने । बृहतः । दाः । सहस्रिणः । दुरः । न । वाजम् । श्रुत्यै । अप । वृधि ।

प्राची इति । द्यावापृथिवी इति । ब्रह्मणा । कृधि । स्वः । न । शुक्रम् । उषसः । वि । दिद्युतः ॥७

हे “अग्ने “नः अस्मभ्यं "बृहतः महतः प्रभूतान् गवाश्वादिधनविशेषान् “दाः देहि । तथा “सहस्रिणः सहस्रसंख्योपेतान् पुत्रभृत्यादीन् “दाः देहि॥ ददातेश्छान्दसे लुङि रूपम्। वाक्यभेदादनिघातः॥ “श्रुत्यै कीर्त्यै “वाजम् अन्नं “दुरो “न तस्य द्वाराण्यपि ।

नशब्दश्चार्थे। “अपा "वृधि अपवृणु । प्रेरयेत्यर्थः । यद्वा द्वाराणीव । तत्प्राप्त्युपायान् विशदयति । तदर्थं “द्यावापृथिवी “ब्रह्मणा परिवृढेन कर्मणा “प्राची प्रकृष्टाञ्चने अस्मदनुकूले “कृधि कुरु । “स्वर्ण आदित्य इव । स यथा जगत्प्रकाशयति तद्वत् । “शुक्रं दीप्तं त्वाम् “उषसः उषःकालाः “वि “दिद्युतुः विद्योतयन्ति । उषःकाले ह्यग्नयः प्रज्वाल्यन्ते ॥

स इंधा॒न उ॒षसो॒ राम्या॒ अनु॒ स्व१॒॑र्ण दीं॑देदरु॒षेणं भा॒नुनां ।

होत्रां॑भिर॒ग्निर्मनुं॑षः स्वध्व॒रो राजां वि॒शामतिं॑थि॒श्चारुं॑रा॒यवें ॥८

सः । इ॒धा॒नः । उ॒षसः॑ । राम्याः॑ । अनुं॑ । स्वः॑ । न । दी॒दे॒त् । अ॒रु॒षेणं । भा॒नुनां ।

होत्रा॑भिः । अ॒ग्निः । मनु॑षः । सु॒ऽअ॒ध्व॒रः । राजा॑ । वि॒शाम् । अति॑थिः । चारुः॑ । आ॒यवे॑ ॥८

सः । इधानः । उषसः । राम्याः । अनु । स्वः । न । दीदेत् । अरुषेण । भानुना ।

होत्राभिः । अग्निः । मनुषः । सुऽअध्वरः । राजा । विशाम् । अतिथिः । चारुः । आयवे ॥८

“सः अग्निः "राम्याः रमणहेतुभूताः “उषसः “अनु अनुलक्ष्य "इधानः इध्यमानो दीपितः सन् “अरुषेण रोचमानेन “भानुना तेजसा “स्वर्ण आदित्य इव “दीदेत् दीप्यते । सः “अग्निः “मनुषः मनुष्यस्य होतुः “होत्राभिः । होत्रेति वाङ्नाम । होमसाधनभूताभिः स्तुतिभिः स्तूयमानः “स्वध्वरः शोभनयागः "विशां प्रजानां “राजा राजमानः स्वामी “आयवे मनुष्याय यजमानाय तदर्थं “चारुः चरणशीलः “अतिथिः अतिथिवत्पूज्यो भवति ।

ए॒वा नों अग्ने अ॒मृतेंषु पूर्व्य॒ धीष्पींपाय बृ॒हद्दिंवेषु॒ मानुंषा ।

दुहांना धे॒नुर्वृ॒जनेंषु का॒रवे॒ त्मनां श॒तिनं पुरु॒रूपंमि॒षणिं ॥
९

ए॒व । न॒ः । अ॒ग्ने॒ । अ॒मृतेंषु । पू॒र्व्य॒ । धीः । पी॒पा॒य॒ ।
बृ॒हत्ऽदिंवेषु । मानुंषा ।

दुहांना । धे॒नुः । वृ॒जनेंषु । का॒रवें । त्मनां । श॒तिनंम् ।
पु॒रु॒ऽरूपंम् । इ॒षणिं ॥९

एव । नः । अग्ने । अमृतेषु । पूर्व्य । धीः । पीपाय ।
बृहत्ऽदिवेषु । मानुषा ।

दुहाना । धेनुः । वृजनेषु । कारवे । त्मना । शतिनम् ।
पुरुऽरूपम् । इषणि ॥९

"बृहद्दिवेषु प्रभूतद्युतिषु "अमृतेषु देवेषु मध्ये हे “पूर्व्य पूर्वभाविन् “अग्ने त्वां “मानुषा मनुष्याणां मध्ये "नः अस्मदीया “धीः बुद्धिः स्तुतिः कर्म वा “एव एवं “पीपाय प्याययति । यद्वा मानुषा। मनुष्यान धीस्त्वदीया बुद्धिः कर्म वा प्याययतु । तथा त्वदीया धीः "वृजनेषु यज्ञेषु “कारवे स्तोत्रे “दुहाना “धेनुः । दोग्ध्रीपग धेनुरिव । लुप्तोपममेतत् । “त्मना आत्मनैव "इषणि एषणायां सत्यां “शतिनम् अपरिमितसंख्याकं “पुरुरूपं गवाश्वादिरूपेण नानारूपं धनसमूहं दुहाना भवति ॥

व॒यम॑ग्ने॒ अर्व॑ता वा सु॒वीर्यं॒ ब्रह्म॑णा वा चितयेमा॒ जना॒ँ अति॑
।

अ॒स्माकं॑ द्यु॒म्नमधि॒ पञ्च॑ कृ॒ष्टिषू॒च्चा स्व१॒र्ण शु॑शुचीत दु॒ष्टर॑म् ॥१०

व॒यम् । अ॒ग्ने॒ । अर्व॑ता । वा॒ । सु॒ऽवीर्य॑म् । ब्रह्म॑णा । वा॒ । चि॒त॒ये॒म॒ । जना॑न् । अति॑ ।

अ॒स्माक॑म् । द्यु॒म्नम् । अधि॑ । पञ्च॑ । कृ॒ष्टिषु॑ । उ॒च्चा । स्व॑ः । न । शु॒शु॒ची॒त॒ । दु॒स्तर॑म् ॥१०

वयम् । अग्ने । अर्वता । वा । सुऽवीर्यम् । ब्रह्मणा । वा । चितयेम । जनान् । अति ।

अस्माकम् । द्युम्नम् । अधि । पञ्च । कृष्टिषु । उच्चा । स्वः । न । शुशुचीत । दुस्तरम् ॥१०

हे “अग्ने “वयं यजमानाः “सुवीर्यं शोभनसामर्थ्योपेतं यथा तथा “अर्वता “वा अरणकुशलेनाश्वेन । वाशब्दश्चार्थे । “ब्रह्मणा “वा अन्नेन च त्वद्दत्तेन “जनान् अस्मत्समानान् “अति “चितयेम अतिक्रम्य ज्ञायेमहि । कर्मणि कर्तृप्रत्ययः । यद्वा त्वद्दत्तेनाश्वेनान्नेन च सुवीर्यं चितयेम प्रकाशयेम ।

तदर्थम् “अस्माकं “पञ्च पञ्चसु “कृष्टिषु जनेषु निषादपञ्चमेषु चतुर्षु वर्णेषु "उच्चा उच्चैरतिप्रभूतं “दुस्तरम् अन्येनाप्राप्तं "द्युम्नं धनं “स्वर्ण सूर्य इवाधिकं “शुशुचीत दीप्यताम् । अधीत्ययमनर्थको वा ।

स नों बोधि सहस्य प्र॒शंस्यो॒ यस्मिं॑न्सुजा॒ता इ॒षयं॑न्त सू॒रयः॑ ।

यमं॑ग्ने य॒ज्ञमुं॑प॒यन्तिं॑ वा॒जिनो॒ नित्यें॑ तो॒के दीं॑दि॒वांसं॒ स्वे दमें ॥११

सः । न॒: । बो॒धि॒ । स॒ह॒स्य॒ । प्र॒ऽशंस्यः॑ । यस्मिं॑न् । सु॒ऽजा॒ताः । इ॒षयं॑न्त । सू॒रयः॑ ।

यम् । अ॒ग्ने॒ । य॒ज्ञम् । उ॒प॒ऽयन्तिं॑ । वा॒जिनः॑ । नित्यें॑ । तो॒के । दी॒दि॒ऽवांसं॑म् । स्वे । दमें ॥११

सः । नः । बोधि । सहस्य । प्रऽशंस्यः । यस्मिन् । सुऽजाताः । इषयन्त । सूरयः ।

यम् । अग्ने । यज्ञम् । उपऽयन्ति । वाजिनः । नित्ये । तोके । दीदिऽवांसम् । स्वे । दमे ॥११

हे अग्ने “सहस्य शत्रूणामभिभवितर्बलप्रभव वा “प्रशंस्यः स्तुत्यः “सः त्वं “नः अस्मदीयं स्तोत्रादिकं "बोधि बुध्यस्व । स इत्युक्तं क इत्याह । “यस्मिन् अग्नौ “सुजाताः शोभनजननाः “सूरयः स्तोतार ऋत्विजः “इषयन्त गमयन्ति स्तोत्राणि । किंच हे “अग्ने “यज्ञं यजनीयं “यं “वाजिनः हविर्लक्षणान्नवन्तो यजमानाः “नित्ये “तोके औरसे पुत्रे निमित्तभूते सति । यद्वा । तस्मिन् यथा दीप्यते । पुत्रगृहे यथा पिता दीप्यते तद्वत् "स्वे "दमे स्वकीये यागगृहे सवनीयादिस्थाने “दीदिवांसं दीप्यमानम् “उपयन्ति हविःस्तोत्रादिना । स बोधि इत्यन्वयः ॥

उ॒भया॑सो जातवे॑दः स्याम ते स्तो॒तारो॑ अग्ने सू॒रय॑श्च॒ शर्म॑णि ।

वस्वो॑ रा॒यः पु॑रुश्च॒न्द्रस्य॒ भूय॑सः प्र॒जाव॑तः स्वप॒त्यस्य॑ शग्धि नः ॥१२

उ॒भया॑सः । जा॒त॒ऽवे॒दः॒ । स्या॒म॒ । ते॒ । स्तो॒तारः॑ । अ॒ग्ने॒ । सू॒रयः॑ । च॒ । शर्म॑णि ।

वस्वः॑ । रा॒यः । पु॒रु॒ऽच॒न्द्रस्य॑ । भूय॑सः । प्र॒जाऽव॑तः । सु॒ऽअ॒प॒त्यस्य॑ । श॒ग्धि॒ । नः॒ ॥१२

उभयासः । जातऽवेदः । स्याम । ते । स्तोतारः । अग्ने । सूरयः । च । शर्मणि ।

वस्वः । रायः । पुरुऽचन्द्रस्य । भूयसः । प्रजाऽवतः । सुऽअपत्यस्य । शग्धि । नः ॥१२

हे “जातवेदः जातानां वेदितः “अग्ने "स्तोतारः त्वां स्तुवन्त ऋत्विजः “सूरयः मेधाविनो यजमानाः “च इति “उभयासः उभये वयं “शर्मणि सुखे निमित्तभूते सति “ते त्वत्संबन्धिनः “स्याम भवेम । यद्वा । ते शर्मणि स्याम । त्वं च नः अस्माकं “वस्वः निवासहेतोर्वसिष्ठस्य “रायः गवादिधनस्य “पुरुश्चन्द्रस्य अतिशयेनाह्लादकस्य बहुहिरण्योपेतस्य वा “भूयसः प्रभूतस्य “प्रजावतः भृत्याद्युपेतस्य पुत्रादिभोगपर्याप्तस्य वा “स्वपत्यस्य शोभनपुत्रस्य । ईदृग्रूपं धनं “नः अस्मभ्यं “शग्धि देहि। दातुं शक्तो भवसि ॥

ये स्तो॒तृभ्यो॒ गोअं॑ग्रा॒मश्वं॑पेशस॒मग्ने॑ रा॒तिमु॑पसृ॒जन्ति॑ सू॒रयः॑ ।

अ॒स्माञ्च॒ ताँश्च॒ प्र हि नेषि॒ वस्य॒ आ बृ॒हद्वंदेम वि॒दथें सु॒वीरा॑ः ॥१३

ये । स्तो॒तृऽभ्य॑ः । गोऽअंग्राम् । अश्वंऽपेशसम् । अग्नें । रा॒तिम् । उ॒प॒ऽसृ॒जन्तिं । सू॒रय॑ः ।

अ॒स्मान् । च॒ । तान् । च॒ । प्र । हि । नेषिं । वस्य॑ः । आ । बृ॒हत् । व॒दे॒म॒ । वि॒दथें । सु॒ऽवीरा॑ः ॥१३

ये । स्तोतृऽभ्यः । गोऽअग्राम् । अश्वऽपेशसम् । अग्ने । रातिम् । उपऽसृजन्ति । सूरयः ।

अस्मान् । च । तान् । च । प्र । हि । नेषि । वस्यः । आ । बृहत् । वदेम । विदथे । सुऽवीराः ॥१३

‘ ये स्तोतृभ्यः' इति त्रयोदशी व्याख्याता ॥ ॥ २१ ॥

# ऋग्वेदः सूक्तं २.३

ऋग्वेदः - मण्डल २

← सूक्तं २.२

सूक्तं २.३

गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः

सूक्तं २.४ →

दे. आप्रीसूक्तं (१ इध्मः समिद्धोऽग्निर्वा, २ तनूनपात्, ३ इळः, ४ बर्हिः, ५ देवीर्द्वारः, ६ उषासानक्ता, ७ दैव्यौ होतारौ प्रचेतसौ, ८ तिस्रो देव्यः सरस्वतीळाभारत्यः, ९ त्वष्टा, १० वनस्पतिः, ११ स्वाहाकृतयः )।त्रिष्टुप्, ७ जगती

---

समिद्धो अग्निर्निहितः पृथिव्यां प्रत्यङ्विश्वानि भुवनान्यस्थात् ।

होता पावकः प्रदिवः सुमेधा देवो देवान्यजत्वग्निरर्हन् ॥१॥

नराशंसः प्रति धामान्यञ्जन्तिस्रो दिवः प्रति मह्ना स्वर्चिः ।

घृतप्रुषा मनसा हव्यमुन्दन्मूर्धन्यज्ञस्य समनक्तु देवान् ॥२॥

ईळितो अग्ने मनसा नो अर्हन्देवान्यक्षि मानुषात्पूर्वो अद्य ।

स आ वह मरुतां शर्धो अच्युतमिन्द्रं नरो बर्हिषदं यजध्वम् ॥३॥

देव बर्हिर्वर्धमानं सुवीरं स्तीर्णं राये सुभरं वेद्यस्याम् ।

घृतेनाक्तं वसवः सीदतेदं विश्वे देवा आदित्या यज्ञियासः ॥४॥

वि श्रयन्तामुर्विया हूयमाना द्वारो देवीः सुप्रायणा नमोभिः ।

व्यचस्वतीर्वि प्रथन्तामजुर्या वर्णं पुनाना यशसं सुवीरम् ॥५॥

साध्वपांसि सनता न उक्षिते उषासानक्ता वय्येव रण्विते ।

तन्तुं ततं संवयन्ती समीची यज्ञस्य पेशः सुदुघे पयस्वती ॥६॥

दैव्या होतारा प्रथमा विदुष्टर ऋजु यक्षतः समृचा वपुष्टरा ।

देवान्यजन्तावृतुथा समञ्जतो नाभा पृथिव्या अधि सानुषु त्रिषु ॥७॥

सरस्वती साधयन्ती धियं न इळा देवी भारती विश्वतूर्तिः ।

तिस्रो देवीः स्वधया बर्हिरेदमच्छिद्रं पान्तु शरणं निषद्य ॥८॥

पिशङ्गरूपः सुभरो वयोधाः श्रुष्टी वीरो जायते देवकामः ।

प्रजां त्वष्टा वि ष्यतु नाभिमस्मे अथा देवानामप्येतु पाथः ॥९॥

वनस्पतिरवसृजन्नुप स्थादग्निर्हविः सूदयाति प्र धीभिः ।

त्रिधा समक्तं नयतु प्रजानन्देवेभ्यो दैव्यः शमितोप हव्यम् ॥१०॥

घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ।

अनुष्वधमा वह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥११॥

## सायणभाष्यम्

' समिद्धो अग्निः ' इत्येकादशर्चं तृतीयं सूक्तं गार्त्समदं त्रैष्टुभम् । सप्तमी जगती । समिद्धोऽग्निरग्निना नराशंसतनूनपादादय एकादश प्रयाजदेवताः । ' समिद्ध एकादशाप्रं सप्तमी जगती ' इत्यनुक्रमणिका । पशौ शुनकानामिदमाप्रीसूक्तम् । गृत्समदस्यापि शुनकत्वात् । '

समिद्धो अग्निरिति शुनकानाम्' ( आश्व. श्रौ. ३.२) इति हि सूत्रितम् ।

समिंद्धो अ॒ग्निर्निहिंतः पृथि॒व्यां प्र॒त्यङ्विश्वांनि॒ भुवंनान्यस्थात् ।

होतां पाव॒कः प्र॒दिवः॑ सुमे॒धा दे॒वो दे॒वान्यंजत्व॒ग्निरर्हंन् ॥१

सम्ऽइंद्धः । अ॒ग्निः । निऽहिंतः । पृ॒थि॒व्याम् । प्र॒त्यङ् । विश्वांनि । भुवंनानि । अ॒स्था॒त् ।

होतां । पा॒व॒कः । प्र॒ऽदिवः॑ । सु॒ऽमे॒धाः । दे॒वः । दे॒वान् । य॒ज॒तु॒ । अ॒ग्निः । अर्हंन् ॥१

संऽइद्धः । अग्निः । निऽहितः। पृथिव्यां। प्रत्यङ्। विश्वानि। भुवनानि। अस्थात् ।

होता। पावकः । प्रऽदिवः। सुऽमेधाः । देवः । देवान् यजतु । अग्निः । अर्हन् ॥१॥

पृथिव्यां वेदिलक्षणायां समिद्धः सम्यक्दीप्तः एतन्नामकोग्निः निहितः स्थापितः सन् विश्वानि सर्वाणि भुवनानि भूतजातानि प्रत्यङ् अभिमुखः सन् अस्थात् तिष्ठति यथा सर्वे जनाः पश्यन्ति तथा प्रवृद्धोभवदित्यर्थः किञ्च सोग्निर्होता होमनिष्पादको देवानामाह्वाता वा पावकः शोधकः प्रदिवः पुराणः सुमेधाः शोभनप्रज्ञो देवो द्योतमानः एवं महानुभावोग्निः अर्हन् यागयोग्यः सन् देवान्यजतु अत्र यष्टव्यानिन्द्रादीन्पूजयतु ॥ १ ॥

नरा॒शंस॒ः प्रति॒ धामा॑न्य॒ञ्जन्ति॒स्रो दिव॒ः प्रति॑ म॒ह्ना स्व॒र्चिः ।

घृ॒त॒प्रुषा॒ मन॑सा ह॒व्यमु॒न्दन्मू॒र्धन्य॒ज्ञस्य॒ सम॑नक्तु दे॒वान् ॥२

नरा॒शंसः॑ । प्रति॑ । धामा॑नि । अ॒ञ्जन् । ति॒स्रः । दिवः॑ । प्रति॑ । म॒ह्ना । सु॒ऽअ॒र्चिः ।

घृ॒त॒ऽप्रुषा॑ । मन॑सा । ह॒व्यम् । उ॒न्दन् । मू॒र्धन् । य॒ज्ञस्य॑ । सम् । अ॒न॒क्तु॒ । दे॒वान् ॥२

नराशंसः। प्रतिं । धामानि । अंजन्। तिस्रः। दिवः। प्रति । मह्ना। सुऽअर्चिः।

घृतऽप्रुषा। मनसा। हव्यं । उंदन् । मूर्धन् । यज्ञस्य । सं । अनक्तु । देवान् ॥२॥

नराशंसः नरैर्नेतृभिर्ऋत्विग्भिः शंसनीय एतन्नामकोग्निः स्वर्चिः शोभनज्वालः सन् धामानि स्थानानि आहुत्यधिकरणानि तेजांसि प्रति प्रत्येकं मह्ना स्वमहिम्ना अञ्जन् व्यक्तीकुर्वन् तिस्रो दिवः द्योतमानांस्त्रीन्भूम्यादिलोकांश्च प्रति प्रत्येकमञ्जन्

स्थित्या भूमिं प्रकाशेनान्तरिक्षं हविः प्रापणे न दिवमित्यभिप्रायः यद्वा लोकानां प्रत्येकं त्रित्वोपेतत्वात् तिस्रो दिव इत्यविरुद्धं तिस्रो दिवः पृथिवीस्तिस्र इत्यादि मन्त्रवर्णात । त्रयो वा इमे त्रिवृतो लोका इति ब्राह्मणाच्च । तथा घृतप्रुषा घृतंसिञ्चता मनसा हव्यं उन्दन् क्लेदयन् स्निग्धीकुर्वन् यज्ञस्य मूर्धन् मूर्धनि मुखे होमसमये देवान्यष्टव्यान् समनक्तु सम्यक् व्यक्तीकरोतु तर्पयत्वित्यर्थः ॥ २ ॥

ई॒ळि॒तो अ॑ग्ने॒ मन॑सा नो॒ अर्ह॑न्दे॒वान्य॑क्षि॒ मानु॑षा॒त्पूर्वो॑ अ॒द्य ।

स आ व॑ह म॒रुतां॒ शर्धो॒ अच्यु॑त॒मिन्द्रं॑ नरो बर्हि॒षदं॑ यजध्वम् ॥३

ई॒ळि॒तः । अ॒ग्ने॒ । मन॑सा । नः॒ । अर्ह॑न् । दे॒वान् । य॒क्षि॒ । मानु॑षात् । पूर्वः॑ । अ॒द्य ।

सः । आ । व॒ह॒ । म॒रुता॑म् । शर्धः॑ । अच्यु॑तम् । इन्द्र॑म् । न॒रः॒ । ब॒र्हि॒ऽसद॑म् । य॒ज॒ध्व॒म् ॥३

ईळितः । अग्ने। मनसा। नः । अर्हन्। देवान् । यक्षि । मानुषात् । पूर्वः। अद्य।

सः । आ। वह । मरुतां । शर्धः। अच्युतं । इंद्रं। नरः । बर्हिऽसदं। यजध्वं ॥३॥

हे अग्ने ईळितोस्माभिः स्तुतः सन् मनसा स्मदनुरक्तेन देवानां यागबुद्या वा अर्हन यागयोग्यः सन् मानुषाद्धोतुः पूर्वः पूर्वभावी नो स्मदर्थमद्यास्मिन्दिने देवान्यष्टव्यान्यक्षि त्वमेव यजसि स तादृशो यष्टा त्वमावह आकारय कान् मरुतां शर्धोगणं अच्युतमक्षीणमिन्द्रं तदविंनाभूतमिन्द्रमपि

यद्वा मरुद्बलोपेतमिन्द्रं अनन्तरं हे नरो नेतार ऋत्विजः बर्हिषदं बर्हिषि सीदन्तं तमिन्द्रं यजध्वं पूजयध्वम् ॥ ३ ॥

देवं बर्हिर्वर्धमानं सुवीरं स्तीर्णं राये सुभरं वेद्यस्याम् ।

घृतेनाक्तं वसवः सीदतेदं विश्वें देवा आदित्या यज्ञियांसः ॥ ४

देवं । बर्हिः । वर्धमानम् । सुऽवीरम् । स्तीर्णम् । राये । सुऽभरम् । वेदी इति । अस्याम् ।

घृतेन । अक्तम् । वसवः । सीदत । इदम् । विश्वे । देवाः । आदित्याः । यज्ञियासः ॥४

देव। बर्हिः। वर्धमानं । सुऽवीरं। स्तीर्णं। राये । सुऽभरं। वेदी इति । अस्यां । घृतेन । अक्तं । वसवः । सीदत । इदं । विश्वे । देवाः । आदित्याः । यज्ञियासः ॥ ४॥

हे बर्हिः देव एतदभिमानिन्नग्ने वर्धमानं सुवीरं शोभन वीरसंपादकं सुभरं सुपूर्णंस्तीर्णं अस्मदीयैर्ऋत्विग्भिरास्तृतं भव किमर्थं राये धनाय अस्यां वेदी वेद्यां सप्तम्यर्थे प्रगृह्यसंज्ञा संहितायां यणादेशश्छान्दसः घृतेनाज्येनाक्तमिदं स्निग्धं बर्हिः सीदत के हे वसवः एतन्नामकाः हे विश्वे सर्वे देवाः हे आदित्याः यज्ञियासो यज्ञार्हास्ते यूयमिदं बर्हिः सीदत अस्मिन्बर्हिषि निषीदतेत्यर्थः॥४॥

वि श्रंयन्तामुर्वि॒या हू॒यमा॑ना॒ द्वारो॑ दे॒वीः सु॑प्राय॒णा नमो॑भिः ।

व्यचं॑स्वती॒र्वि प्रं॑थन्तामजु॒र्या वर्णं॑ पुना॒ना य॒शसं॑ सु॒वीरं॑म् ॥५

वि । श्र॑यन्ताम् । उ॒र्वि॒या । हू॒यमा॑नाः । द्वारः॑ । दे॒वीः ।
सु॒प्र॒ऽअ॒य॒नाः । नमः॑ऽभिः ।

व्यच॑स्वतीः । वि । प्र॒थ॒न्ता॒म् । अ॒जु॒र्याः । वर्ण॑म् । पु॒ना॒नाः
। य॒शस॑म् । सु॒ऽवीर॑म् ॥५

वि । श्रयंतां । उर्विया । हूयमानाः । द्वारः । देवीः।
सुप्रऽअयनाः। नमःऽभिः।

व्यचस्वतीः। वि। प्रथंतां । अजुर्याः । वर्णं। पुनानाः ।
यशसं। सुऽवीरं ॥५॥

द्वारोदेवीः अग्नेर्द्वाराभिमानिन्यो देव्यो विश्रयन्तां
विविच्यश्रयन्तां विवृतापिधाना भवन्तु कीदृशस्ताः उर्विया
उर्व्यः महत्यः नमोभिर्नमस्कारोपेतैः स्तोत्रैर्हूयमानाः
सुप्रायणाः सुष्ठु प्रकर्षेण गन्तव्याः ईदृश्यो देव्यो विश्रयन्तां
किञ्च व्यचस्वतीः व्याप्तिमत्यः अजुर्याः अहिंस्याः

अजननावा सुवीरं शोभनपुत्राद्युपेतं यशसं यशोयुक्तं वर्णं वर्णनीयं रूपविशेषं पुनानाः यजमानाय शोधयित्र्यः संपादयित्र्यो देव्यो विप्रथन्तां विशेषेण प्रख्याता भवन्तु ॥ ५ ॥

सा॒ध्वपां॑सि स॒नतां॑ न उक्षि॒ते उ॒षासा॒नक्तां॑ व॒य्ये॑व रण्वि॒ते ।

तन्तुं॑ त॒तं सं॒वयं॑न्ती समी॒ची य॒ज्ञस्य॒ पेशः॑ सु॒दुघे॒ पयं॑स्वती ॥ ६

सा॒धु । अपां॑सि । स॒नतां॑ । नः॒ । उ॒क्षि॒ते इति॑ । उ॒षसा॒नक्तां॑ । व॒य्यां॑ऽइव । र॒ण्वि॒ते इति॑ ।

तन्तुं॑म् । त॒तम् । सं॒वयं॑न्ती॒ इति॑ स॒म्ऽवयं॑न्ती । स॒मी॒ची इति॑ स॒म्ऽई॒ची । य॒ज्ञस्यं॑ । पेशः॑ । सु॒दुघे॒ इति॑ सु॒ऽदुघें॑ । पयं॑स्वती॒ इति॑ ॥६

साधु । अपांसि। सनता। नः। उक्षिते इति। उषसानक्ता। वय्याऽइव । रण्विते इति।

तंतुं । ततं । संवयंती इति संऽवयंती । समीची इति संऽईची। यज्ञस्य । पेशः । सुदुघे इति सुऽदुघे । पयस्वती इति ॥६॥

साधु साधूनि नोस्मदीयानि अपांसि कर्माणि उद्दिश्य सनता सनातनेन अविच्छिन्न प्रवृत्तिकेन स्तोत्रादिना उक्षिते पूजिते यद्वा पुराणवाची विभक्तयन्तः सनच्छब्दोस्ति तस्य प्रथमाद्धिवचनस्याकारः सनातने नित्ये इत्यर्थः अस्मिन्पक्षे उक्षिते फलस्य सेचयित्र्यौ कर्तरिनिष्ठा उषासानक्ता अहोरात्रदेवते वय्या इव कुशले इव रण्विते शब्दिते स्तुते परस्परं गच्छन्त्यौ वा ततं विस्तृतं तन्तुं तन्तुस्थानीयं यज्ञावयवं संवयन्ती सम्यक् चित्रं सहवा वयन्त्यौ उत्पादयित्र्यौ समीची सम्यक्प्रवृतिके,

परस्परानुकूले किमर्थं संवयन्ती यज्ञस्यानुष्ठीयमानस्य पेशो रूपं निमातुमिति शेषः यज्ञं निवर्तयितुं तदवयवानुक्रमेणानुष्ठापयित्र्यावित्यर्थः अहोरात्राभ्यां हि यज्ञास्तन्यन्ते सुदुघे सुष्ठु फलस्य दोग्ध्र्यौ पयस्वती उदकवत्यौ अहोरात्राभ्यां खलु वृष्टिर्जायते एवं महानुभावे अहोरात्रदेवते अस्मद्यज्ञं निर्वहतामित्यर्थः ॥ ६ ॥

दैव्या॒ होता॑रा प्रथ॒मा वि॒दुष्ट॑र ऋ॒जु य॑क्षत॒ः समृ॒चा व॒पुष्ट॑रा ।

दे॒वान्यज॑न्तावृतु॒था सम॑ञ्जतो॒ नाभा॑ पृथि॒व्या अधि॒ सानु॑षु त्रि॒षु ॥७

दैव्या॑ । होता॑रा । प्र॒थ॒मा । वि॒दुःऽत॑रा । ऋ॒जु । य॒क्ष॒त॒ः । सम् । ऋ॒चा । व॒पुःऽत॑रा ।

दे॒वान् । यजं॑न्तौ । ऋ॒तु॒ऽथा । सम् । अ॒ञ्ज॒त॒ः । नाभा॑ । पृ॒थि॒व्याः । अधि॑ । सानु॑षु । त्रि॒षु ॥७

दैव्या। होतारा। प्रथमा। विदुःऽतरा। ऋजु । यक्षतः । सं । ऋचा । वपुःऽतरा।

देवान्। यजंतौ।ऋतुऽथा।सं। अंजतः। नाभा। पृथिव्याः। अधि। सानुषु। त्रिषु ॥७॥

दैव्या दिविभवो दिव्योग्निः तस्माद्दिव्यादग्नेर्जातौ होतारा आह्वातारौ देवानां होमनिष्पादकौवाग्नी पार्थिवान्तरिक्ष्यौ प्रथमा प्रथमं यष्टव्यौ विदुष्टरा विद्वत्तमौ वपुष्टरा प्रकृष्टवपुषौ देवावृचा मन्त्रेण ऋजु अविकलं यथा तथा सम्यक्यक्षतः पूजयतः ऋतुथा तत्तदृतौ तत्र तत्र काले देवान् यष्टव्यान्यजन्तौ देवौ पृथिव्याः नाभा नाभौ उत्तरवेद्या अधि उपरि त्रिषु सानुषु समुच्छ्रितेषु प्रदेशेषु

गार्हपत्यादिषु समञ्जतः समांक्तां अञ्जतेर्लेटयडागमः ॥ ७ ॥

सरंस्वती सा॒धयंन्ती॒ धियं॑ न॒ इळां॑ दे॒वी भारंती वि॒श्वतूं॑र्तिः ।

ति॒स्रो दे॒वीः स्व॒धयां ब॒र्हिरेदमच्छिं॑द्रं पान्तु शर॒णं नि॒षद्यं॑ ॥ ८

सरंस्वती । सा॒धयंन्ती । धियंम् । न॒ः । इळां । दे॒वी । भारंती । वि॒श्वऽतूं॑र्तिः ।

ति॒स्रः । दे॒वीः । स्व॒धयां । ब॒र्हिः । आ । इ॒दम् । अच्छिं॑द्रम् । पा॒न्तु॒ । श॒र॒णम् । नि॒ऽसद्यं॑ ॥८

सरस्वती । साधयंती । धियं । नः । इळा । देवी। भारती। विश्वऽतूर्तिः ।

तिस्रः। देवीः । स्वधया । बर्हिः। आ। इदं। अच्छिद्रं । पांतु । शरणं । निऽसद्य ॥८॥

नोस्मदीयां धियं बुद्धिं यागं वा साधयन्ती निवर्तयन्ती सरस्वती इळा एतन्नामिका देवी भारती च विश्वतूर्तिर्विश्वानि तूर्णानि यस्याः सा तादृशी सर्वविषयगता वाक् एतदुभयविशेषणं तिस्रोदेवीः एतास्तिस्रोदेव्यः स्वधया अस्मद्दत्तहविषा निमित्तेनेदं बर्हिर्यज्ञं अच्छिद्रं यथा तथा पान्तु किं कृत्वा शरणं यागगृहं आानिषद्य अाश्रित्य यद्वा स्वधयेदं बर्हिरिमं यज्ञमागत्यास्मदीयं शरणं गृहं निषद्याच्छिद्रं यथा तथा पान्तु ॥ ८ ॥

अथ पिशङ्गरूप इति नवमी त्वाष्ट्रेपशौ पुरोडाशस्य याज्या पिशङ्गरूपः सुभरो वयोधाः प्रथमभाजं यशसं वयोधामिति सूत्रितत्वात् ।

पि॒शङ्ग॑रूपः सु॒भरो॑ वयो॒धाः श्रु॒ष्टी वी॒रो जा॑यते दे॒वका॑मः ।

प्र॒जां त्वष्टा॒ वि ष्यं॑तु॒ नाभिं॑म॒स्मे अथा॑ दे॒वाना॒मप्ये॑तु॒ पाथः॑
॥९

पि॒शङ्ग॑ऽरूपः । सु॒ऽभरः॑ । व॒यः॒ऽधाः । श्रु॒ष्टी । वी॒रः ।
जा॒य॒ते॒ । दे॒वऽका॑मः ।

प्र॒ऽजाम् । त्वष्टा॑ । वि । स्य॒तु॒ । नाभि॑म् । अ॒स्मे इति॑ ।
अथ॑ । दे॒वाना॑म् । अपि॑ । ए॒तु॒ । पाथः॑ ॥९

पिशंगऽरूपः । सुऽभरः। वयः ऽधाः । श्रुष्टी । वीरः।
जायते । देवऽकामः ।

प्रजां। त्वष्टा । वि। स्यतु। नाभिं । अस्मे इति । अथ ।
देवानां । अपि। एतु। पाथः॥९॥

पिशङ्गरूपः सुवर्णवर्णः नानारूपो वा सुभरः शोभनयज्ञः शोभनभरणो वा वयोधा वयसोन्नस्य धारयिता दाता वा श्रुष्टी क्षिप्रगुणः वीरो विविधमीरयिता देवकामः देवाः काम्यन्ते येन तादृशः पुत्रो जायते जायतामुत्पाद्यतां त्वष्टुरनुग्रहात् स च त्वष्टा एतनामको देवो स्मेस्मभ्यं नाभिं कुलस्यबन्धिकां प्रजां पुत्रादिरूपां विष्यतु विमुञ्चतु वितरत्वित्यर्थः अथ अपि च देवानां संबन्धि पाथोन्नमप्यस्मानेतु गच्छतु अपिःक्रियया वा संबध्यते गच्छत्वित्यर्थः ॥ ९ ॥

वन॒स्पति॑रवसृ॒जन्नुप॑ स्थाद॒ग्निर्ह॒विः सू॑दयाति॒ प्र धी॒भिः ।

त्रिधा॒ सम॑क्तं नयतु प्रजा॒नन्दे॒वेभ्यो॒ दैव्य॑ः शमि॒तोप॑ ह॒व्यम्
॥१०

वन॒स्पतिः॑ । अ॒व॒ऽसृ॒जन् । उप॑ । स्था॒त् । अ॒ग्निः । ह॒विः । सू॒द॒या॒ति॒ । प्र । धी॒भिः ।

त्रिधा॑ । सम्ऽअं॑क्तम् । न॒य॒तु॒ । प्र॒ऽजा॒नन् । दे॒वेभ्यः॑ । दैव्यः॑ । श॒मि॒ता । उप॑ । ह॒व्यम् ॥१०

वनस्पतिः । अवऽसृजन्। उप। स्थात् । अग्निः। हविः । सूदयाति । प्र। धीभिः।।

त्रिधा। संऽअक्तं । नयतु । प्रऽजानन् । देवेभ्यः। दैव्यः । शमिता । उप। हव्यं॥१०॥

वनस्पति यूपाभिमानी एतन्नामकोग्निः अवसृजन् अस्मदीयकर्मानुजानन् उपास्मत्समीपे स्थात्तिष्ठतु अग्निः पाकाधारोग्निश्च हविः पशुरुपं धीभिः कर्मविशेषैःपाकसाधनैः प्र प्रकर्षेण सूदयाति क्षारयति अपाकाधिकपाकादिराहित्येन हविः पचतीत्यर्थः किञ्च

दैव्यौ देवसंबन्धीआहुत्यधिकरणभूतोग्निः शमिता हविषः संस्कर्ता यद्वा दैव्यः शमिता एतन्नामकोग्निः अग्निर्वै देवानां शमितेति श्रूयते । त्रिधा त्रिप्रकारं उपस्तरणावदानाभिघारणैः समक्तं सम्यक्सिक्तं हव्यं हविः प्रजानन् विद्वान्नयनप्रकाराभिज्ञः सन् देवेभ्य उपनयतु समीपं प्रापयतु ॥ १० ॥

घृ॒तं मि॑मिक्षे घृ॒तम॑स्य॒ योनि॑र्घृ॒ते श्रि॒तो घृ॒तम्व॑स्य॒ धाम॑ ।

अ॒नु॒ष्व॒धमा व॑ह मा॒दय॑स्व॒ स्वाहा॑कृतं वृषभ वक्षि ह॒व्यम् ॥ ११

घृ॒तम् । मि॒मि॒क्षे॒ । घृ॒तम् । अ॒स्य॒ । योनिः॑ । घृ॒ते । श्रि॒तः । घृ॒तम् । ऊं॒ इति॑ । अ॒स्य॒ । धाम॑ ।

अ॒नु॒ऽस्व॒धम् । आ । व॒ह॒ । मा॒दयंस्व । स्वाहांऽकृतम् ।
वृ॒ष॒भ॒ । व॒क्षि॒ । ह॒व्यम् ॥११

घृतं । मिमिक्षे । घृतं । अस्य । योनिः । घृते । श्रितः। घृतं
। ऊं इति । अस्य। धाम ।

अनुऽस्वधं । आ। वह । मादयस्व । स्वाहाऽकृतं । वृषभ ।
वक्षि । हव्यं ॥११॥

अस्याग्नेर्घृतमाज्यं मिमिक्षे सिञ्चामि यतोस्य घृतं
योनिःकारणं उत्पन्नोपि घृते श्रितः आश्रितः अस्याग्नेर्घृ
तमेव धाम तेजः घृतेन ह्ययं दीप्यते इदानीं संबोध्योच्यते-
हे अग्ने वृषभ फलस्य वर्षितस्त्वं अनुष्वधं प्रति हविः
सर्वेष्वपि हविःषु दीयमानेषु आवह देवान् आहूय
तान्माद्यस्व प्रीणय ततस्त्वं स्वाहाकृतं स्वाहाकारेण दत्तं
हव्यं चरुपुरोडाशादि वक्षि वह ॥ ११ ॥

॥ इतिद्वितीयस्य पञ्चमे त्रयोविंशोवर्गः ॥ २३ ॥

**टिप्पणी**

आप्रीसूक्त- (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च १. एकादशानां प्रयाजानां दश प्रयाजयाज्यारूपाणि सूक्तानि आप्रीसूक्तानि भवन्ति । तेषां विधाने चत्वारः पक्षा विद्यन्ते । तत्र २. पक्षः'समिद्धो आग्निर्निहितः' (ऋ० २।३) इति, शुनकगोत्रिणां यजमानां आप्रीसूक्तं भवति । 'जुषस्व न सामिधमग्ने' (ऋ० ७ ।२) इति वसिष्ठगोत्रिगोत्रिणां आप्रीसूक्तम् । 'समिद्धो अद्य'

(ऋ० १० ॥११०) इति जामदग्न्यं शुनकवसिष्ठशिष्टानां सर्वेषां गोत्रिणां आप्रीसूक्तम् । (तु०- आ०श्रौ० ३ ।२।६ नारायणः) । श्रौ०प०नि पृ० १४४ यथा ऋषिपक्षः- यस्य यस्य यजमानस्य यो य ऋषिः (गौत्रर्षिः) स तद्ऋषिदृष्टं आप्रीसूक्तं गृह्णीयात् । तद्विवेकार्थं भगवता शौनकेन अक्रमण्यां 'कण्वाङ्गिरोऽगस्त्यशुनका विश्वामित्रोऽत्रिरेव च । वसिष्ठः कश्यपो वाध्र्यश्वो जमदग्निरथोत्तमः ॥ इति श्लोक उक्तः । तत्र कण्वादयो जमदग्न्यन्ता दश ऋषयोऽभिहिताः । तेषां सूक्तान्यपि दशैव । तत्र दशानां सूक्तानां प्रथमं 'सुसमिद्धो न आ वह' (ऋ० १।१३) इति कण्वानां आप्रीसूक्तम् । द्वितीयं 'समिद्धो अग्न आवह' (ऋ० १ ॥१४२) इत्यङ्गिरसाम् । तृतीयं 'समिद्धो अद्य राजसि' (ऋ० १।१८८) इत्यगस्तीनाम् । चतुर्थं 'समिद्धो अग्निर्निहितः' (ऋ० २।३) इति शुनकानाम्

। पञ्चमं समित् समित् समनाः' (ऋ० ३ ।४) इति विश्वामित्राणाम् । षष्ठं 'सु समिद्धाय शोचिषे' (ऋ० ५ ।५) इत्यत्रीणाम् । सप्तमं जुषस्व नः समिधम् (ऋ० ७ ।२) इति वसिष्ठानाम् । अष्टमं 'समिद्धौ विश्वतस्पतिः' (ऋ० ९ ।।५) इति कश्यपानाम् नवमं 'इमां मे अग्ने समिधम्' (ऋ० १० ।।७०) इति वाध्र्यश्वानाम् । दशमं 'समिद्धो अद्य मनुषो दुरेणे' (ऋ० १० ।११०) इति शुनकवाध्र्यश्ववर्जितानां भृगूणां (जमदग्नीनाम्। इति यथर्षिपक्षः ।) ३. यः अनुक्तगोत्राणामन्येषां यजमानानामिदमेवाप्रीसूक्तं ग्रहीतव्यम् । ४. अग्निचयने प्राजापत्ये पशौ तु वसिष्ठशुनकसहितानां सर्वेषां यजमानानामिदमेव आप्रीसूक्तं बोध्यम्। (तु०-आ०श्रौ० ३ ॥६॥७-८ नारायणः) प्रेषितो मैत्रावरुणः यथोक्तैः समित्प्रैषादिप्रैषैः होतारं प्रेषयति । होता पूर्वोक्तयजमानगोत्रानुसारेण तत्तत्सूक्तगता

आप्रीसंज्ञकयाज्याः पठति द्र० श्रौ०प०नि० पृ० ११ ४४-४५ तथा २. प्रयाजसंबन्धिन्यो याज्या ऋचो यत्र पठितास्तानि सूक्तान्याप्रीसूक्तानीति गीयन्ते । तत्र होत्रा प्रशास्त्रे दण्डप्रदानानन्तरं प्रशास्ता दण्डं प्रतिगृह्य उत्तरेण होतारमतिव्रजेत् । दक्षिणेन दण्डं हरेत्, न चानेन क्वचिदपि संस्पृशेत् आप्रैषवचनात् । होतृषदनात् दक्षिणतः प्रह्वोऽवस्थाय वेद्यां दण्डमवष्टव्यं ब्रूयात् ।। प्रैषांश्चादेशं. .. .. उपविश्य अन्यत् पठेत् । होता तु दण्डप्रदानानन्तरे होतृषदनस्य पश्चादवस्थाय अहेर्दौंधषव्य' इत्यादिमन्त्रेण होतृषदनाभिमन्त्रेणादि स्रुगादापनान्तं प्रकृतिवत् करोति । अध्वर्युप्रैषितो मैत्रावरुणः समित्प्रैषादिप्रैषैर्होतारं प्रेष्यति । होता यजमानगोत्रानुसारेण तत्तत्सूक्तागता आप्रीसंज्ञकयाज्याः पठति (आगूर्वषट्कारजपसहिताः) इति

प्रयोगविशेषोऽवगन्तव्यः । तत्र शौनकगोत्रस्य यजमानस्य 'समिद्धो अग्निर्निहितः पृथिव्याम्' इत्याप्रीसूक्तं भवति । वासिष्ठगोत्रस्य 'जुषस्व नः समिधम्' इति सूक्तम् । अन्येषां सर्वेषां 'समिद्धो अद्य मनुषो दुरोणे' इति सूक्तम् । इत्येकः पक्षः। 'सुसमिद्धो न आवह' इति काण्वगोत्रस्याप्रीसूक्तम् । 'समिद्धो अग्न आवह' इत्याङ्गिरसगोत्रस्य 'समिद्धो अद्य राजसि' इत्यागस्त्यगोत्रस्य । 'समित्समित्सगना' इति विश्वामित्राणाम् । 'समिद्धोऽद्यशो त्रिषे' इत्यात्रेयस्य। 'समिद्धो विश्वतस्परि इति काश्यपगोत्रस्य। 'इमां मे अग्ने समिद्धं जुषस्व' इति वाध्र्यश्व गोत्रस्य।' समिद्धो अद्य मनुषो दुरोणे इति जामदग्न्यगोत्रस्य अनुक्तानां च। इति द्वितीय: पक्षः । द्र० श्रौ०प०नि० पृ० १४३-४५ । ३. दाशतमीषु दशैवाप्रीसूक्तानि (तु०- शा०श्रौ० ५ ॥१६ ६ भाष्यम्) । द्र० आप्रीसूक्त--।। -

श्रौतयज्ञप्रक्रिया-पदार्थानुक्रमकोषः। प्रणेता – पण्डित पीताम्बरदत्त शास्त्री(राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली)

आप्री

१. आप्रीभिराप्नुवन् । तदाप्रीणामाप्रित्वम् । तैब्रा २,२, ८, ६ ।

२. आप्रीभिराप्रीणाति (तद्यदाप्रीणाति तस्मादाप्रियो नाम [कौ) । ऐ २,४

- सर्वेण ह वा एष आत्मना सर्वेण मनसा यज्ञम् सम्भरते यो यजते । तस्य रिरिचान इव आत्मा भवति । तम् अस्य एताभिर् आप्रीभिर् आप्रीणाति । - कौ १०,३ ।

३. तद्यदेनम् (मृतपशुम्) एताभिराप्रीभिराप्रीणात्तस्मादाप्रियो नाम । माश

१३,८, ३,५ ।
४. तमेताभिराप्रीभिराप्याययन्ति तद्यदाप्याययन्ति तस्मादाप्रियो नाम । माश ३,८, १,२ ।
५. ताभिः (आप्रीभिः) स (प्रजापतिः) मुखत आत्मानमाऽप्रीणीत । तैसं ५,१, ८, ३-४ ।
६. तेजो वै ब्रह्मवर्चसमाप्रियः । ऐ.ब्रा. २,४ ।
७. प्राणा वा आप्रियः । कौ १८,१२ ।
८. मेध आप्रीषु । काठ ३४,१५ ।
९. यदाप्रियो भवन्ति यज्ञमेवाप्रीणाति । काठ २२,१ ।
१०. यदेता आप्रियो भवन्ति यज्ञमेवैताभिर्यजमान आप्रीणीते । मै ३,९,६ ।
११. यदेतान्याप्रिय आज्यानि भवन्त्यात्मानमेवैतैराप्रीणाति । तां १५,८, २, १६,५,२३

प्रियव्रतोपरि टिप्पणी

According to Sayana (RV I.13), there are 12 āprī sukta. Of the ten āprī sukta, Ṛgveda commented by Gargya Narayana, RV I.13 and I.142 invoke Narāśaṁsa and Tanūnapāt manifestations of Agni. RV I.188, III.4, IX.5 and X.110 invoke only Tanūnapāt manifestation. RV II.3, V.5, VII.2 and X.70 invoke only Narāśaṁsa manifestation.

इध्मः

ध्मा प्रपूरणशब्दो य इध्मा नाम प्रकीर्त्यते ।

पूरितस्यागतिर्येन तेनेध्मस्त्वं भविष्यसि ।।
वराहपुराणम् १८.२६ ।।
ध्मा शब्दस्य विनियोजनं प्रायः अयसः ध्मानाय एव भवति। किन्तु अत्र प्रपूरणे अस्ति। यथा उल्लिखितमस्ति, इध्मस्य उन्नतं रूपं समित् अस्ति। समित् अर्थात् समिति, सममिति। अस्मिन् जगते सममितेः ह्रासं अस्ति, येन कारणेन सममितेः प्रपूरणाय वयं भोजनं कुर्वामः। सममितेः आधुनिकं व्याख्या श्री गोवान  कृतमस्ति। विष्णु पुराणस्य १.८.१९ कथनमस्ति - लक्ष्मी इध्मा, विष्णुः कुशः।
कुशोपरि टिप्पणी

# ऋग्वेदः सूक्तं २.४

ऋग्वेदः - मण्डल २
← सूक्तं २.३ सूक्तं २.४ सूक्तं २.५ →
सोमाहुतिर्भार्गवः

## दे. अग्निः ।त्रिष्टुप्

हुवे वः सुद्योत्मानं सुवृक्तिं विशामग्निमतिथिं सुप्रयसम् ।

मित्र इव यो दिधिषाय्यो भूद्देव आदेवे जने जातवेदाः ॥१॥

इमं विधन्तो अपां सधस्थे द्वितादधुर्भृगवो विक्ष्वायोः ।

एष विश्वान्यभ्यस्तु भूमा देवानामग्निररतिर्जीराश्वः ॥२॥

अग्निं देवासो मानुषीषु विक्षु प्रियं धुः क्षेष्यन्तो न मित्रम् ।

स दीदयदुशतीरूर्म्या आ दक्षाय्यो यो दास्वते दम आ ॥३॥

अस्य रण्वा स्वस्येव पुष्टिः संदृष्टिरस्य हियानस्य दक्षोः ।

वि यो भरिभ्रदोषधीषु जिह्वामत्यो न रथ्यो दोधवीति वारान् ॥४॥

आ यन्मे अभ्वं वनदः पनन्तोशिग्भ्यो नामिमीत वर्णम् ।

स चित्रेण चिकिते रंसु भासा जुजुर्वाँ यो मुहुरा युवा भूत् ॥५॥

आ यो वना तातृषाणो न भाति वार्ण पथा रथ्येव स्वानीत् ।

कृष्णाध्वा तपू रण्वश्चिकेत द्यौरिव स्मयमानो नभोभिः ॥६॥

स यो व्यस्थादभि दक्षदुर्वीं पशुर्नैति स्वयुरगोपाः ।

अग्निः शोचिष्माँ अतसान्युष्णन्कृष्णव्यथिरस्वदयन्न भूम ॥७॥

नू ते पूर्वस्यावसो अधीतौ तृतीये विदथे मन्म शंसि ।

अस्मे अग्ने संयद्वीरं बृहन्तं क्षुमन्तं वाजं स्वपत्यं रयिं दाः ॥८॥

त्वया यथा गृत्समदासो अग्ने गुहा वन्वन्त उपराँ अभि ष्युः ।

सुवीरासो अभिमातिषाहः स्मत्सूरिभ्यो गृणते तद्वयो धाः ॥९॥

## सायणभाष्यम्

' हुवे वः ' इति नवर्चं चतुर्थं सूक्तम् । भार्गवः सोमाहुतिनामक ऋषिः । अग्नि र्देवता । त्रिष्टुप् छन्दः । ' हुवे नव सोमाहुतिर्भार्गवो ह ' इत्यनुक्रमणिका ।। प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसीदम् । सूत्रितं च- ' हुवे वः सुद्योत्मानं नि होता होतृषदन इति सूक्ते ' ( आश्व. श्रौ. ४. १३) इति ।।

हुवे वः सुद्योत्मानं सुवृक्तिं विशामग्निमतिथिं सुप्रयसम् ।

मित्र इव यो दिधिषाय्यो भूद्देव आदेवे जने जातवेदाः ॥१

हुवे । वः । सुऽद्योत्मानम् । सुऽवृक्तिम् । विशाम् । अग्निम् । अतिथिम् । सुऽप्रयसम् ।

मि॒त्रःऽइं॑व । यः । दि॒धि॒षाय्यः॑ । भूत् । दे॒वः । आऽदें॑वे । जनें । जा॒तऽवें॑दाः ॥१

हुवे । वः । सुऽद्योत्मानम् । सुऽवृक्तिम् । विशाम् । अग्निम् । अतिथिम् । सुऽप्रयसम् ।

मित्रःऽइव । यः । दिधिषाय्यः । भूत् । देवः । आऽदेवे । जने । जातऽवेदाः ॥१

हे यजमानाः वः युष्मदर्थम् अग्निं हुवे आह्वयामि । कीदृशं तम् । सुद्योत्मानं सुष्ठु द्योतमानं सुवृक्तिं सुवर्जितं पापैः शोभनस्तुतिं वा । विशां यजमानानाम् अतिथिम् अतिथिवत्सदा पूज्यं सुप्रयसं शोभनहविर्लक्षणान्नम् । किंच जातवेदाः जातानां वेदिता यः देव अग्निः मित्रइव सखेव आदित्य इव वा दिधिषाय्यः धारयिता भूत् भवति । कुत्रेति उच्यते । आदेवे देवपर्यन्ते जने मनुष्यप्रभृतिदेवपर्यन्तेषु । तेषां धारकोऽभवदित्यर्थः ।।

इ॒मं वि॒धन्तो॑ अ॒पां स॒धस्थे॑ द्वि॒तादं॑धु॒र्भृग॑वो वि॒क्ष्वा॒३॒॑योः ।

ए॒ष विश्वा॑न्य॒भ्य॑स्तु भूमा॑ दे॒वाना॑म॒ग्निर॑र॒तिर्जी॒राश्वः॑ ॥२

इ॒मम् । वि॒धन्तः॑ । अ॒पाम् । स॒धऽस्थे॑ । द्वि॒ता । अ॒द॒धुः॒ । भृग॑वः । वि॒क्षु । आ॒योः ।

ए॒षः । विश्वा॑नि । अ॒भि । अ॒स्तु॒ । भूम॑ । दे॒वाना॑म् । अ॒ग्निः । अ॒र॒तिः । जी॒रऽअ॑श्वः ॥२

इमम् । विधन्तः । अपाम् । सधऽस्थे । द्विता । अदधुः । भृगवः । विक्षु । आयोः ।

एषः । विश्वानि । अभि । अस्तु । भूम । देवानाम् । अग्निः । अरतिः । जीरऽअश्वः ॥२

इमम् अग्निं विधन्तः परिचरन्तः भृगवः अस्मत्पूर्वे महर्षयः अपां सधस्थे सहस्थाने अन्तरिक्षे आयोः मनुष्यस्य यजमानस्य स्वभूतासु विक्षु प्रजास्वृत्विक्षु तेषां मध्ये च द्विता द्वयोः स्थानात् अदधुः अधारयन् ।। दधातेर्लङि रूपम् ।। एषः अग्निः भूम भूम्ना अत्यर्थं विश्वानि भूतजातानि अस्मद्विरोधीनि अभ्यस्तु अभिभवतु । स कीदृशः । देवानाम् अरतिः ईश्वरः । तेषां मध्ये शीघ्रम् अरणशीलो वा अस्मद्यागं प्रति । तथा जीराश्वः क्षिप्राश्वः ।।

अ॒ग्निं दे॒वासो॒ मानु॑षीषु वि॒क्षु प्रि॒यं धुः᳚ क्षे॒ष्यन्तो॒ न मि॒त्रम् ।

स दीं॑दयदुश॒तीरूर्म्या॒ आ द॒क्षाय्यो॒ यो दास्वं॑ते दम॒ आ ॥३

अ॒ग्निम् । दे॒वासः॑ । मानु॑षीषु । वि॒क्षु । प्रि॒यम् । धु॒ः । क्षे॒ष्यन्तः॑ । न । मि॒त्रम् ।

सः । दी॒द॒य॒त् । उ॒श॒तीः । ऊर्म्याः॑ । आ । द॒क्षाय्यः॑ । यः । दास्व॑ते । दमे॑ । आ ॥३

अग्निम् । देवासः । मानुषीषु । विक्षु । प्रियम् । धुः । क्षेष्यन्तः । न । मित्रम् ।

सः । दीदयत् । उशतीः । ऊर्म्याः । आ । दक्षाय्यः । यः । दास्वते । दमे । आ ॥३

देवासः देवाः क्षेष्यन्तः स्वर्गं प्रति गच्छन्तः सन्तः पूर्वं मानुषीषु मनुष्यसंबन्धिनीषु विक्षुप्रजासु प्रियं देवानां प्रीणयितारम् अग्निं धुः अधुः स्थापितवन्तः । तत्र दृष्टान्तः । क्षेष्यन्तः मित्रं न । रायं प्रति गच्छन्तो नराः मित्रं प्रियं सखायं स्वगृहरक्षार्थं स्थापयन्ति तद्वत् । यः एवं देवैः स्थापितो योऽग्निः दास्वते हविर्दत्तवते यजमानाय तदर्थं दमे तदीये यागगृहे आ आहितः स्थापितः दक्षाय्यः समर्धयिता दाता वा सः अग्निः उशतीः कामयमानाः

ऊर्म्याः रात्रीः सर्वासु रात्रिषु आ दीदयत् दीप्यते सर्वतः । सर्वरात्रीरादीपयति वा ।।

अ॒स्य र॒ण्वा स्वस्ये॑व पु॒ष्टिः संदृ॑ष्टिरस्य हिया॒नस्य॒ दक्षोः᳚ ।

वि यो भरि॑भ्र॒दोष॑धीषु जि॒ह्वामत्यो॒ न रथ्यो॑ दोधवीति॒ वारा॑न् ॥४

अ॒स्य । र॒ण्वा । स्वस्य॑ऽइव । पु॒ष्टिः । सम्ऽदृ॑ष्टिः । अ॒स्य॒ । हि॒या॒नस्य॑ । धक्षोः᳚ ।

वि । यः । भरि॑भ्रत् । ओष॑धीषु । जि॒ह्वाम् । अत्यः᳚ । न । रथ्यः᳚ । दो॒धु॒वी॒ति॒ । वारा॑न् ॥४

अस्य । रण्वा । स्वस्यऽइव । पुष्टिः । सम्ऽदृष्टिः । अस्य । हियानस्य । धक्षोः ।

वि । यः । भरिभ्रत् । ओषधीषु । जिह्वाम् । अत्यः । न । रथ्यः । दोधवीति । वारान् ॥४

अस्य अग्नेः पुष्टिः शरीरवृद्धिः रण्वा रमणीया शब्दयुक्ता वा । तत्र दृष्टान्तः । स्वस्य पुष्टिः इव । यथा लोके स्वकीया पुष्टिः स्वस्मै रमणीया भवति तद्वत् । यद्वा अस्याग्नेः संबन्धिनी पुष्टिः यजमानविषया रण्वा स्वस्याग्नेः पुष्टिर्यथा रण्वा तद्वत् । किंच हियानस्य समृद्धिं गच्छतो व्याप्नुवतः धक्षोः काष्ठान् दिधक्षोर्दग्धुमिच्छोः अस्य अग्नेः संदृष्टिः संदर्शनाविर्भावोऽपि रण्वा । यः अग्निः ओषधीषु काष्ठेषु जिह्वां ज्वालाम् । जात्येकवचनम् । ज्वालाः वि भरिभ्रत् अत्यर्थं विहरति । कम्पयतीत्यर्थः ।। हरतेर्यङ्लुगन्तत्वेन दाधर्त्यादिषु ( पा. सू ७.४.६५) निपातितात् लेट्यडागमः । यद्योगादनिघातः।। तत्र दृष्टान्तः । रथ्यः रथार्हः अत्यो न वाजी यथा वारान्

दंशवारणसाधनान् बालान् दोधवीति कम्पयति तद्वत् ।
योऽग्निर्ज्वालाः कम्पयति अस्याग्नेः पुष्टी रण्वेति ।।

आ यन्मे॒ अभ्वं॑ व॒नद॒ः पनं॑न्तो॒शिग्भ्यो॒ नामिं॑मीत॒ वर्णं॑म् ।

स चि॒त्रेणं॑ चिकिते॒ रंसु॑ भा॒सा जुं॑जु॒र्वाँ यो मुहु॒रा युवा॒ भूत् ॥ ५

आ । यत् । मे॒ । अभ्वं॑म् । व॒नदः॑ । पनं॑न्त । उ॒शिक्ऽभ्यः॑ । न । अ॒मि॒मी॒त॒ । वर्णं॑म् ।

सः । चि॒त्रेणं॑ । चि॒कि॒ते॒ । रम्ऽसु॑ । भा॒सा । जु॒जु॒र्वान् । यः । मुहुः॑ । आ । युवा॑ । भूत् ॥५

आ । यत् । मे । अभ्वम् । वनदः । पनन्त । उशिक्ऽभ्यः । न । अमिमीत । वर्णम् ।

सः । चित्रेण । चिकिते । रम्ऽसु । भासा । जुजुर्वान् । यः । मुहुः । आ । युवा । भूत् ॥५

यत् यस्य अभ्वं महत्त्वं मे मम संबन्धिनः वनदः वनन्तः संभक्तारः । यद्वा वनदोऽवनदो भृशं शब्दयन्तः स्तोतारः ।। अवशब्दो भृशार्थवाची। तत्पूर्वान्नदेः क्विप् । अवाप्योः इत्यकारलोपः ।। आ पनन्त समन्तात् स्तुवन्ति । सः अग्निः उशिग्भ्यः अस्मदीयं रूपं कामयमानेभ्य ऋत्विग्भ्यः वर्णं स्वसदृशं रूपं नामिमीत । नशब्दश्चार्थे । निर्मिमीते च । स च रंसु रमणीयेष्वाज्यादिहविःषु निमित्तेषु चित्रेण भासा हिरण्यकनकादिनानावर्णया दीप्त्या चिकिते विज्ञायते । किंच यः अग्निः जुजुर्वान् जीर्णः सन् ज्वालोपशमे स एव मुहुः पुनः पुनः आ युवा सर्वतो मिश्रयिता तरुणो वा आ भूत् आभवति पुनराज्यादिसंयोगात् ।। ।। २४ ।।

आ यो वनां तातृषा॒णो न भाति॒ वार्ण प॒था रथ्येंव स्वानीत्
।

कृ॒ष्णाध्वा॒ तपूं र॒ण्वश्चिंकेत॒ द्यौरिंव॒ स्मयंमानो॒ नभोंभिः ॥६

आ । यः । वनां । त॒तृ॒षा॒णः । न । भातिं । वाः । न । प॒था
। रथ्यांऽइव । स्वा॒नी॒त् ।

कृ॒ष्णऽअंध्वा । तपुः॑ । र॒ण्वः । चि॒के॒त॒ । द्यौःऽइंव ।
स्मयंमानः । नभः॑ऽभिः ॥६

आ । यः । वना । ततृषाणः । न । भाति । वाः । न । पथा
। रथ्याऽइव । स्वानीत् ।

कृष्णऽअध्वा । तपुः । रण्वः । चिकेत । द्यौःऽइव ।
स्मयमानः । नभःऽभिः ॥६

यः अग्निः वना वनानि वृक्षसमूहान् ततृषाणो न तृषित इव । त्वरमाण इत्यर्थः । आ भाति आभासयति । दहतीत्यर्थः । यद्वा वना वने आभाति । किंच वार्ण उदकमिव पथा प्रवणेन मार्गेण गच्छति तद्वत् इतस्ततो गच्छति । रथ्येव रथस्थ वोढाश्व इव स्वानीत् शब्दयति । यद्वा रथशब्दात् सोऽर्यादेशः । यथा रथो युद्धमार्गेण गच्छन् स्वनति तद्वत् । किंच कृष्णाध्वा कृष्णवर्त्मा तपुः तापकः रण्वः रमणीयः एवंभूतः सन् चिकेत ज्ञायते । प्रकाशत इत्यर्थः । क इव । नभोभिः नक्षत्रैः स्मयमानः प्रकाशमानः द्यौरिव द्युलोकं इव । यद्वा नभोभिरन्तरिक्ष- प्रदेशविशेषैः स्मयमानः शोभमानो द्यौरादित्य इव । नीलवर्णान्तरिक्षचार्यादित्यो यथा ज्ञायते तद्वत् स्वसंचारेण कृष्णीभूते मार्गे ज्ञायते । प्रकाशत इत्यर्थः ।।

स यो व्यस्था॑द॒भि दक्ष॑दु॒र्वीं प॒शुर्नैति॑ स्व॒युरगो॑पाः ।

अ॒ग्निः शो॒चिष्माँ॑ अत॒सान्यु॒ष्णन्कृ॒ष्णव्यं॑थिरस्वदय॒न्न भूमं॑ ॥७

सः । यः । वि । अस्थां॑त् । अ॒भि । धक्षं॑त् । उ॒र्वीम् । प॒शुः । न । ए॒ति॒ । स्व॒ऽयुः । अगो॑पाः ।

अ॒ग्निः । शो॒चिष्मां॑न् । अ॒त॒सानिं॑ । उ॒ष्णन् । कृ॒ष्णऽव्यं॑थिः । अ॒स्व॒द॒य॒त् । न । भूमं॑ ॥७

सः । यः । वि । अस्थात् । अभि । धक्षत् । उर्वीम् । पशुः । न । एति । स्वऽयुः । अगोपाः ।

अग्निः । शोचिष्मान् । अतसानि । उष्णन् । कृष्णऽव्यथिः । अस्वदयत् । न । भूम ॥७

यः अग्निः व्यस्थात् विविधं तिष्ठति । व्याप्नोति विश्वम् । तथा योऽग्निः उर्वीं विस्तृतां पृथिवीं सर्वाम् । यश्च अभि दक्षत आभिमुख्येन प्रवर्धमानो भवति ।। उभे अपि

यच्छब्दयोगान्न निहन्येते ।। सः अग्निः पशुर्न पशुरिव । यथा जातः पशुः स्वच्छन्देन चरति तथा स्वयुः स्वयमेव गच्छन् अगोपाः गोपरहितः । नियामकवर्जित इत्यर्थः । एति गच्छति । किं कुर्वन् । शोचिष्मान् प्रकृष्टदीप्तिः कृष्णव्यथिः कृष्णवर्णं प्राप्ता दग्धा व्यथाकराः कण्टकादयो येन तादृशः सन् भूम अत्यधिकम् अस्वदयन्न आस्वादयतीव वृक्षगतान् रसान् । अतसानि संततानि नीरसानि वा तरुगुल्मादीनि उष्णन् दहन्नेति ।।

नू ते पूर्वस्यावसो अधीतौ तृतीये विदथे मन्म शंसि ।

अस्मे अग्ने संयद्वीरं बृहन्तं क्षुमन्तं वाजं स्वपत्यं रयिं दाः ॥८

नु । ते । पूर्वस्य । अवसः । अधिऽइतौ । तृतीये । विदथे । मन्म । शंसि ।

अ॒स्मे इति॑ । अ॒ग्ने॒ । सं॒यत्ऽवी॑रम् । बृ॒हन्त॑म् । क्षु॒ऽमन्त॑म् । वाज॑म् । सु॒ऽअ॒प॒त्यम् । र॒यिम् । दा॒ः ॥८

नु । ते । पूर्वस्य । अवसः । अधिऽइतौ । तृतीये । विदथे । मन्म । शंसि ।

अस्मे इति । अग्ने । संयत्ऽवीरम् । बृहन्तम् । क्षुऽमन्तम् । वाजम् । सुऽअपत्यम् । रयिम् । दाः ॥८

हे अग्ने ते तव संबन्धिनः पूर्वस्य पूर्वं यागसमये कृतस्य अवसः अभिमतर्पणस्य अधीतौ स्मरणे सति तत्स्मृत्या नु अद्यापि तृतीये विदथे यागे तृतीयसवने । यद्वा प्रातरनुवाकसम्बन्धिनाम् आग्नेयोषस्याश्विनानां मध्येऽन्यतमे तृतीये क्रतौ मन्म मननीयं स्तोत्रं शंसि अशंस्। शस्यतेऽस्माभिः। हे अग्ने त्वं च अस्मे अस्मभ्यं संयद्वीरं संयतो वीरा यस्मिन् तादृशं बृहन्तं महान्तं क्षुमन्तं

शब्दवन्तं कीर्तिमन्तं वाजम् उक्तलक्षणमन्नं स्वपत्यं रयिं च दाः देहि ।।

त्वया॒ यथा॑ गृत्सम॒दासो॑ अग्ने॒ गुहा॑ व॒न्वन्त॒ उप॑राँ अ॒भि ष्युः ।

सु॒वीरा॑सो अभिमाति॒षाह॒ः स्मत्सू॒रिभ्यो॑ गृण॒ते तद्वयो॑ धाः ॥९

त्वया॑ । यथा॑ । गृ॒त्स॒ऽम॒दासः॑ । अ॒ग्ने॒ । गुहा॑ । व॒न्वन्तः॑ । उप॑रान् । अ॒भि । स्युरिति॒ स्युः ।

सु॒ऽवीरा॑सः । अ॒भि॒मा॒ति॒ऽसहः॑ । स्मत् । सू॒रिऽभ्यः॑ । गृ॒ण॒ते । तत् । वयः॑ । धा॒ः ॥९

त्वया । यथा । गृत्सऽमदासः । अग्ने । गुहा । वन्वन्तः । उपरान् । अभि । स्युरिति स्युः ।

सुऽवीरासः । अभिमातिऽसहः । स्मत् । सूरिऽभ्यः । गृणते । तत् । वयः । धाः ॥९

हे अग्ने त्वया रक्षकेण वन्वन्तः छान्दसं भजन्तो गृत्समदा ऋषयः । आत्मनि पारोक्ष्येण वचनम् । यथा गुहा गुहायां वर्तमानान् उपरान् उपरमणसाधनान् उपरि उत्कृष्टे वर्तमानान्वा धनविशेषान् अभि स्युः अभिभवेयुः । स्वाधीनान् कुर्युः । यद्वा गूढानुपरान् उपरेऽधिकत्वेन वर्तमानान् पापान् अभिस्युः अभिभवेयुः । तथा कुर्वित्यर्थः । कीदृशाः । सुवीरासः शोभनपुत्राद्युपेताः अभिमातिसहः वैरिणां पापादीनां सोढारः । किंच मेधाविभ्यो यजमानेभ्यो गृणते ।। व्यत्ययेनैकवचनम् ।। शब्दयद्भ्यः स्तोतृभ्यः । यद्वा सूरिभ्यो यजमानेभ्यो गृणते स्तोत्रे च स्मत् सुमत् अतिप्रभूतं तत् तादृशं प्रसिद्धं वयः अन्नं धाः धेहि ।। ।। २५ ।।

# ऋग्वेदः सूक्तं २.५



## दे. अग्निः। अनुष्टुप्

होताजनिष्ट चेतनः पिता पितृभ्य ऊतये ।

प्रयक्षञ्जेन्यं वसु शकेम वाजिनो यमम् ॥१॥

आ यस्मिन्सप्त रश्मयस्तता यज्ञस्य नेतरि ।

मनुष्वद्दैव्यमष्टमं पोता विश्वं तदिन्वति ॥२॥

दधन्वे वा यदीमनु वोचद्ब्रह्माणि वेरु तत् ।

परि विश्वानि काव्या नेमिश्चक्रमिवाभवत् ॥३॥

साकं हि शुचिना शुचिः प्रशास्ता क्रतुनाजनि ।

विद्वाँ अस्य व्रता ध्रुवा वया इवानु रोहते ॥४॥

ता अस्य वर्णमायुवो नेष्टुः सचन्त धेनवः ।

कुवित्तिसृभ्य आ वरं स्वसारो या इदं ययुः ॥५॥

यदी मातुरुप स्वसा घृतं भरन्त्यस्थित ।

तासामध्वर्युरागतौ यवो वृष्टीव मोदते ॥६॥

स्वः स्वाय धायसे कृणुतामृत्विगृत्विजम् ।

स्तोमं यज्ञं चादरं वनेमा ररिमा वयम् ॥७॥

यथा विद्वाँ अरं करद्विश्वेभ्यो यजतेभ्यः ।

अयमग्ने त्वे अपि यं यज्ञं चकृमा वयम् ॥८॥

# सायणभाष्यम्

' होताजनिष्ट ' इत्यष्टर्चं पञ्चमं सूक्तं सोमाहुतेरार्षमाग्नेयमानुष्टुभम् । ' होताष्टावानुष्टुभम्' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ अस्य विनियोगः । सूत्रितं च-' अग्नायो होताजनिष्ट ' ( आश्व. श्रौ. ४. १३) इति । चतुर्विंशेऽहन्यपीदमेवाज्यम् । ' चतुर्विंशे होताजनिष्टेत्याज्यम् '( आश्व. श्रौ. ७. २) इति । आभिप्लविके द्वितीयेऽहनीदमेवाज्यम् । ' द्वितीयस्य चतुर्विंशेनाज्यम् ' ( आश्व. श्रौ. ७. ६) इत्यतिदिष्टत्वात् ।।

होतांजनिष्ट चेतंनः पि॒ता पि॒तृभ्यं ऊ॒तयें ।

प्र॒यक्ष॒ञ्जेन्यं॒ वसुं श॒केमं वा॒जिनो॒ यमंम् ॥१

होतां । अ॒ज॒नि॒ष्ट॒ । चेतंनः । पि॒ता । पि॒तृऽभ्यः॑ । ऊ॒तयें ।

प्र॒ऽयक्षंन् । जेन्यंम् । वसुं । श॒केमं । वा॒जिनः॑ । यमंम् ॥१

होता । अजनिष्ट । चेतनः । पिता । पितृऽभ्यः । ऊतये ।।

प्रऽयक्षन् । जेन्यं । वसु। शकेम । वाजिनः । यमं ॥१॥

होता होमनिष्पादकश्चेतनश्चेतयितास्मदनुष्ठितस्य पिता पालकोऽस्मद्यज्ञस्य ईदृशोऽग्निरजनिष्ट । उत्पन्नः । किमर्थं । पितृभ्यः पालकेभ्यो यजमानेभ्यः ॥ षष्ठ्यर्थे चतुर्थी ॥ तेषामूतये रक्षणाय च । वयं च वाजिनो हविर्लक्षणान्नवंतः संतः प्रयक्षं प्रकर्षेण पूज्यं जेन्यं जेतव्यं यमं यमयितव्यं वसु धनं शकेम । शक्ता भूयास्म लब्धुमिति शेषः । यद्वा वाजिनोऽन्नस्य यमं यमनं कर्तुं शकेम । प्रयक्षं जेन्यं वसु धनमित्युपमानं । उक्तलक्षणं धनमिव। तद्यथावरोद्धुं शक्नुमस्तद्वत् ॥

आ यस्मिंन्स॒प्त र॒श्मयंस्त॒ता य॒ज्ञस्यं ने॒तरिं ।

म॒नु॒ष्वद्दैव्यं॑मष्ट॒मं पोता॒ विश्वं॒ तदिं॑न्वति ॥२

आ । यस्मि॑न् । स॒प्त । र॒श्मयः॑ । त॒ताः । य॒ज्ञस्यं॑ । ने॒तरि॑ ।

म॒नु॒ष्वत् । दैव्यं॑म् । अ॒ष्ट॒मम् । पोता॑ । विश्वं॑म् । तत् ।
इ॒न्व॒ति॒ ॥२

आ । यस्मिन्। सप्त। रश्मयः । तताः । यज्ञस्य । नेतरि ।

मनुष्वत् । दैव्यं । अष्टमं । पोता। विश्वं। तत् । इन्वति ॥
२॥

यज्ञस्य नेतरि यागस्य निर्वाहके यस्मिन्नग्नौ सप्त रश्मयः सप्तसंख्याका रश्मिवद्व्याप्ता होत्रका आतताः । स्वस्वकर्मभिः सर्वतो व्याप्ता भवति । स पोता  पावको देवानां पोत्राख्य ऋत्विग्रूपो वाग्निर्मनुष्वत् मनुष्यपोतृवत् दैव्यं । देवो यज्ञः । तत्संबंध्यष्टममष्टर्त्विक्संबंधि तद्विश्वं कर्तव्यजातं सप्तहोत्रकैः सह स्वयमष्टमः सन् इन्वति ।

व्याप्नोति । यद्वा तदित्यस्य लिंगव्यत्ययः। स पोतेति संबंधः । सप्तहोत्रकैः सहाष्टमो भूत्वा तद्वद्यज्ञं निर्वहतीत्यर्थः॥

द॒ध॒न्वे वा॒ यदी॒मनु॒ वोच॒द्ब्रह्मा॑णि॒ वेरु॒ तत् ।

परि॒ विश्वा॑नि॒ काव्या॑ ने॒मिश्च॒क्रमि॑वाभवत् ॥३

द॒ध॒न्वे । वा॒ । यत् । ई॒म् । अनु॑ । वोच॑त् । ब्रह्मा॑णि । वेः । ऊं॒ इति॑ । तत् ।

परि॑ । विश्वा॑नि । काव्या॑ । ने॒मिः । च॒क्रम्ऽइ॑व । अ॒भ॒व॒त् ॥३

दधन्वे । वा। यत्। ईं। अनु। वोचत् । ब्रह्मणि । वेः । ॐ इति । तत्।

परि। विश्वानि । काव्या । नेमिः । चक्रंऽइव । अभवत् ॥ ३ ॥

पूर्वे मंत्रे होत्रादिवत् स्वयमपि यज्ञं निर्वहतीत्युक्तं । अत्र तु सर्वं तत्तदात्मना स्थित्वा स्वयमेव निर्वहतीत्याह। वा अथवा ईमेनं यज्ञमनु लक्षीकृत्य यद्धविरादिकं दधन्वे धारयत्यध्वर्य्वादिरूपः। यानि ब्रह्माणि शस्त्रादीन्यनुवोचत् । अनुवक्ति होत्रादिरूपः । अत्र वान्वित्येतद्योज्यं । तत्सर्वं वेरु । वेरेव । कामयते जानाति वा स्वयमनुष्ठातुं । अयमग्निर्विश्वानि सर्वाणि काव्यानि । कवयो मेधाविन ऋत्विजः । तत्संबंधीनि कर्माणि पर्यभवत् । परिभवति । स्वायत्तानि करोति । व्याप्नोतीत्यर्थः । व्याप्तौ दृष्टांतः । नेमिः बहिर्वेष्टनवलयश्चक्रं रथांगं । यथा कात्स्न्र्येन व्याप्नोति तद्वत् ॥

सा॒कं हि शुचि॑ना॒ शुचिः॑ प्रशा॒स्ता क्रतु॒नाज॑नि ।

वि॒द्वाँ अ॑स्य व्र॒ता ध्रु॒वा व॒या इ॒वानु॑ रोहते ॥४

सा॒कम् । हि । शुचि॑ना । शुचिः॑ । प्र॒ऽशा॒स्ता । क्रतु॑ना । अज॑नि ।

वि॒द्वान् । अ॒स्य॒ । व्र॒ता । ध्रु॒वा । व॒याःऽइ॑व । अनु॑ । रो॒ह॒ते॒ ॥४

साकं । हि । शुचिना। शुचिः । प्रऽशास्ता। क्रतुना। अजनि।।

विद्वान् । अस्य । व्रता । ध्रुवा। वयाः ऽइव । अनु। रोहते ॥ ४॥

शुचिः स्वयं शोधकः प्रशास्ता देवानां एतन्नामक ऋत्विक् प्रशासिता वा यज्ञविघ्नानां शुचिना क्रतुना शोधकेनाग्निहोत्रादिकर्मणा साकं हि सहैवाजनि । उत्पन्नः । जातमात्र एव शुद्धः सर्वस्य प्रशास्ता च सन्नग्निहोत्रादिनिर्वोढाभवदित्यर्थः । अस्याग्रेर्ध्रुवा ध्रुवाणि फलपर्यवसायीनि व्रतानि कर्माणि विद्वान् जानन् यजमानो वया इव विस्तृताः शाखा इवानुरोहते । क्रमेणानुतिष्ठति ।।

ता अं॑स्य॒ वर्णं॑मा॒युवो॒ नेष्टुः॑ सचन्त धे॒नवः॑ ।

कु॒वित्ति॒सृभ्य॒ आ वरं॒ स्वसा॑रो॒ या इ॒दं य॒युः ॥५

ताः । अ॒स्य॒ । वर्णं॑म् । आ॒युवः॑ । नेष्टुः॑ । स॒च॒न्त॒ । धे॒नवः॑ ।

कु॒वित् । ति॒सृऽभ्यः॑ । आ । वर॑म् । स्वसा॑रः । याः । इ॒दम् । य॒युः ॥५

ताः । अस्य । वर्णं । आयुवः । नेष्टुः । सचंत । धेनवः ।।

कुवित् । तिसृऽभ्यः । आ । वरं स्वसारः । याः । इदं । ययुः ॥५॥

या वक्ष्यमाणलक्षणा या अंगुलय इदमनुष्ठीयमानं कर्म ययुः। प्राप्नुवंति । अनुतिष्ठंति । ता आयुवो गंत्र्यो व्याप्ता धेनवः प्रीणयित्र्यः स्वसारः स्वयं सारिण्यों ऽगुलयो नेष्टुर्हविर्याचितुर्भक्षयितुः शोधयितुः पोषयितुनैतुर्वास्याग्नेः । यद्वैतन्नामकऋत्विग्रूपस्य। तिसृभ्य आ गार्हपत्यादिमूर्तीनामपि वरं वर्णं कुवित् बहुकृत्वः सचंत । सेवंते । परिचरंति ॥

यदी॑ मा॒तुरुप॒ स्वसा॑ घृ॒तं भर॒न्त्यस्थि॑त ।

तासा॑मध्व॒र्युराग॑तौ॒ यवो॑ वृ॒ष्टीव॑ मोदते ॥६

यदि॑ । मा॒तुः । उप॑ । स्वसा॑ । घृ॒तम् । भर॑न्ती । अस्थि॑त ।

तासा॑म् । अ॒ध्व॒र्युः । आऽग॑तौ । यवः॑ । वृ॒ष्टीऽइ॑व । मो॒द॒ते॒ ॥६

यदि । मातुः । उप । स्वसा । घृतं । भरंती । अस्थित ।

तासां । अध्वर्युः । आऽगतौ। यवः । वृष्टीऽइव । मोदते ॥ ६॥

यदि यदा मातुः सर्वस्य निर्मातुर्भूम्या वैदिलक्षणायाः स्वसा स्वसृस्थानीया जुहूर्घृतं भरंती सत्युपास्थित । उपतिष्ठेदग्निं । एकवचनमविवक्षितं । जुहपभृद्ध्रुवा घृतं

भरंत्यस्तिष्ठंतीत्यर्थः । तदा तासां जुह्वादीनामागतौ यागाय प्राप्तौ सत्यामध्वर्युरेतन्नामक ऋत्विग्रूपोऽध्वरं कामयमानो वार्यमग्निर्मोदते । हृष्यति । यवो वृष्टीव वृष्ट्या यथा मोदते तद्वत् ॥

स्वः स्वाय॒ धाय॑से कृणु॒ताम॒त्विगृ॒त्विजं॑म् ।

स्तोमं॑ य॒ज्ञं चाद॒रं॑ व॒नेमा॑ ररि॒मा व॒यम् ॥७

स्वः । स्वाय॑ । धाय॑से । कृ॒णु॒ताम् । ऋ॒त्विक् । ऋ॒त्विजं॑म् ।

स्तोमं॑म् । य॒ज्ञम् । च॒ । आत् । अरं॑म् । व॒नेमं॑ । र॒रि॒म । व॒यम् ॥७

स्वः । स्वाय। धायसे । कृणुतां । ऋत्विक् । ऋत्विजं ।

स्तोमं । यज्ञं । च । आत् । अरं । वनेम । ररिम । वयं ॥
७॥

अयमग्निः स्वः स्वयमेव स्वाय स्वकीयाय धायसे कर्मणे हविषां धारणाय वा ऋत्विक् होताजनिष्टेत्यादिनोक्तलक्षणो होतृपोतृप्रशास्त्राद्यृत्विग्रूपः सन् ऋत्विजमार्विज्यं । भावप्रधानोऽयं निर्देशः ॥ देवर्त्विग्रूपः सन् ऋत्विजं मानुषमार्त्विज्यं कृणुतां । करोतु । वयं च तदनुग्रहात् आदनंतरमेव स्तोमं स्तोत्रं यज्ञं च तदाश्रयं यागमप्यरमलमत्यर्थं वनेम । संभजेमहि । ररिम ददेमहि च हविः । यद्वा स्तोमं वनेम यज्ञं यज्ञयोग्यं हवी ररिम ॥ यथा विद्वां अरं करद्विश्वेभ्यो यजतेभ्यः ।। अयमग्ने त्वे अपि यं यज्ञं चकृमा वयं ॥ ८॥

यथा॑ वि॒द्वाँ अर॒ं कर॒द्विश्वे॑भ्यो यज॒तेभ्यः॑ ।

अ॒यम॑ग्ने॒ त्वे अपि॒ यं य॒ज्ञं च॑कृ॒मा व॒यम् ॥८

यथा॑ । वि॒द्वान् । अर॑म् । कर॑त् । विश्वे॑भ्यः । य॒ज॒तेभ्यः॑ ।

अ॒यम् । अ॒ग्ने॒ । त्वे इति॑ । अपि॑ । यम् । य॒ज्ञम् । च॒कृ॒म । व॒यम् ॥८

यथा । विद्वान् । अरं । करत् । विश्वेभ्यः । यजतेभ्यः ।। अयं । अग्ने । त्वे इति । अपि । यं । यज्ञं । चकृम । वयं ॥ ८॥

हे अग्ने विद्वान् त्वन्माहात्म्याभिज्ञः प्रयोगज्ञो वा यजमानो यथा विश्वभ्यो यजतेभ्यः सर्वेभ्यो यजनीयेभ्यो देवेभ्योऽरं पर्याप्तं करत् कुर्यात् तथा त्वमनुगृहाणेत्यर्थः । वयमपि यं यज्ञं यागविशेषं चकृम कुर्महे स यागस्त्वे अपि ॥ अपिरेवार्थे ॥ तवैव त्वत्प्रीत्यर्थः । त्वमेव तस्मात्तं सर्वदेवार्थयागं तत्तदृत्विग्रूपः सन् निर्वहेत्यर्थः ॥ ॥२६॥

**टिप्पणी**

२.५.१ होताजनिष्ट चेतनः पिता पितृभ्य ऊतये।
प्रयक्षञ्जेन्यं वसु शकेम वाजिनो यमम्॥
२.००५.०१

होताजनिष्ट चेतन इत्याज्यं जातवज्जातवद्धै
चतुर्थस्याह्नः रूपम् - कौ.ब्रा. २१.२

अभिप्लवषडहप्रकरणम्-- होताजनिष्टेत्याज्यं
चतुर्थस्य (अह्नः) - शांश्रौसू. ११.७.१

अग्नेः उत्पत्तिरभवत्। कीदृशस्याग्नेः। यः होता,
देवानां आह्वानकर्ता, तेभ्यः हविष्प्रदाता अस्ति। यः

पितृभ्यः, जीवस्य चेतनायाः पालनकर्तॄणां प्राणानां पिता अस्ति। ईदृशस्य अग्नेः सहायेन वयं जेन्यस्य, जेतव्यस्य वसोः, धनस्य प्रयक्षन्, प्रकृष्टरूपेण पूजाकरणे शक्ताः भविष्यामः।

वैदिक दृष्ट्या, य़क्ष धातुः पूजा अर्थे अस्ति। पौराणिक दृष्ट्या, येषु तन्त्रेषु धनात्मकतायाः क्षयं अस्ति, येषु तन्त्रेषु अव्यवस्थायाः, एण्ट्रोपेः वर्धनं अस्ति, तेषु धनात्मकतायाः क्षयस्य निवारणहेतु यक्ष संज्ञकायाः चेतनायाः कल्पना अस्ति( द्र. <u>यक्षोपरि</u> पौराणिकाः संदर्भाः)। लौकिकदृष्ट्या, यक्षः धनस्य रक्षां करोति। यथा सर्वविदितमस्ति, अस्मिन् जगते प्रत्येकं तन्त्रं ऋणःगामी अस्ति। धनोगामी कर्तुं कः उपायः अस्ति। ऋचानुसारेण, पितृसंज्ञका ये सहजाः प्राणाः चेतनायाः स्थूल देहे धारणाय क्रियाशीलाः सन्ति, तेषां क्रियान्वने धनात्मकतायाः

क्षयं भवति। अतएव, यदि कोपि विशिष्टः प्राणः एतेषां पितृसंज्ञकानां प्राणानां उद्धरणे शक्तं भवेत्, तर्हि धनात्मकतायाः प्रादुर्भावं भवेत्। वेदे एवंप्रकारस्य प्राणस्य संज्ञा अग्निः अस्ति। वैदिकसाहित्ये, अग्निः पृथिवी महाभूतस्य रसं, सारं अस्ति। यत्किंचित् स्थूलतरमस्ति, तस्मात् सूक्ष्मतरायाः चेतनायाः जननं अग्निरस्ति। अन्यशब्देषु, यत्किंचित् अव्यवस्थितमस्ति, तस्मात् व्यवस्थिततरस्य तन्त्रस्य जननं अग्निरस्ति।

प्र-यक्षणस्य उदाहरणं अस्मिन् ऋचायां उपलब्धमस्ति -

तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः।
उपह्वरे यदुपरा अपिन्वन्मध्वर्णसो नद्यश्चतस्रः॥ ऋ. १.०६२.०६

अस्याः ऋचायाः विनियोगः प्रवर्ग्यकर्मणि अस्ति। ऋचानुसारेण, यत्र इन्द्रः पृथिव्योपरि मधुपूर्णानां चतस्रः नदीनां सृष्टिं करोति, तत् कृत्यं प्र-यक्षतममस्ति।

अपि च -

प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु। धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन्॥ १०.००४.०१

अधोल्लिखितायां ऋचायां अग्निः यक्षाध्यक्षः भवति -

वैश्वानरं कवयो यज्ञियासोऽग्निं देवा अजनयन्नजुर्यम्। नक्षत्रं प्रत्नममिनच्चरिष्णु

यक्षस्याध्यक्षं तविषं बृहन्तम्॥ १०.०८८.१३

२.५.२ आ यस्मिन् सप्त रश्मयः तता यज्ञस्य नेतरि।
मनुष्वद् दैव्यमष्टमं पोता विश्वं तदिन्वति।।

इन्वतिशब्दस्य भाष्यं सायणाचार्येण इविधात्वाधारेण व्याप्नोति इति कृतमस्ति। किन्तु तैत्तिरीयब्राह्मणे १.५.१.१ मृगशिरा(इन्वका) नक्षत्रस्य वैशिष्ट्यं कथने उल्लेखः अस्ति -
सोमस्येन्वका । विततानि परस्ताद्वयन्तोऽवस्तात् ।।
एकवारं यदा ततनस्य, विस्तारस्य क्रिया पूर्णा भवति, तदनन्तरं विस्तीर्णितानां शक्तीनां परस्परवयनं एव शिष्टं भवति। वयनेन एकस्य अष्टमस्य शक्त्याः जननं भवति। पोतात्र्कत्विक् विषये कथनमस्ति - त्विषिश्च अपचितिश्च

नेष्टापोतारौ। पोतृऋत्विजस्य कार्यं यः चितः अस्ति, तस्य अपचेतनं अस्ति, अयं प्रतीयते। किन्तु प्रस्तुतसंदर्भे पोता ग्रथनस्य, चितिकरणस्य कार्यं कर्तुं प्रतीयते। किं इन्वतिशब्दस्य विस्तारं जिन्वतिरूपेण(जीवनदाने) कर्तुं शक्यन्ते, विचारणीयः अस्ति।

# ऋग्वेदः सूक्तं २.६



## दे. अग्निः ।गायत्री

इमां मे अग्ने समिधमिमामुपसदं वनेः ।

इमा उ षु श्रुधी गिरः ॥१॥

अया ते अग्ने विधेमोर्जो नपादश्वमिष्टे ।

एना सूक्तेन सुजात ॥२॥

तं त्वा गीर्भिर्गिर्वणसं द्रविणस्युं द्रविणोदः ।

सपर्येम सपर्यवः ॥३॥

स बोधि सूरिर्मघवा वसुपते वसुदावन् ।

युयोध्यस्मद्द्वेषांसि ॥४॥

स नो वृष्टिं दिवस्परि स नो वाजमनर्वाणम् ।

स नः सहस्रिणीरिषः ॥५॥

ईळानायावस्यवे यविष्ठ दूत नो गिरा ।

यजिष्ठ होतरा गहि ॥६॥

अन्तर्ह्यग्न ईयसे विद्वाञ्जन्मोभया कवे ।

दूतो जन्येव मित्र्यः ॥७॥

स विद्वाँ आ च पिप्रयो यक्षि चिकित्व आनुषक् ।

आ चास्मिन्सत्सि बर्हिषि ॥८॥

# सायणभाष्यम्

' इमा मे ' इत्यष्टर्चं षष्ठं सूक्तं सोमाहुत्यार्षमाग्नेयं गायत्रम् । ' इमां मे गायत्रं हि ' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दस्यस्य विनियोगः । सूत्रितं च - ' इमां मे अग्ने समिधमिमामिति त्रयाणामुत्तमामुद्धरेत् ' (आश्व श्रौ. ४. १३) इति । अपराह्णिक्यामुपसदि 'इमां मे अग्ने समिधम्' इति तिस्र ऋचस्त्रिरभ्यस्ता नव सामिधेन्यः कृत्वा विनियोक्तव्याः । ' अथोपसत् ' इति खण्डे सूत्रितम्- ' इमां मे अग्ने समिधमिमामिति तु सामिधेन्यः ' ( आश्व श्रौ. ४. ८) इति ।।

इ॒मां मे॑ अग्ने स॒मिधं॑मि॒मामुं॑प॒सदं॑ वनेः ।

इ॒मा उ॒ षु श्रुं॑धी॒ गिरः॑ ॥१

इ॒माम् । मे॒ । अ॒ग्ने॒ । स॒म्ऽइधं॑म् । इ॒माम् । उ॒प॒ऽसदं॑म् ।
व॒ने॒रिति॑ वनेः ।

इ॒माः । उ॒ꣳ इति॑ । सु । श्रु॒धि॒ । गिरः॑ ॥१

इमां । मे। अग्ने। संऽइधं । इमां। उपऽसदं। वनेरिति वनेः ।

इमाः । ॐ इति । सु।श्रुधि। गिरः ॥१॥

हे अग्ने मे मदीयामिमामाधीयमानां समिधं इमामुपसदमुपसदनसाधनामाहुतिमुपसद्यागे क्रियमाणां वा वनेः । संभजेथाः । तथेमा उ इमा अपि गिरः स्तुतीः सु सुष्ठु श्रुधि। शृणु ॥१।।

अ॒या तें॑ अग्ने विधे॒मोर्जो॑ नपा॒दश्वं॑मिष्टे ।

ए॒ना सू॒क्तेनं॑ सुजात ॥२

अ॒या । ते॒ । अ॒ग्ने॒ । वि॒धे॒म॒ । ऊर्जः॑ । न॒पा॒त् । अश्व॑म्ऽइष्टे ।

ए॒ना । सु॒ऽउ॒क्तेन॑ । सु॒ऽजा॒त॒ ॥२

अया।ते। अग्ने। विधेम। ऊर्जः। नपात्। अश्वंऽइष्टे।

एना। सुऽउक्तेन। सुऽजात ॥२॥

हे अग्ने ते त्वामयानयाहुत्या विधेम । परिचरेम । हे ऊर्जो नपात् बलस्य नप्तः तस्य नपातयितर्वा हे अश्वमिष्टे व्यापकयज्ञ। यद्वा आशु क्रियमाणं कर्माश्वं । तदिच्छतीत्यश्वमिष्टिः । संत्वरमाणा ह्युपसदमाचरंति । ते कर्मभिः समत्वरंत ते तिस्रः सामिधेनीरनूच्य तिस्रो देवता अयजन्निति ब्राह्मणं । ऐ०ब्रा०३.४५। तादृशाग्रे ते त्वामयानयाहुत्या विधेम । परिचरेम । तथा हे सुजात शोभनजनन एना एतेन सूक्तेन स्तोत्रेण प्रीणयेमेति शेषः । यद्वा स्तुत्युपबृंहितेन विधेम ॥

तं त्वा॑ गी॒र्भिर्गिर्व॑णसं द्रविण॒स्युं द्र॑विणोदः ।

स॒प॒र्येम॑ सप॒र्यवः॑ ॥३

तम् । त्वा॒ । गीः॒ऽभिः । गिर्व॑णसम् । द्र॒वि॒ण॒स्युम् ।
द्र॒वि॒णः॒ऽदः॒ ।

स॒प॒र्येम॑ । स॒प॒र्यवः॑ ॥३

तं । त्वा । गीःऽभिः । गिर्वणसं । द्रविणस्युं । द्रविणःऽदः ।

सपर्येम । सपर्यवः ॥३॥

हे द्रविणोदो धनस्य दातरग्ने तं तादृशं गिर्वणसं गीर्भिः स्तुतिभिर्वननीयं द्रविणस्युं हविर्लक्षणधनेच्छुं त्वा त्वां सपर्यवः परिचरणकर्तारो वयं गीर्भिः स्तुतिभिः सपर्येम । परिचरेम ॥

स बोधि सूरिर्मघवा वसुपते वसुदावन् ।

युयोध्य१स्मद्द्वेषांसि ॥४

सः । बोधि । सूरिः । मघवा । वसुऽपते । वसुऽदावन् ।

युयोधि । अस्मत् । द्वेषांसि ॥४

सः। बोधि।सूरिः। मघऽवा। वसुऽपते । वसुऽदावन्।

युयोधि। अस्मत्।द्वेषांसि॥४॥

मघवान्नवान् सूरिर्विद्वान् प्रेरको वा स उक्तलक्षणकस्त्वं बोधि । बुध्यस्वास्मदीयं स्तोत्रं । किंच हे अग्ने द्वेषांसि द्वेष्टॄनस्मदस्मत्तो युयोधि । पृथक्कुरु ॥

स नों वृ॒ष्टिं दि॒वस्परि॒ स नो॒ वाजंमन॒र्वाणंम् ।

स नः॑ सह॒स्रिणी॒रिषः॑ ॥५

सः । न॒ः । वृ॒ष्टिम् । दि॒वः । परिं । सः । न॒ः । वाजंम् । अ॒न॒र्वाणंम् ।

सः । न॒ः । स॒ह॒स्रिणीः॑ । इषः॑ ॥५

सः।नः। वृष्टिं । दिवः। परि। सः।नः। वाजं। अनवार्णं ।

सः।नः। सहस्रिणीः। इषः॥५॥

सः स एवाग्निर्नोऽस्मदर्थं दिवस्परि द्युलोकादंतरिक्षात् ॥ परीति पंचम्यर्थानुवादी ॥ वृष्टिं करोतीति च शेषः । स एव नोऽस्मदर्थमनर्वाणमविचलमनल्पं वाजं बलं ददातु । तथा सहस्रिणीरपरिमितप्रकाराणीषोऽन्नानि स एवाग्निर्ददातु ॥

ईळा॑नायाव॒स्यवे॒ यवि॑ष्ठ दूत नो गि॒रा ।

यजि॑ष्ठ होत॒रा ग॑हि ॥६

ईळा॑नाय । अ॒व॒स्यवे॑ । यवि॑ष्ठ । दू॒त॒ । न॒ः । गि॒रा ।

यजि॑ष्ठ । हो॒त॒ः । आ । ग॒हि॒ ॥६

ईळानाय । अवस्यवे । यविष्ठ । दूत । नः। गिरा।

यजिष्ठ। होतः। आ। गहि ॥६॥

हे यविष्ठ युवत्तम दूत देवानां यज्ञादिसूचक यजिष्ठातिशयेन यष्टव्य होतर्देवानामाह्वातरग्ने नो गिरा स्मदीयया स्तुत्येळानाय पूजयित्रेऽवस्यवे स्वरक्षणमिच्छते मदर्थमागहि । आगच्छ ॥

अ॒न्तर्ह्य॑ग्न॒ ईय॑से वि॒द्वाञ्जन्मो॒भया॑ कवे ।

दू॒तो जन्ये॑व॒ मित्र्य॑ः ॥७

अ॒न्तः । हि । अ॒ग्ने॒ । ईय॑से । वि॒द्वान् । जन्म॑ । उ॒भया॑ ।
क॒वे॒ ।

दू॒तः । जन्या॑ऽइव । मित्र्य॑ः ॥७

अंतः। हि।अग्ने। ईयसे। विद्वान् । जन्म। उभया। कवे।

दूतः। जन्यऽइव। मित्र्यः ॥७॥

हे कवे मेधाविन्नग्ने अंतर्जनानां हृदय ईयसे हि । गच्छसि जानासि वा। हिः स होता सेदु दूत्यं चिकित्वाँ अंतरीयते । ४. ८. ४. । इत्यादिमंत्रांतरप्रसिद्धिद्योतनार्थः । कीदृशस्त्वं । उभया उभयविधानि जन्म जन्मानि यष्टॄणां यजमानानां

यष्टव्यानां देवानां च संबंधीनि विद्वान् जानन् सन् । ईयस इति संबंधः । तत्र दृष्टांतः । जन्यो जनेभ्यो हितो मित्र्यो विशेषेण मित्रेभ्यो हितो दूत इव। स यथा प्रजानां चित्तवृत्तिज्ञानाय राज्ञा प्रेरितस्तासां मनो जानाति तद्वत् त्वमप्यस्माकमंतरीयस इत्यर्थः । ।

स वि॒द्वाँ आ चं पिप्रयो॒ यक्षिं चिकित्व आनु॒षक् ।

आ चा॒स्मिन्त्संत्सि ब॒र्हिषिं ॥८

सः । वि॒द्वान् । आ । च॒ । पि॒प्र॒यः॒ । यक्षिं । चि॒कि॒त्वः॒ । आ॒नु॒षक् ।

आ । च॒ । अ॒स्मिन् । स॒त्सि॒ । ब॒र्हिषिं ॥८

सः। विद्वान् । आ। च। पिप्रयः। यक्षि। चिकित्वः । आनुषक्।

आ। च। अस्मिन् । सत्सि । बर्हिषि ॥८॥

हे अग्ने स त्वं विद्वान् विशेषाभिज्ञः सन् आ च पिप्रयः । सर्वतोऽस्मान्पूरय च कामैः । हे चिकित्वश्चेतनावन् आनुषक् अनुक्रमेण यक्षि । यज देवान् । आसत्सि । आसीद चास्मिन् स्तीर्णं बर्हिषि ॥ ॥२७॥

# ऋग्वेदः सूक्तं २.७

ऋग्वेदः - मण्डल २
← सूक्तं २.६ सूक्तं २.७ सूक्तं २.८ →
सोमाहुतिर्भार्गवः

## दे. अग्निः । गायत्री

श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमा भर ।

वसो पुरुस्पृहं रयिम् ॥१॥

मा नो अरातिरीशत देवस्य मर्त्यस्य च ।

पर्षि तस्या उत द्विषः ॥२॥

विश्वा उत त्वया वयं धारा उदन्या इव ।

अति गाहेमहि द्विषः ॥३॥

शुचिः पावक वन्द्योऽग्ने बृहद्वि रोचसे ।

त्वं घृतेभिराहुतः ॥४॥

त्वं नो असि भारताग्ने वशाभिरुक्षभिः ।

अष्टापदीभिराहुतः ॥५॥

द्र्वन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः ।

सहसस्पुत्रो अद्भुतः ॥६॥

## सायणभाष्यम्

' श्रेष्ठं यविष्ठ ' इति षडृचं सप्तमं सूक्तं सोमाहुत्यार्षम् आग्नेयं गायत्रम् । प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दसि

अस्य विनियोगः पूर्वसूक्ते एवोक्तः । श्रावणीकर्मण्याद्या विनियुक्ता ।।

श्रेष्ठं यविष्ठ भा॒रताग्ने॑ द्यु॒मन्त॒मा भ॑र ।

वसो॑ पुरु॒स्पृहं॑ र॒यिम् ॥१

श्रेष्ठ॑म् । य॒वि॒ष्ठ॒ । भ॒ा॒र॒त॒ । अग्ने॑ । द्यु॒ऽमन्त॑म् । आ । भ॒र॒ ।

वसो॒ इति॑ । पु॒रु॒ऽस्पृह॑म् । र॒यिम् ॥१

श्रेष्ठं। यविष्ठ । भारत । अग्ने। द्युऽमंतं । आ। भर।

वसो इति । पुरुऽस्पृहं । रयिं ॥१॥

हे अग्ने यविष्ठ युवत्तम हे भारत । भरता ऋत्विजः । तेषां संबंधी भारतः । तेऽध्वर्य्वादिभिर्मंथनहविःस्तोत्रादिना

व्याप्रियमाणत्वात् । तादृश हे वसो वासक व्याप्त वा एवंरूपाग्ने श्रेष्ठमतिप्रशस्यं द्युमंतं दीप्तिमंतं पुरुस्पृहं बहुभिरर्थिभिः स्पृहणीयं रयिमाभर । आहर॥

मा नो॒ अरा॑तिरीशत दे॒वस्य॒ मर्त्य॑स्य च ।

पर्षि॒ तस्या॑ उ॒त द्वि॒षः ॥२

मा । नः॒ । अरा॑तिः । ई॒श॒त॒ । दे॒वस्य॑ । मर्त्य॑स्य । च॒ ।

पर्षि॑ । तस्याः॑ । उ॒त । द्वि॒षः ॥२

मा। नः । अरातिः। ईशत । देवस्य । मर्त्यस्य । च।

पर्षि। तस्याः। उत । द्विषः ॥२॥

हे अग्ने त्वदनुग्रहान्नोऽस्मानरातिरदानं शत्रुत्वं । यद्वा छंदस्यरातिशब्दः शत्रुवाची स्त्रीलिंगो भवति । अदाता शत्रुर्मेशत । पराभवितुं शक्तो मा भूत् । मा विषयीकुर्यात् । अरातिर्विशेष्यते । देवस्य च मर्त्यस्य च संबंधिनी तैः कारिता । उत अपि च तस्या उभयविधाया द्विषोऽस्मदरतिः पर्षि । पूरय ॥ ।

विश्वा॑ उ॒त त्वया॑ व॒यं धारा॑ उद॒न्या॑ इव ।

अति॑ गाहेमहि॒ द्विषः॑ ॥३

विश्वाः॑ । उ॒त । त्वया॑ । व॒यम् । धाराः॑ । उ॒द॒न्याः॑ऽइव ।

अति॑ । गा॒हे॒म॒हि॒ । द्विषः॑ ॥३

विश्वाः । उत । त्वया । वयं । धाराः । उदन्याःऽइव।

अति । गाहेमहि । द्विषः ॥३॥

उत अपि च हे अग्ने वयं त्वदनुग्रहाद्विश्वा द्विषः सर्वानपि द्वेष्टॄन् उदन्या धारा इव उदकसंबंधिनीर्धीरा अल्पस्नुतीरिव त्मनात्मनैवान्यनिरपेक्षेणातिगाहेमहि । अतिक्रम्य गच्छेम ॥

शुचि॑ः पावक॒ वन्द्योऽग्ने॑ बृ॒हद्वि रो॑चसे ।

त्वं घृ॒तेभि॒राहु॑तः ॥४

शुचि॑ः । पा॒व॒क॒ । वन्द्य॑ः । अग्ने॑ । बृ॒हत् । वि । रो॒च॒से॒ ।

त्वम् । घृ॒तेभि॑ः । आऽहु॑तः ॥४

शुचिः । पावक। वंद्यः। अग्ने । बृहत्। वि। रोचसे।

त्वं । घृतेभिः । आऽहुतः ॥४॥

हे पावक शोधकाग्ने शुचिः शुद्धो वंद्यो नमस्कार्यः सन् बृहत् महत् अत्यधिकं विरोचसे । विविधं दीप्यसे । यतस्त्वं घृतेभिर्घृतैराहुत । समंतात्सिक्तः । अतो विरोचसे ॥

त्वं नो॑ असि भार॒ताग्ने॑ व॒शाभि॑रु॒क्षभिः॑ ।

अ॒ष्टाप॑दीभि॒राहु॑तः ॥५

त्वम् । न॒ः । अ॒सि॒ । भा॒र॒त॒ । अग्ने॑ । व॒शाभिः॑ । उ॒क्षऽभिः॑ ।

अ॒ष्टाऽप॑दीभिः । आऽहु॑तः ॥५

त्वं । नः। असि । भारत। अग्ने। वशाभिः । उक्षऽभिः।

अष्टाऽपदीभिः । आऽहुतः ॥५॥

हे भारत ॠत्विजां पुत्रस्थानीयाग्ने नोऽस्मदीयस्त्वं वशाभिर्वंध्याभिर्गोभिः उक्षभिः सेक्तृभिर्बलीवर्दैः अष्टापदीभिर्गर्भिणीभिश्चाहुत आराधितोऽसि ॥

द्र्वंन्नः स॒र्पिरांसुतिः प्र॒त्नो होता॒ वरेंण्यः ।

सहंसस्पु॒त्रो अद्भुंतः ॥६

द्रुऽअंन्नः । स॒र्पिःऽआंसुतिः । प्र॒त्नः । होतां । वरेंण्यः ।

सहंसः । पु॒त्रः । अद्भुंतः ॥६

द्रुऽअन्नः । सर्पिःऽआसुतिः । प्रत्नः । होता। वरेण्यः।

सहसः । पुत्रः । अद्भुतः ॥६॥

द्र्वन्नः समिद्रूपान्नः सर्पिरासुतिः सर्पिरासूयत आसिच्यते यस्मिन् तादृशः प्रत्नः पुरातनो होता होमनिष्पादको वरेण्यो वरणीयः सहसस्पुत्रः सहसो बलस्य पुत्रस्थानीयः । बलेनोत्पन्नत्वात् । अद्भुत आश्चर्यभूतः । रमणीय इत्यर्थः । एवंमहानुभावोऽग्निर्मामनुजानात्वित्यर्थः ॥ ॥ २८ ॥

# ऋग्वेदः सूक्तं २.८



## दे. अग्निः। गायत्री, ६ अनुष्टुप्

वाजयन्निव नू रथान्योगाँ अग्नेरुप स्तुहि ।

यशस्तमस्य मीळ्हुषः ॥१॥

यः सुनीथो ददाशुषेऽजुर्यो जरयन्नरिम् ।

चारुप्रतीक आहुतः ॥२॥

य उ श्रिया दमेष्वा दोषोषसि प्रशस्यते ।

यस्य व्रतं न मीयते ॥३॥

आ यः स्वर्ण भानुना चित्रो विभात्यर्चिषा ।

अञ्जानो अजरैरभि ॥४॥

अत्रिमनु स्वराज्यमग्निमुक्थानि वावृधुः ।

विश्वा अधि श्रियो दधे ॥५॥

अग्नेरिन्द्रस्य सोमस्य देवानामूतिभिर्वयम् ।

अरिष्यन्तः सचेमह्यभि ष्याम पृतन्यतः ॥६॥

## सायणभाष्यम्

' वाजयन्निव ' इति षड्चमष्टमं सूक्तम् । सोमाहुतेर्हशब्दानुवृत्तस्याभावात् मण्डलद्रष्टा गृत्समद ऋषिः । अग्निर्देवता । हिशब्दाद्गायत्री छन्दः ।

अन्त्यानुष्टुप् । ' वाजयन्निवान्त्यानुष्टुप् ' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोस्तृतीयसूक्तत्वेन अस्योत्तमावर्जितस्य विनियोग उक्तः ।।

वा॒ज॒यन्नि॑व॒ नू रथा॒न्योगाँ॑ अ॒ग्नेरुप॑ स्तुहि ।

य॒शस्त॑मस्य मी॒ळ्हुषः॑ ॥१

वा॒ज॒यन्ऽइ॑व । नु । रथा॑न् । योगा॑न् । अ॒ग्नेः । उप॑ । स्तु॒हि॒ ।

य॒शःऽत॑मस्य । मी॒ळ्हुषः॑ ॥१

वाजयन्ऽइव।नु। रथान्। योगान् । अग्नेः। उप स्तुहि।

यश:ऽतमस्य। मीळ्हुषः ॥१॥

हे अंतरात्मन् नु क्षिप्रमग्नेर्योगानश्वानुपस्तुहि । कीदृशस्याग्नेः । यशस्तमस्य प्रवृद्धयशसः ॥ मत्वर्थो लुप्यते मीळ्हुषः सेक्तुः फलस्य । ईदृशस्य योगान् स्तुहि । होतरिति वा संबोध्यं । स्तुतौ दृष्टांतः । वाजयन्निव । अन्नमिच्छन् पुरुष इव । स यथाश्वान् गमनाय स्तौति तद्वत् । यद्वोक्तलक्षणस्याग्नेर्गमनसाधनान्रथान् स्तुहि । ।

यः सु॑नी॒थो द॑दा॒शुषे॑ऽजु॒र्यो ज॒रय॑न्न॒रिम् ।

चारु॑प्रतीक॒ आहु॑तः ॥२

यः । सु॒ऽनी॒थः । द॒दा॒शुषे॑ । अ॒जु॒र्यः । ज॒रय॑न् । अ॒रिम् ।

चारु॑ऽप्रतीकः । आऽहु॑तः ॥२

यः । सुऽनीथः । ददाशुषे । अजुर्यः। जरयन् । अरिं।

चारुऽप्रतीकः । आऽहुतः ॥२॥

सुनीथः शोभननयनोऽजुर्योऽजरणीयोऽनभिभाव्यः चारुप्रतीकः शोभनोपक्रमो योऽस्ति सोऽग्निर्ददाशुषे हविर्दत्तवते यजमानाय तदर्थमरिं तस्य शत्रुं जरयन् नाशयन् आहुतः । समंतादाराधितो भवति ।

य उं श्रि॒या दमे॒ष्वा दो॒षोषसिं प्रश॒स्यतें ।

यस्यं व्र॒तं न मीयंते ॥३

यः । ऊ॒ इतिं । श्रि॒या । दमेंषु । आ । दो॒षा । उ॒षसिं । प्र॒ऽश॒स्यतें ।

यस्यं । व्र॒तम् । न । मीयंते ॥३

यः। ऊं इति। श्रिया । दमेषु । आ । दोषा। उषसि ।
प्रऽशस्यते ।

यस्यं । व्रतं । न।मीयते ॥३॥

योऽग्निरु श्रिया ज्वालया युक्तः सन् दमेषु आ आगत्य दोषा रात्रिषु उषस्यहःसु च प्रशस्यते । स्तूयते । यस्याग्नेर्व्रतं कर्म न मीयते । न हिंस्यते न क्षीयते वा । ।

आ यः स्व१॒र्ण भा॒नुनां चि॒त्रो वि॒भात्य॒र्चिषां ।

अ॒ञ्जा॒नो अ॒जरैं॒रभि ॥४

आ । यः । स्वः॑ । न । भा॒नुनां । चि॒त्रः । वि॒ऽभातिं ।
अ॒र्चिषां ।

अ॒ञ्जा॒नः । अ॒जरैः॑ । अ॒भि ॥४

आ। यः। स्वः।न। भानुना। चित्रः। विऽभाति।अर्चिषा।

अंजानः। अजरैः। अभि॥४॥

योऽग्निश्चित्रश्चायनीयो नानावर्णो वार्चिषा ज्वालया रश्मिसमूहेनाविभाति । सर्वतो भासते । तत्र दृष्टांतः । स्वर्भानुना । किरणेन सूर्य इव । स यथा विभाति तद्वत् । किं कुर्वन् । अजरैर्नित्यैर्ज्वालासमूहैरभि सर्वतोंऽजानो व्यंजयन् प्रकाशयन् ॥

अत्रि॒मनुं स्व॒राज्यंम॒ग्निमु॒क्थानिं वावृधुः ।

विश्वा॒ अधि॒ श्रियों दधे ॥५

अत्रिंम् । अनुं । स्व॒ऽराज्यंम् । अ॒ग्निम् । उ॒क्थानिं । व॒वृ॒धुः ।

विश्वाः । अधि । श्रियः । द॒धे॒ ॥५

अत्रिं। अनु। स्वऽराज्यं । अग्निं । उक्थानि। ववृधुः।

विश्वाः। अधि। श्रियः।दधे ॥५॥

अत्रिं शत्रूणामन्नानां वा भक्षकं स्वराज्यं स्वयमेव राजमानं स्वराज्यमनु अभिलक्ष्य वाग्निमुक्थानि शस्त्राणि ववृधुः । वर्धयंति । स चाभिर्विश्वाः सर्वाः श्रियोऽधि दधे । धारयति ।।

अ॒ग्नेरिन्द्रं॑स्य॒ सोमं॑स्य दे॒वानां॑मू॒तिभि॑र्व॒यम् ।

अरिं॑ष्यन्तः सचेमह्य॒भि ष्यां॑म पृतन्य॒तः ॥६

अ॒ग्नेः । इन्द्रं॑स्य । सोमं॑स्य । दे॒वानां॑म् । ऊ॒तिऽभिः॑ । व॒यम् ।

अरिंष्यन्तः । स॒चे॒म॒हि॒ । अ॒भि । स्या॒म॒ । पृ॒त॒न्य॒तः ॥६

अग्ने: । इंद्रस्य । सोमस्य । देवानां । ऊतिऽभिः । वयं ।

अरिष्यंतः । सचेमहि । अभि । स्याम । पृतन्यतः ॥६॥

अरिष्यंतः केनाप्यहिंस्यमाना वयमग्नेरिंद्रस्य सोमस्य देवानामन्येषामप्यूतिभी रक्षणाभिः सचेमहि । युक्ता भवेम । तथा रक्षायुक्ता वयं पृतन्यतः पृतनामात्मन इच्छतः शत्रूनभिष्याम । अभिभवेम ॥ पृतनाशब्दात्क्यचि कव्यध्वरपृतनस्यर्चि लोप इत्यवर्णलोपः ॥ ॥ २९ ॥

वेदार्थस्य प्रकाशेन तमो हार्द निवारयन् ।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति

श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क भूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थाकाशे ऋक्संहिताभाष्ये द्वितीयाष्टके पंचमोऽध्यायः समाप्तः ।।

# ऋग्वेदः सूक्तं २.९

ऋग्वेदः - मण्डल २
← सूक्तं २.८
सूक्तं २.९
गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः
सूक्तं २.१० →

## दे. अग्निः। त्रिष्टुप्

नि होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत्सुदक्षः ।

अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः ॥१॥

त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता ।

अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपाः ॥२॥

विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे ।

यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवींषि जुहुरे समिद्धे ॥३॥

अग्ने यजस्व हविषा यजीयाञ्छ्रुष्टी देष्णमभि गृणीहि राधः ।

त्वं ह्यसि रयिपती रयीणां त्वं शुक्रस्य वचसो मनोता ॥४॥

उभयं ते न क्षीयते वसव्यं दिवेदिवे जायमानस्य दस्म ।

कृधि क्षुमन्तं जरितारमग्ने कृधि पतिं स्वपत्यस्य रायः ॥५॥

सैनानीकेन सुविदत्रो अस्मे यष्टा देवाँ आयजिष्ठः स्वस्ति ।

अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि ॥६॥

## सायणभाष्यम्

॥

।। श्रीगणेशाय नमः ।।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्। ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ।।

' नि होता ' इति षड्ऋचं नवमं सूक्तं गृत्समदस्यार्षं ' नि होता ' इत्यनुक्रान्तत्वात् । अनुक्तत्वात् त्रिष्टुप् । मण्डलादिपरिभाषयाग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छन्दसि अस्य विनियोगः । ' अथैतस्याः - ' इति खण्डे सूत्रितं-' नि होता होतृषदन इति सूक्ते ' ( आश्व. श्रौ. ४.१३) इति ।। अग्निप्रणयन आद्ये ऋचौ विनियुक्ते । ' पञ्चम्यां पौर्णमास्याम् ' इति खण्डे सूत्रितं- ' नि होता होतृषदन इति द्वे ' ( आश्व श्रौ २. १७) ।।

नि होतां होतृ॒षदं॑ने॒ विदां॑नस्त्वे॒षो दीं॑दि॒वाँ अं॑सदत्सु॒दक्षः॑ ।

अदं॑ब्धव्रतप्रमति॒र्वसिं॑ष्ठः सहस्र॒म्भ॒रः शुचिं॑जिह्वो अ॒ग्निः ॥
१

नि । होतां । हो॒तृ॒ऽसदं॑ने । विदाा॑नः । त्वे॒षः । दी॒दि॒ऽवान् ।
अ॒स॒द॒त् । सु॒ऽदक्षः॑ ।

अदं॑ब्धव्रतऽप्रमतिः । वसिं॑ष्ठः । स॒ह॒स्र॒म्ऽभ॒रः ।
शुचिं॑ऽजिह्वः । अ॒ग्निः ॥१

नि । होता। होतृऽसदने । विदानः । त्वेषः। दीदिऽवान् ।
असदत् । सुऽदक्षः ।

अदब्धव्रतऽप्रमतिः । वसिष्ठः । सहस्रंऽभरः। शुचिऽजिह्वः
। अग्निः ॥१॥

गृत्समदः स्तौति । होता देवानामाह्वाता विदानो विद्वान्
त्वेषः प्रवृद्धो दीदिवान् दीप्यमानः सुदक्षः
शोभनबलोऽदब्धव्रत प्रमतिः ! अदब्धान्यहिंसितानि
व्रतानि कर्माणि यस्याः सादब्धव्रता प्रमतिः प्रकृष्टा
बुद्धिर्यस्य स तथोक्तः । वसिष्ठः सर्वस्य वासयितृतमः ॥

वासयतेस्तृजंतस्येष्ठनि रूपं ॥ सहस्रंभरः सहस्रस्यानेकविधस्य भर्ता । विहरणेन नानाविधरूपस्य धारक इत्यर्थः । यद्वा सहस्रस्य सर्वस्य भर्ता । तथा च वाजसनेयं । सर्वं वै सहस्रं सर्वंभर इत्येव तदाहेति । शुचिजिह्वः । शुचिर्दीप्ता जिह्वा ज्वाला यस्य स तथोक्तः । एवंभूतो ऽग्निर्होतृषदने । होतात्र सीदतीति होतृषदनमुत्तरा वेदी ॥ अधिकरणे ल्युट् । तत्र न्यसदत् । नितरां सीदतु ॥ उक्तार्थे ब्राह्मणं । नि होता होतृषदने विदान इत्यग्निर्वै देवानां होता तस्यैतद्धोतृषदनं यदुत्तरवेदीनाभिस्त्वेषो दीदिवां असदत्सुदक्ष इत्यासन्नो हि स तर्हि भवत्यदब्धव्रतप्रमतिर्वसिष्ठ इत्यग्निर्वै देवानां वसिष्ठः सहस्रंभरः। शुचिजिह्वो अग्निरित्येषा ह वा अस्य सहस्रंभरता यदेनमेकं संतं बहुधा विहरंति । ऐ° ब्रा° १. २८.। इति ॥

त्वं दू॒तस्त्वमु॑ नः पर॒स्पास्त्वं वस्य॒ आ वृ॑षभ प्रणे॒ता ।

अग्ने॑ तो॒कस्य॑ न॒स्तने॑ त॒नूना॒मप्र॑युच्छ॒न्दीद्य॑द्बोधि गो॒पाः ॥२

त्वम् । दू॒तः । त्वम् । ऊ॒ँ इति॑ । न॒ः । प॒र॒ःऽपाः । त्वम् ।
वस्य॑ः । आ । वृ॒ष॒भ॒ । प्र॒ऽने॒ता ।

अग्ने॑ । तो॒कस्य॑ । न॒ः । तने॑ । त॒नूना॑म् । अप्र॑ऽयुच्छन् ।
दीद्य॑त् । बो॒धि॒ । गो॒पाः ॥२

त्वं । दूतः । त्वं । ॐ इति । नः । परःऽपाः । त्वं । वस्यः ।
आ । वृषभ । प्रऽनेता।।

अग्ने । तोकस्यं । नः। तने । तनूनां । अप्रऽयुच्छन्। दीद्यत्
। बोधि गोपाः ॥२॥

हे वृषभ अभिमतफलवर्षक हे अग्ने त्वं दूतोऽस्मदीये यज्ञे देवाह्वानार्थं दूतो भव । त्वम् त्वमेव नोऽस्माकं परस्पा आपद्भ्यः पारयिता पाता च भव । किंच त्वं वस्यो वसुनो धनस्य आ प्रणेतास्मदाभिमुख्येन प्रापयिता भव । अप्रयुच्छन् अप्रमाद्यन् । दीद्यत्॥ दीदयतिर्दीप्तिकर्मा ॥ शोभमानः । त्वं नोऽस्माकं तोकस्य पुत्रस्य तने तनोति विस्तारयति कुलमिति तनः पौत्रः । तस्मिन् अस्मदीयानां तनूनां गोपा गोपायिता । तथा च ब्राह्मणं । अग्निर्वै देवानां गोपा अग्निमेव तत्सर्वतो गोप्तारं परिदत्त आत्मने च यजमानाय च । ऐ० ब्रा०१.२८ ।। इति । तादृशस्त्वं च गोपायिता भवामीति बोधि । बुध्यस्व ॥

वि॒धेमं ते पर॒मे जन्मं॑न्नग्ने वि॒धेम॒ स्तोमै॒रवं॑रे स॒धस्थें ।

यस्मा॒द्योनें॑रु॒दारिं॑था॒ यजे॒ तं प्र त्वे ह॒वींषिं जुहु॒रे समिं॑द्धे ॥३

वि॒धेमं । ते॒ । प॒र॒मे । जन्मंन् । अ॒ग्ने॒ । वि॒धेमं । स्तोमैः । अवंरे । स॒धऽस्थें ।

यस्मांत् । योनेः । उ॒त्ऽआरिंथ । यजें । तम् । प्र । त्वे इतिं । ह॒वींषिं । जु॒हु॒रे॒ । सम्ऽइंद्धे ॥३

विधेम । ते । परमे । जन्मन्। अग्ने । विधेम । स्तोमैः । अवरे । सधऽस्थे ।

यस्मात्। योनेः। उत्ऽआरिथ। यजे । तं। प्र। त्वे इति । हवींषि । जुहुरे। संऽइद्धे ॥३॥

हे अग्ने परम उत्कृष्टे जन्मन्। जायते प्रादुर्भवत्यस्मिन्निति जन्मस्थानं द्यौः । तस्मिन् द्युलोकेऽवस्थिताय ते तुभ्यं विधेम । स्तुतिभिः परिचरेम । अवरे द्युलोकादधस्तने सधस्थें ऽतरिक्षे स्थिताय तुभ्यं स्तोमैः स्तोत्रैर्विधम् ।। परिचरेम । यस्माद्योनेः पृथिवीरूपात्स्थानात् त्वमुदारिथ

उद्गतोऽसि प्रादुर्भूतोऽसि तं पृथिवीप्रदेशं यजे। पूजयामि । तत्र हि समिद्धे समिद्भिः समिध्यमाने त्वे त्वयि हवींषि पुरोडाशादीनि प्रजुहुरे । अध्वर्य्वादयः प्रजुह्वति ॥
जुहोतेर्लिटि रूपं ।

अग्ने॒ यज॑स्व ह॒विषा॒ यजी॑याञ्छ्रु॒ष्टी दे॒ष्णम॒भि गृ॑णीहि॒ राधः॑ ।

त्वं ह्यसि॑ रयि॒पती॑ रयी॒णां त्वं शु॒क्रस्य॒ वच॑सो म॒नोता॑ ॥४

अग्ने॑ । यज॑स्व । ह॒विषा॑ । यजी॑यान् । श्रु॒ष्टी । दे॒ष्णम् । अ॒भि । गृ॒णी॒हि॒ । राधः॑ ।

त्वम् । हि । असि॑ । र॒यि॒ऽपतिः॑ । र॒यी॒णाम् । त्वम् । शु॒क्रस्य॑ । वच॑सः । म॒नोता॑ ॥४

अग्ने । यजस्व । हविषा। यजीयान् । श्रुष्टी। देष्णं । अभि । गृणीहि । राधः।।

त्वं । हि। असि। रयिऽपर्तिः । रयीणां । त्वं । शुक्रस्य । वर्चसः । मनोता ॥४॥

हे अग्ने यजीयान् यष्टृतमस्त्वं हविषास्मद्दत्तेन यजस्व । देवान् संयोजय । देष्णं देयं राधोऽन्नं श्रुष्टी ॥ श्रुष्टीति क्षिप्रनाम ॥ क्षिप्रमभिगृणीहि । देवानां पुरत इदं स्वादुतरमिदं स्वादुतरमिति ब्रूहि । यद्वा श्रुष्टी क्षिप्रकारी त्वं देष्णं देयं राधो धनमभिगृणीहि । अस्मदाभिमुख्येन ब्रूहि । प्रयच्छेत्यर्थः । दानसामर्थ्यं दर्शयति । त्वं रयीणां धनानां मध्ये रयिपतिरुत्तमस्य धनस्य पतिरसि हि। यद्वा रयीणां रयिपतिरित्यत्रैको रयिशब्दो ऽनुवादः । त्वं शुक्रस्य दीप्तस्य वचसोऽस्मदीयस्य स्तोत्रस्य मनोता प्रज्ञाता भवसि । यद्वा मानयिता ॥

उ॒भयं॑ ते॒ न क्षीयं॑ते वस॒व्यं॑ दि॒वेदि॑वे॒ जाय॑मानस्य दस्म ।

कृ॒धि क्षु॒मन्तं॑ जरि॒तार॑मग्ने कृ॒धि पतिं॑ स्वप॒त्यस्यं॑ रा॒यः ॥५

उ॒भय॑म् । ते॒ । न । क्षी॒य॒ते॒ । व॒स॒व्य॑म् । दि॒वेऽदि॑वे ।
जाय॑मानस्य । द॒स्म॒ ।

कृ॒धि । क्षु॒ऽमन्त॑म् । ज॒रि॒तार॑म् । अ॒ग्ने॒ । कृ॒धि । पति॑म् ।
सु॒ऽअ॒प॒त्यस्य॑ । रा॒यः ॥५

उभयं । ते । न। क्षीयते । वसव्यं । दिवेऽदिवे ।
जायमानस्य । दस्म।

कृधि । क्षुऽमंतं । जरितारं । अग्ने । कृधि । पतिं ।
सुऽअपत्यस्य । रायः ॥५॥

दस्म दर्शनीयं हे अग्ने दिवेदिवे प्रतिदिनमग्निहोत्रकाले जायमानस्य ते तवोभयं वसव्यं दिव्यं भौमं च वसु । वस्वादित्वात्स्वार्थिको यत्प्रत्ययः । पा° ५.४.३०. ४. ॥ तादृशमुभयं वसु न क्षीयते । न हीयते । अस्योभयविधधनसद्भावे मंत्रवर्णः त्वं ह्यग्ने दिव्यस्य राजसि त्वं पार्थिवस्येत्यत्रोक्तः । अतस्त्वं जरितारं तव स्तोत्रं कुर्वाणमिमं यजमानं क्षुमंतमन्नवंतं कीर्तिमंतं वा कृधि । कुरु । किंच स्वपत्यस्य शोभनापत्ययुक्तस्य रायो धनस्य पतिं स्वामिनं कुरु ॥

सैनानीकेन सुवि॒दत्रो॑ अ॒स्मे यष्टा॑ दे॒वाँ आयं॑जिष्ठः स्व॒स्ति ।

अदं॑ब्धो गो॒पा उ॒त नः॑ पर॒स्पा अग्ने॑ द्यु॒मदु॒त रे॒वद्दि॑दीहि ॥६

सः । ए॒ना । अनी॑केन । सु॒ऽवि॒दत्रः॑ । अ॒स्मे इति॑ । यष्टा॑ । दे॒वान् । आऽयं॑जिष्ठः । स्व॒स्ति ।

यः । सुन्वन्तम् । अवति । यः । पचन्तम् । यः । शंसन्तम् । यः । शशमानम् । ऊती ।

यस्य । ब्रह्म । वर्धनम् । यस्य । सोमः । यस्य । इदम् । राधः । सः । जनासः । इन्द्रः ॥१४

यः सुन्वंतं सोमाभिषवं कुर्वंतं यजमानमवति । रक्षति । यश्च पुरोडाशादीनि हवींषि पचंतं । यश्चोती ऊतये ॥ सुपां सुलुगिति चतुर्थ्याः पूर्वसवर्णदीर्घः ॥ स्वरक्षायै शस्त्राणि शंसंतं यश्च शशमानमवति । स्तोत्रं कुर्वाणं रक्षति । ब्रह्म परिवृढं स्तोत्रं यस्य वर्धनं वृद्धिकरं भवति । तथा यस्य सोमो वृद्धिहेतुर्भवति । यस्य चेदमस्मदीयं राधः पुरोडाशादिलक्षणमन्नं वृद्धिकरं भवति । स इंद्र इत्यादि प्रसिद्धं ॥ १४

यः सुंन्व॒ते पचंते दु॒ध्र आ चि॒द्वाज॒ं दर्द॑र्षि॒ स किलांसि स॒त्यः

।

व॒यं तं इन्द्र वि॒श्वहं प्रि॒यासः॑ सु॒वीरांसो वि॒दथ॒मा वंदेम ॥
१५

यः । सु॒न्व॒ते । पचंते । दु॒ध्रः । आ । चि॒त् । वाजंम् । दर्दर्षि
। सः । किलं । अ॒सि॒ । स॒त्यः ।

व॒यम् । ते॒ । इ॒न्द्र॒ । वि॒श्वहं । प्रि॒यासः॑ । सु॒ऽवीरांसः ।
वि॒दथंम् । आ । व॒दे॒म॒ ॥१५

यः । सुन्वते । पचते । दुध्रः । आ । चित् । वाजम् । दर्दर्षि
। सः । किल । असि । सत्यः ।

वयम् । ते । इन्द्र । विश्वह । प्रियासः । सुऽवीरासः ।
विदथम् । आ । वदेम ॥१५

इदानीमृषिः साक्षात्कृतमिंद्रं प्रति प्रब्रूते । हे इंद्र यो दुध्रो दुर्धरः सन् सुन्वते सोमाभिषवं कुर्वते पुरोडाशादिहवींषि पचते यजमानाय वाजमन्नं बलं वा दर्दर्षि। भृशं प्रापयसि स तादृशस्त्वं सत्यो यथार्थभूतोऽसि । न पुनर्नास्तीति बुद्धियोग्योऽसि । किलेति प्रसिद्धौ । ते तव प्रियासः सुवीरासः कल्याणपुत्रपौत्राः संतो वयं विश्वह सर्वेष्वहःसु विदथं स्तोत्रमावदेम । ब्रूयाम ॥ ॥ ९॥

**टिप्पणी**

पुराणेषु सूक्तस्य विनियोगं -

ब्रह्मपुराणम् २.७०.२२

अस्य सूक्तस्य विनियोगं सार्वत्रिकरूपेण निष्केवल्य शस्त्रे अस्ति। सोमयागे माध्यन्दिनसवने इन्द्रस्य द्वयौ रूपौ सन्ति - मरुत्वतीयम् एवं निष्केवल्यं। मरुत्वतीयम् - यदा इन्द्रः मरुद्गणानां साहाय्येन महान् भवति। निष्केवल्यं - यदा इन्द्रः मरुद्गणानां साहाय्यं नेच्छति, सः एकलमेव दैत्यानां हनने समर्थः अस्ति। योगदृष्ट्या, निष्केवल्या स्थितिः निर्विकल्पसमाधेः स्थितिः प्रतीयते।

२.१२.९ यो विश्वस्य प्रतिमानं बभूव - ब्रह्माण्डपुराणादिषु (१.५.६१) कथनमस्ति यत् ब्रह्मा पञ्चप्रकारेण सृष्ट्यां प्रवेशमकरोत्। स्थावरेषु विपर्ययरूपेण, तिर्यक्सु शक्तिरूपेण, मनुष्येषु सिद्धिरूपेण एवं देवेषु पुष्टिरूपेण। विपर्ययस्य किमर्थमस्ति। साधारणरूपेण, स्थावरेषु दर्पण - सममिति विद्यमाना अस्ति। वृक्षेषु, देहस्य चक्षु,

हस्तादिषु सर्वत्र दर्पणसममिति अस्ति। अयं प्रतीयते यत् पुराणस्य विपर्ययस्य इतिश्री अत्रैव न भवति। देहस्य ये उच्चतर कोशाः सन्ति, तेभ्यः निम्नतरकोशाः विपर्ययाः भवितुमर्हन्ति। अपि च, अयं सार्वत्रिक रूपेण लौकिका धारणा अस्ति - यथा पिण्डे तथा ब्रह्माण्डे।

२.१२.१२

स एष सप्तरश्मिर्वृषभस्तुविष्मान्तदेतदृचाभ्यनूच्यते यस्सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्त सिन्धून्यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्र इति ७ यस्सप्तरश्मिरिति सप्त ह्येत आदित्यस्य रश्मयः वृषभ इति एष ह्येवासाम्प्रजानामृषभः तुविष्मानिति महीयैवास्यैषा ८ अवासृजत्सर्तवे सप्त सिन्धूनिति सप्त ह्येते

सिन्धवः तैरिदं सर्वं सितं तद्यदेतैरिदं सर्वं सितं तस्मात्सिन्धवः ९ यो रौहिणमस्फुरद्वज्रबाहुरिति एष हि रौहिणमस्फुरद्वज्रबाहुः १० द्यामारोहन्तं स जनास इन्द्र इति एष हीन्द्रः - जैमिनीयोपनिषद्ब्राह्मणम् १.९.२



*रौहिणकपाल-द्वय*

रौहिण शब्दः ऋग्वेदे १.१०३.२ मध्ये अपि प्रकटयति। तत्र इन्द्रः रौहिणं भेदयति। वर्तमानप्रसंगे इन्द्रः रौहिणमस्फुरति। रौहिणः किमस्ति, अस्मिन् प्रसंगे सोमयागे रोहिणकपाल-द्वयस्य उपयोगं

द्रष्टव्यमस्ति। अयं युगलं द्यावापृथिव्योः, अथवा ऊर्जायाः आरोहण - अवरोहणस्य प्रतीकमस्ति। सामान्यपरिस्थितिषु ऊर्जायाः आरोहण-अवरोहणम् सर्वदैव भवति। तर्हि इन्द्रेण अस्य स्फुरणस्य किं अर्थं भवितुं शक्यते। सामान्यरूपेण अयं प्रक्रिया मन्दगत्या घटति। स्फुरणं तदैव भवति यदा प्रक्रिया वैद्युद्गत्या घटति। रौहिण शब्दः वैदिके साहित्ये दुर्लभं शब्दमस्ति। अतएव, पुराणेषु रौहिणस्य विषये यः सूचना उपलब्धा भवति, तत् दुर्लभमस्ति। कथनमस्ति यत् यदा गरुडस्य अत्यधिक भारेण रौहिण वृक्षस्य शाखायाः भङ्गमभवत्, तदा वालखिल्या ऋषयः अपि वृक्षोपरि लम्बयित्वा तपोरताः अभूवन्। तदा गरुडस्य पितुः कश्यपस्य प्रार्थनया वालखिल्याः रौहिणं त्यक्त्वा अन्यत्र गता अभूवन्। वालखिल्य शब्दे वालः प्रकीर्णायाः ऊर्जायाः, ऊर्जा यस्य एण्ट्रांपी अधिकमस्ति,

अव्यवस्थितायाः ऊर्जायाः प्रतीकमस्ति। अस्याः ऊर्जायाः व्यवस्थानं अपेक्षितमस्ति।

संयुज्य तपसात्मानम् ऐन्द्रं बिभ्रन्महद्वपुः ।
अदृश्यत मुहूर्तेन दिवि च व्योम्नि चेह च ।। ६६। ।

तमिन्द्रमिति मत्वा तु दैत्यौ भीमपराक्रमौ । धुनिश्च
चुमुरिश्चोभौ सायुधावभिपेततुः ।। ६७ ।।

विदित्वा स तयोर्भावम् ऋषिः पापं चिकीर्षतोः । यो
जात इति सूक्तेन कर्माण्यैन्द्राण्यकीर्तयत् ।। ६८ ।।

उक्तेषु कर्मस्वैन्द्रेषु भीस्तावाशु विवेश ह ।
इदमन्तरमित्युक्त्वा ताविन्द्रस्तु निबर्हयत् ।।
बृहद्देवता ४.६९ ।।

यो जात एव प्रथमो मनस्वानिति सूक्तं समानोदर्कं

तृतीयेऽहनि तृतीयस्याह्नो रूपां तदु सजनीयमेतद्वा इन्द्रस्येन्द्रियं यत्सजनीयमेतस्मिन्वै शस्यमान इन्द्रमिन्द्रियमाविशति तद्धाप्याहुश्छन्दोगास्तृतीयेऽहनि बह्वृचा इन्द्रस्येन्द्रियं शंसन्तीति तदु गार्त्समदमेतेन वै गृत्समद इन्द्रस्य प्रियं धामोपागच्छत्स परमं लोकमजयदुपेन्द्रस्य प्रियं धाम गच्छति जयति परमं लोकं य एवं वेद - ऐतरेय ब्राह्मणम् ५.२

यो जात एव प्रथमो मनस्वान् इत्य् एतस्मिंस् त्रैष्टुभे निविदम् दधाति । तद् एतद् इन्द्रतनू सूक्तम् । एतस्मिन् ह गृत्समदो बाभ्रवो निविदम् दधद् इन्द्रस्य प्रियम् धाम उपजगाम । उप ह वा इन्द्रस्य प्रियम् धाम गच्छति जयति परम् लोकम् य एतस्मिन्त् सूक्ते निविदम् दधाति । - कौशीतकि ब्राह्मणम् २२.२

अभूरेक इति सामसूक्तं मैत्रावरुणस्य १५ यो जात इति ब्राह्मणाच्छंसिनः १६ प्र घा न्वस्येत्यच्छावाकस्य शां.श्रौ.सू. १२.६.१७

सोमयागे शस्त्ररूपाणां मन्त्राणां शंसनं होता, मैत्रावरुण, ब्राह्मणाच्छंसी एवं अच्छावाक ऋत्विजचतुष्टयेन सम्पन्नं भवति। तेषां रहस्यं किं भवितुं शक्यते। भागवतपुराणे ११.२.४६ कथनमस्ति - ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च। प्रेम मैत्री कृपोपेक्षा यः करोति स मध्यमः। अतः होता ऋत्विजस्य कृत्यं प्रेमभावनया व्यवहारं भवितुं शक्यते, मैत्रावरुणस्य मैत्रीभावनया, ब्राह्मणाच्छंस्यः कृपया। या ऊर्जा बाला - विकीर्णा अस्ति, तस्याः उद्धारणाय कृपा अपेक्षितमस्ति। यदा ईश्वरः कृपां करोति, तदा भक्तः ईश्वरस्य विषये किं चिन्तयति, अयं महत्त्वपूर्णं न भवति। भक्तोपरि कृपाकरणे

भक्तस्य धनं नष्टं भवितुं शक्यते, भक्तः व्याधिग्रस्तं भवितुं शक्यते इत्यादि। प्रस्तुत प्रसंगस्य सूक्ते अयं कार्यं ब्राह्मणाच्छंसी ऋत्विजस्य माध्यमे दर्शितमस्ति। ब्राह्मणाच्छंसी ब्रह्मविषये गृणाति।

सजनीयं निष्केवल्यम् १६.२३.१७

अभिप्लवषडहस्य षष्ठमहः - महाँ इन्द्रो नृवदिति मरुत्वतीयम् ४ यो जात इति निष्केवल्यम् ५ - शां.श्रौ.सू. ११.९.५

निष्केवल्यशस्त्रस्वरूप- (हौ ०) सोमयज्ञेषु प्रकृतिभूतअग्निष्टोमे तद्विकृतिषु चैकाहाहीन- सत्रेष माध्यन्दिनसवने प्रयुज्यमानस्य निष्केवल्यशस्त्रस्य पञ्चावयवाः ( भागाः) स्वरूपं भवति । तत्र १. स्तोत्रियः प्रगाथतृचः २. अनुरूपः प्रगाथतृचः, ३. धाय्या, ४. प्रगाथः ५. निविद्धानीयं सूक्तं चेति ।

तदुक्तम्- ' स्तोत्रियो योऽनुरूपञ्च धाय्या प्रागाथिकं तथा । निविद्धानीयसूक्तं च निष्केवल्ये परिकीर्तितम् । (ऐ० ब्रा- सा० ३ । २१) । अतः निष्केवल्यं च शस्त्रं तदवयवकृताः स्तोत्रियाद्याश्च पञ्चेति ज्ञेयम् । (ऐ० ब्रा० सा० ३ । २५) - पण्डित पीताम्बरदत्त शास्त्री - कृत श्रौतयज्ञप्रक्रिया - पदार्थानुक्रमकोषः(राष्ट्रियसंस्कृतसंस्थानम्, नई दिल्ली, २००५)

निष्केवल्य ( शस्त्र-)-

१ आत्मा यजमानस्य निष्केवल्यम् । ऐ ८,२ ।

२. निष्केवल्यं बह्व्यो देवताः प्राच्यः शस्यन्ते बह्व्य ऊर्ध्वाः, अथैतदिन्द्रस्यैव निष्केवल्यं तन्निष्केवल्यस्य निष्केवल्यत्वम् । कौ.ब्रा. १५,४ ।

३. यन्निष्केवल्यं तेन शुक्रमन्थिना उक्थवन्तौ ।
काठ २८,१० ।

यो जात एव - अथर्ववेद २०.३४.१, तै.सं. १.७.१३.२, मै.सं. ४.१२.३, ४.१८६.४, काठक सं. ८.१६, कौ.ब्रा. २१.४, २२.४, वैतानश्रौ. ३३.१२, कात्या.श्रौ. २५.१४.१९, निरुक्त १०.१०, तै.ब्रा. २.८.३.३, आश्व.श्रौ. ६.६.१५, ७.७.१, ८.७.११, ९.७.२३, मानव श्रौ. ५.१.१०.३९.५३, शां.श्रौ.१०.४.११, १०.११.१३, ११.९.५, १२.६.१६, १३.५.१६, १६.२३.१७, १८.१९.४, ऋग्विधा. १.२९.१, तै.सं. ७.५.५.२, काठ.सं. ३४.४, ऐ.ब्रा. ५.२.२, पञ्चविं.ब्रा. ९.४.१७, ऐ.आ. १.५.२.७, आप.श्रौ.सू. १४.१९.१०-११

# ऋग्वेदः सूक्तं २.१३


**ऋग्वेदः - मण्डल २**

← सूक्तं २.१२ | सूक्तं २.१३ | सूक्तं २.१४ →

गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः


## दे. इन्द्रः। जगती, १३ त्रिष्टुप्

ऋतुर्जनित्री तस्या अपस्परि मक्षू जात आविशद्यासु वर्धते ।

तदाहना अभवत्पिप्युषी पयोऽंशोः पीयूषं प्रथमं तदुक्थ्यम् ॥१॥

सध्रीमा यन्ति परि बिभ्रतीः पयो विश्वप्स्न्याय प्र भरन्त भोजनम् ।

समानो अध्वा प्रवतामनुष्यदे यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥२॥

अन्वेको वदति यद्ददाति तद्रूपा मिनन्तदपा एक ईयते ।

विश्वा एकस्य विनुदस्तितिक्षते यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥३॥

प्रजाभ्यः पुष्टिं विभजन्त आसते रयिमिव पृष्ठं प्रभवन्तमायते ।

असिन्वन्दंष्ट्रैः पितुरत्ति भोजनं यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥४॥

अधाकृणोः पृथिवीं संदृशे दिवे यो धौतीनामहिहन्नारिणक्पथः ।

तं त्वा स्तोमेभिरुदभिर्न वाजिनं देवं देवा अजनन्सास्युक्थ्यः ॥५॥

यो भोजनं च दयसे च वर्धनमार्द्रादा शुष्कं मधुमद्दुदोहिथ ।

स शेवधिं नि दधिषे विवस्वति विश्वस्यैक ईशिषे सास्युक्थ्यः ॥६॥

यः पुष्पिणीश्च प्रस्वश्च धर्मणाधि दाने व्यवनीरधारयः ।

यश्चासमा अजनो दिद्युतो दिव उरुरूर्वाँ अभितः सास्युक्थ्यः ॥७॥

यो नार्मरं सहवसुं निहन्तवे पृक्षाय च दासवेशाय चावहः ।

ऊर्जयन्त्या अपरिविष्टमास्यमुतैवाद्य पुरुकृत्सास्युक्थ्यः ॥८॥

शतं वा यस्य दश साकमाद्य एकस्य श्रुष्टौ यद्ध चोदमाविथ ।

अरज्जौ दस्यून्समुनब्दभीतये सुप्राव्यो अभवः सास्युक्थ्यः ॥९॥

विश्वेदनु रोधना अस्य पौंस्यं ददुरस्मै दधिरे कृत्नवे धनम् ।

षळस्तभ्ना विष्टिरः पञ्च संदृशः परि परो अभवः सास्युक्थ्यः ॥१०॥

सुप्रवाचनं तव वीर वीर्यं यदेकेन क्रतुना विन्दसे वसु ।

जातूष्ठिरस्य प्र वयः सहस्वतो या चकर्थ सेन्द्र विश्वास्युक्थ्यः ॥११॥

अरमयः सरपसस्तराय कं तुर्वीतये च वय्याय च स्रुतिम् ।

नीचा सन्तमुदनयः परावृजं प्रान्धं श्रोणं श्रवयन्सास्युक्थ्यः ॥१२॥

अस्मभ्यं तद्वसो दानाय राधः समर्थयस्व बहु ते वसव्यम् ।

इन्द्र यच्चित्रं श्रवस्या अनु द्यून्बृहद्वदेम विदथे सुवीराः ॥१३॥

## सायणभाष्यम्

' ऋतुर्जनित्री ' इति त्रयोदशर्चं द्वितीयं सूक्तं गार्त्समदम् । ' ऋतुः सप्तोनान्त्या त्रिष्टुप् ' इत्यनुक्रमणिका । ' अस्मभ्यं तद्वसो ' इति त्रयोदशी त्रिष्टुप् । शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । इन्द्रो देवता । उक्थ्ये तृतीयसवने अच्छावाकशस्त्रेऽस्य सूक्तस्य विनियोगः । सूत्रितं च-'

ऋतुर्जनित्री नू मर्तो भवा मित्रः ' ( आश्व. श्रौ ६. १) इति । दशरात्रे षष्ठेऽहन्यपि तृतीयसवने अच्छावाकशस्त्रे एतत्सूक्तम् । ' ऋतुर्जनित्रीति नित्यान्यैकाहिकानि ' ( आश्व. श्रौ. ८. ४) इति सूत्रितम् ।।

ऋ॒तुर्जनिं॑त्री॒ तस्यां॑ अ॒पस्परिं॑ म॒क्षू जा॒त आविं॑श॒द्यासु॑ वर्धं॑ते ।

तदां॑ह॒ना अं॑भवत्पि॒प्युषी॒ पयो॒ऽशोः पी॒यूषं॑ प्रथ॒मं तदु॒क्थ्यं॑म् ॥१

ऋ॒तुः । जनिं॑त्री । तस्याः॑ । अ॒पः । परिं॑ । म॒क्षु । जा॒तः । आ । अ॒वि॒श॒त् । यासुं॑ । वर्धं॑ते ।

तत् । आ॒ह॒नाः । अ॒भ॒व॒त् । पि॒प्युषीं॑ । पयः॑ । अं॒शोः । पी॒युषं॑म् । प्र॒थ॒मम् । तत् । उ॒क्थ्यं॑म् ॥१

ऋतुः। जनित्री । तस्याः। अपः। परि। मक्षु। जातः। आ। अविशत्। यासु। वर्धते।

तत्। आहनाः। अभवत् । पिप्युषी। पयः । अंशोः। पीयूषं। प्रथमं तत्। उक्थ्यं ॥१॥

ऋतुर्वर्षाख्यः कालो जनित्री सोमस्य जनयित्री जननी भवति । तस्याः परि तस्या जनन्याः सकाशाज्जातः सोमोऽप उदकानि मधु शीघ्रमाविशत् । यास्वप्सु सोमो वर्धते ता अविशदित्यन्वयः । तस्मादप्सु प्रविष्टत्वात् सोम आहना आहंतव्योऽभिषोतव्यो भवति । आहना इति सकारांतमिदं पदं । तथा च मंत्रवर्णः । ये ते मदा आहनसो विहायसः ।९.७५. ५.। इति । या चांशुरूपा सोमलता पयः सारभूतं पिप्युषी वर्धयंत्यभवत् ॥ प्यायतेर्लिटि क्वसौ लिड्यङोश्चेति पीभावः । वसोः

संप्रसारणं । उगितश्चेति ङीप्॥ अंशोस्तस्याः सोमलतायाः पीयूषं रसभूतं पय उक्थ्यं प्रशस्यं हविरिंद्रस्य भवति ॥

स॒ध्रीमा यं॑न्ति॒ परि॒ बिभ्रं॑ती॒ः पयो॑ वि॒श्वप्स्न्या॑य॒ प्र भ॑रन्त॒ भोज॑नम् ।

स॒मा॒नो अध्वा॑ प्र॒वता॑मनु॒ष्यदे॒ यस्ताकृ॑णोः प्रथ॒मं सास्यु॒क्थ्य॑ः ॥२

स॒ध्री । ई॒म् । आ । य॒न्ति॒ । परि॑ । बिभ्रं॑तीः । पय॑ः । वि॒श्वऽप्स्न्या॑य । प्र । भ॒र॒न्त॒ । भोज॑नम् ।

स॒मा॒नः । अध्वा॑ । प्र॒ऽवता॑म् । अ॒नु॒ऽस्यदे॑ । यः । ता । अकृ॑णोः । प्र॒थ॒मम् । सः । अ॒सि॒ । उ॒क्थ्य॑ः ॥२

सध्री। ईं। आ। यंति। परि। बिभ्रतीः । पयः ।
विश्वऽप्स्न्याय। प्र। भरतं। भोजनं ।

समानः । अध्वा । प्रऽवतां । अनुऽस्यदे । यः। ता।
अकृणोः। प्रथमं । सः। असि । उक्थ्यः ॥२॥

सध्री । अंचतेलुक् छांदसः । सहस्य सध्रिरिति सध्र्यादेशोंऽतोदात्तत्वेन निपातितः । सध्रीचीनाः पय उदकं परि परितो बिभ्रतीर्बिभ्राणा ईमेंता नद्य आयंति । सर्वतो गच्छंति। ता नद्यो विश्वप्स्न्याय विश्वासामपामाश्रयभूताय समुद्राय भोजनं ॥ भुज्यत इति भोजनं पयः ॥ प्रभरंत । प्रकर्षेण संपादयंति । कुत एतत् तदाह । प्रवतां प्रवणवतां निम्नगानां पयसामनुष्यदे ॥ कृत्यार्थे तवैकेन्केन्यत्वन इति केन्प्रत्ययः । अनुष्यंदनीयोऽध्वा मार्गः समान एको हि । यस्ता तानि सोमोत्पादननदीप्रवर्तनादीनि कर्माणि प्रथमं

पूर्वमकृणोः। अकरोः। स तादृङ्महिमोपेतस्त्वमुक्थ्योऽसि । सर्वैः प्रशस्यो भवसि ॥

अन्वेकों वदति यद्ददाति तद्रूपा मिनन्तदंपा एकं ईयते ।

विश्वा एकंस्य विनुदंस्तितिक्षते यस्ताकृंणोः प्रथमं सास्युक्थ्यः ॥३

अनुं । एकः । वदति । यत् । ददाति । तत् । रूपा । मिनन् । तत्ऽअंपाः । एकः । ईयते ।

विश्वाः । एकंस्य । विऽनुदः । तितिक्षते । यः । ता । अकृंणोः । प्रथमम् । सः । असि । उक्थ्यः ॥३

अनु । एकः। वदति। यत् । ददाति। तत्। रूपा। मिनन्। तत्ऽअपाः। एकः। ईयते ।

विश्वाः । एकस्य । विऽनुदः। तितिक्षते । यः । ता ।
अकृणोः। प्रथमं । सः । असि । उक्थ्यः ॥३॥

यजमानो यद्धविर्देवेभ्यो ददाति तदेको होतानुवदति । याज्यापुरोनुवाक्याभ्यां देवताः स्मारयति । एकोऽध्वर्यू रूपा पश्वादीनां रूपाणि मिनन् हिंसन् तदपास्तद्विशसनाख्यमपः कर्म यस्य तादृशः सन् ईयते । देवयजने सर्वत्र गच्छति । एकस्याध्वर्योर्विश्वा विनुदः सर्वाणि तत्कर्तृकाणि विक्षेपणरूपाणि कर्मवैगुण्यानि । तितिक्षते । तद्योग्यप्रायश्चित्तकरणेन ब्रह्मा सहते ॥ गुप्तिज्किद्भ्यः सन् क्षमायामिष्यते । तानि हविष्प्रदानादीनि कर्माणि यस्त्वमकृणोः । अकारयः सः त्वमुक्थ्योऽसि ॥

प्र॒जाभ्यः॑ पुष्टिं॑ वि॒भजं॑न्त आसते र॒यिमि॑व पृ॒ष्ठं
प्र॒भवं॑न्तमाय॒ते ।

असिं॑न्व॒न्दंष्ट्रैः॑ पि॒तुरं॑त्ति॒ भोजं॑नं॒ यस्ताकृं॑णोः प्रथ॒मं सास्यु॒क्थ्यः॑ ॥४

प्र॒ऽजाभ्यः॑ । पु॒ष्टिम् । वि॒ऽभजं॑न्तः । आ॒स॒ते॒ । र॒यिम्ऽइं॑व । पृ॒ष्ठम् । प्र॒ऽभवं॑न्तम् । आ॒ऽय॒ते ।

असिं॑न्वन् । दंष्ट्रैः॑ । पि॒तुः । अ॒त्ति॒ । भोजं॑नम् । यः । ता । अकृं॑णोः । प्र॒थ॒मम् । सः । अ॒सि॒ । उ॒क्थ्यः॑ ॥४

प्रऽजाभ्यः। पुष्टिं । विऽभजंतः । आसते । रयिंऽइव । पृष्ठं। प्रऽभवंतं । आऽयते ।

असिन्वन्। दंष्ट्रैः । पितुः । अत्ति। भोजनं। यः। ता। अकृणोः। प्रथमं । सः । असि । उक्थ्यः ॥४॥

हे इंद्र पुष्टिं त्वया दत्तं पोषकं धनं स्वकीयाभ्यः प्रजाभ्यो विभजंतोऽस्यैतावदस्यैतावदिति विभागं कुर्वंतो गृहमेधिन आसते । स्वस्वगृहेषु निवसंति । तत्र दृष्टांतः । आयते गृहं

प्रत्यागच्छतेऽतिथये पृष्ठं धारकं प्रभवंतं बहुभरणसमर्थं
रयिं धनं यथा विभज्य प्रयच्छंति तद्वत् । असिन्वन्
सेतुबंधादिकं कर्म कुर्वन् लोकः पितुः। पालयित्र्या दिवः
सकाशादागतं भोजनमुदकं तत्कार्या ओषधीर्दंष्ट्रैर्दंतैरत्ति ।
भक्षयति । यदा असिन्वन् अव्याप्रियमाणोऽग्निः पितुः
पालकस्य यजमानस्य संबंधि भोजनं हविर्लक्षणमन्नं
दंष्ट्रैर्दंतरूपैर्ज्वालैरत्ति। यस्ताकृणोरित्यादि सिद्धं ॥

अधा॑कृणोः पृथि॒वीं सं॒दृशे॑ दि॒वे यो
धौ॑ती॒नाम॑हिह॒न्नारि॑णक्प॒थः ।

तं त्वा॒ स्तोमे॑भिरु॒दभि॒र्न वा॒जिनं॑ दे॒वं दे॒वा
अ॑जन॒न्सास्यु॒क्थ्यः॑ ॥५

अध॑ । अ॒कृ॒णोः॒ । पृ॒थि॒वीम् । स॒म्ऽदृशे॑ । दि॒वे । यः ।
धौ॒ती॒नाम् । अ॒हि॒ऽह॒न् । अरि॑णक् । प॒थः ।

तम् । त्वा॒ । स्तोमे॑भिः । उ॒दऽभि॑ः । न । वा॒जिन॑म् । दे॒वम् । दे॒वाः । अ॒ज॒न॒न् । सः । अ॒सि॒ । उ॒क्थ्य॑ः ॥५

अध। अकृणोः। पृथिवीं। संऽदृशे।दिवे। यः। धौतीनां। अहिऽहन्। अरिणक्। पथः।

तं। त्वा। स्तोमेभिः। उदऽभिः। न। वाजिनं । देवं । देवाः । अजनन् । सः । असि । उक्थ्यः ॥५॥

हे इंद्र अध अपि च त्वं दिवे द्योतमानाय सूर्याय पृथिवीं चलितां सतीं दृढीकृत्य संदृशे संदर्शनीयामकृणोः । अकरोः ॥ दृशे विख्ये चेति कन्प्रत्ययांतत्वेन निपातितः ॥ यश्च त्वं धौतीनां चलंतीनां नदीनां पथो मार्गानरिणक्। अरेचयः । गंतुं योग्यानकरोरित्यर्थः । रिचिर् विरेचने । लङि सिप् । तस्य हल्ङ्यादिना लोपः ॥ अहिहन् अहेर्वृत्रस्य मेघस्य वा हंतर्हे इंद्र देवाः स्तोतारस्तं तादृशं देवं त्वां स्तोमेभिः स्तोत्रैरजनन् । तत्र दृष्टांतः । उदभिर्न

वाजिनं । यथा वाजिनमश्वमुदभिरुदकैर्वर्धयंति तद्वत् ॥ पद्दन्नोमासित्यादिनोदकस्योदम्भावः । शेषं सिद्धं ॥ ॥ १० ॥

यो भोजंनं च॒ दयंसे च॒ वर्धंनमा॒र्द्रादा शुष्कं॒ मधुंमद्दु॒दोहिंथ ।

स शेंव॒धिं नि दंधिषे वि॒वस्वंति॒ विश्व॒स्यैकं ईशिषे॒ सास्यु॒क्थ्यः॑ ॥६

यः । भोजंनम् । च॒ । दयंसे । च॒ । वर्धंनम् । आ॒र्द्रात् । आ । शुष्कंम् । मधुंऽमत् । दु॒दोहिंथ ।

सः । शे॒व॒ऽधिम् । नि । द॒धि॒षे॒ । वि॒वस्वंति । विश्वंस्य । एकः॑ । ई॒शि॒षे॒ । सः । अ॒सि॒ । उ॒क्थ्यः॑ ॥६

यः । भोजनं। च। दयसे। च। वर्धनं । आर्द्रात्। आ। शुष्कं । मधुऽमत्। दुदोहिथ।

सः । शेवऽधिं । नि। दधिषे । विवस्वति । विश्वस्य । एकः । ईशिषे । सः । असि । उक्थ्यः ॥६॥

हे इंद्र यस्त्वं भोजनं । भुज्यत इति भोजनमन्नादि । च दयसे । यजमानेभ्यः प्रयच्छसि ॥ दय दानगतिरक्षणहिंसाग्रहणेषु आत्मनेपदी ॥ किंच वर्धनं वृद्धिकरं धनं बलं वा दयसे । तथार्द्रात्कांडात् शुष्कमनार्द्रं व्रीह्यादिकं मधुमत् मधुररसोपेतं दुदोहिथ । दुग्धवानसि ॥ दुहेर्लिटि क्रादिनियमादिडागमः ॥ स तादृशस्त्वं विवस्वति ते परिचरणं कुर्वाणे यजमाने शेवधिं धनसदनं निदधिषे । निदधासि । किं बहुना । विश्वस्य सर्वस्य जगत एकोऽद्वितीय एव सन् ईशिषे । स्वामी भवसि ॥ ईश ऐश्वर्ये । ईशः स इतीडागमः ॥ स इत्यादि सिद्धं ।

यः पु॒ष्पिणी॑श्च प्र॒स्वं॑श्च॒ धर्म॒णाधि॒ दाने॒ व्य१॒॑वनी॒रधा॑रयः ।

यश्चासंमा अजंनो दि॒द्युतों दि॒व उ॒रुरू॒र्वाँ अ॒भित॒ः सास्यु॒क्थ्यः॑ ॥७

यः । पु॒ष्पिणीः॑ । च॒ । प्र॒ऽस्वः॑ । च॒ । धर्मं॑णा । अधिं । दानें । वि । अ॒वनीः॑ । अधा॑रयः ।

यः । च॒ । असं॑माः । अजंनः । दि॒द्युतः॑ । दि॒वः । उ॒रुः । ऊ॒र्वान् । अ॒भितः॑ । सः । अ॒सि॒ । उ॒क्थ्यः॑ ॥७

यः। पुष्पिणीः । च। प्रऽस्वः। च। धर्मणा।अधि। दाने।वि। अवनीः। अधारयः।

यः । च । असमाः । अजनः । दिद्युतः । दिवः । उरुः । ऊर्वान् । अभितः । सः । असि । उक्थ्यः ॥७॥

हे इंद्र यस्त्वं पुष्पिणीः पुष्पवतीश्च प्रस्वः प्रसूताः प्रसूयमाना वावनीरवित्रीरोषधीर्दानेऽधि ॥ उपलूयंते सस्यान्यत्रेति दानं क्षेत्रं । अधिकरणे ल्युट् । तस्मिन् क्षेत्रे

धर्मणा सकललक्षणेन कर्मणा व्यधारयः । व्यदधाः । यश्च त्वं दिवो द्योतमानस्य सूर्यस्यासमा विषमा नानाप्रकारा दिद्युतो दीप्तीरजनः । अजनयः । यद्वा दिवो नक्षत्राणि । जनेर्लङि व्यत्ययेन शप्॥ यश्चोरुर्महांस्त्वमभितः सर्वत ऊर्वान् महतः प्राणिनिकायान् पर्वतान्वाजनयः । शिष्टं स्पष्टं ॥

यो नां॑र्म॒रं स॒हव॑सुं॒ निहं॑न्तवे पृ॒क्षाय॑ च दा॒सवे॑शाय॒ चाव॑हः ।

ऊ॒र्जयं॑न्त्या॒ अप॑रिविष्टमा॒स्य॑मु॒तैवाद्य पु॑रुकृ॒त्सास्यु॒क्थ्यः॑ ॥ ८

यः । ना॒र्म॒रम् । स॒हऽव॑सुम् । निऽहं॑न्तवे । पृ॒क्षाय॑ । च॒ । दा॒सऽवे॑शाय । च॒ । अव॑हः ।

ऊ॒र्जयं॑न्त्याः । अप॑रिऽविष्टम् । आ॒स्य॑म् । उ॒त । ए॒व । अ॒द्य । पु॒रु॒ऽकृ॒त् । सः । अ॒सि॒ । उ॒क्थ्यः॑ ॥८

यः । नार्मरं। सहऽवसु । निऽहंतवे। पृक्षाय । च।
दासऽवेशय । च। अवहः ।

ऊर्जयंत्याः।अपरिऽविष्टं । आस्यं। उत्त।एव।अद्य।
पुरुऽकृत्।सः।असि। उक्थ्यः ॥८॥

पुरुकृत् पुरूणां कर्मणां कर्ता हे इंद्र यस्त्वं नार्मरं। नॄन् मनुष्यान्मारयतीति नृमरः कश्चिदसुरः। तस्यापत्यं नार्मरः । तं सहवसुं । वसुना सह वर्तत इति सहवसुः । असुरनामैतत् । एतन्नामकमसुरं निहंतवे ॥ हंतेस्तुमर्थे तवेन्प्रत्ययः । तादौ च नितीति गतेः प्रकृतिस्वरत्वं ॥ निहंतुं ऊर्जयंत्या बलवत्या वज्रधाराया अपरिविष्टं मलादिभिरव्याप्तमास्यमद्यैवावहः । तमसुरं प्रापयः । यद्वा ऊर्जयंत्याः पिशाचिकाया आस्यं प्रापयः । किमर्थं । पृक्षाय । तव हविर्लक्षणान्नलाभाय। दासवेशाय। दासानां

दस्यूनां वेशाय विनाशाय च। यद्वा अस्माकमन्नलाभाय दस्युविनाशाय च ॥

श॒तं वा॒ यस्य॒ दश॑ सा॒कमाद्य॒ एक॑स्य श्रु॒ष्टौ यद्ध॑ चो॒दमावि॑थ ।

अ॒र॒ज्जौ दस्यू॒न्समु॑नब्द॒भीत॑ये सुप्रा॒व्यो॑ अभव॒ः सास्यु॒क्थ्य॑ः ॥९

श॒तम् । वा॒ । यस्य॑ । दश॑ । सा॒कम् । आ । अद्य॑ः । एक॑स्य । श्रु॒ष्टौ । यत् । ह॒ । चो॒दम् । आवि॑थ ।

अ॒र॒ज्जौ । दस्यू॑न् । सम् । उ॒न॒प् । द॒भीत॑ये । सु॒प्र॒ऽअ॒व्य॑ः । अ॒भ॒व॒ः । सः । अ॒सि॒ । उ॒क्थ्य॑ः ॥९

शतं । वा। यस्य। दश। साकं । । अद्यः। एकस्य। श्रुष्टौ। यत्।ह। चोदं । आविथ।

अरज्जौ। दस्यून्।सं। उनप्।दभीतये।सुप्रऽअव्यः।अभवः। सः।असि। उक्थ्यः ॥९॥

हे इंद्र एकस्यैकाकिनः श्रेष्ठस्य वा यस्य ते श्रुष्टौ सुखनिमित्ते तदर्थं शतं दश दश शतानि हरयो वाहनार्थं भवंति । तथा च मंत्रवर्णः । इंद्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश । ६.४७.१८.। इति । अपि च यश्च आ अद्यः सर्वेषां सर्वत उपजीव्यः। न तस्येशे यं नाद्याद्यद्वैनं नाद्युरिति हि श्रुतिः । यद्ध यश्च त्वं चोदं स्तोत्राणां प्रेरकं यजमानमाविथ । रक्षितवानसि । किंच यस्त्वमरज्जौ रज्जुवर्जिते बंधनागारे दस्यूनुपक्षपयितॄन् दभीतये । दभीतिर्नाम कश्चिदृषिः । तदर्थं समुनप्। हिंसितवानसि ॥ उभतेर्हिंसाकर्मणो लङि व्यत्ययेन श्नम्। हल्ङ्यादिना सिपो लोपः । अडभावश्छांदसः ॥ किंच सुप्राव्यः सुखेन सर्वैरुपसर्पणीयोऽभवः । शिष्टं सिद्धं ।

विश्वेदनुं रोधना अंस्य पौंस्यं दुदुरंस्मै दधिरे कृत्नवे धनंम् ।

षळंस्तभ्ना विष्टिरः पञ्चं संदृशः परिं पुरो अंभवः

सास्युक्थ्यः ॥१०

विश्वां । इत् । अनुं । रोधनाः । अस्य । पौंस्यंम् । दुदुः ।

अस्मै । दधिरे । कृत्नवें । धनंम् ।

षट् । अस्तभ्नाः । विऽस्तिरः । पञ्चं । सम्ऽदृशः । परिं ।

परः । अभवः । सः । असि । उक्थ्यः ॥१०

विश्वा। इत्। अनु। रोधनाः । अस्य । पौंस्यं। ददुः । अस्मै।

दधिरे। कृत्नवे। धनं।

षट्। अस्तभ्नाः । विऽस्तिरः। पंच। संऽदृशः । परि। परः ।

अभवः । सः । असि । उक्थ्यः ॥१०॥

विश्वेत् ॥ सुपां सुलुगिति जस आकारः ॥ सर्वा एव रोधना रोधस्वत्यो नद्योऽस्येंद्रस्य पौंस्यं । पुंसो भावः। पौंस्यं । वीर्यमिति यावत् । अनु तद्वीर्यमनु वर्तंते । अस्मा इंद्राय ददुः । हविर्लक्षणमन्नं यजमानाः प्रयच्छंति। किंच कृत्नवे कर्मणां कर्त्र इंद्राय धनं दधिरे। सर्वे जना धारयंति । तथा च मंत्रः । इंद्राय द्याव ओषधीरुतापो रयिं रक्षंति जीरयो वनानि । ३.५१.५.। इति। विष्टिरो विस्तीर्णाः षट् षट्संख्याका उर्वीः । ताश्च द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधय इत्येवंरूपाः । ता अस्तभ्नाः । नियमितवानसि । संदृशः । सम्यक् पश्यंतीति संदृशो जनाः । पंच संदृशः पंच जनान् परि सर्वतः परः पारयिता पालयिता वाभवः । भवसि । गतमन्यत् ॥ ॥ १० ॥

सुप्रवाचनं तवं वीर वीर्यं१ यदेकेंन क्रतुंना विन्दसे वसुं ।

जा॒तूष्ठिं॑रस्य॒ प्र वय॒ः सहं॑स्वतो॒ या च॒कर्थ॒ सेन्द्र॒ विश्वां॑स्यु॒क्थ्य॑ः ॥११

सु॒ऽप्र॒वा॒च॒नम् । तवं॑ । वी॒र॒ । वी॒र्यं॑म् । यत् । एकें॑न । क्रतुं॑ना । वि॒न्दसें॑ । वसुं॑ ।

जा॒तूऽस्थिं॑रस्य । प्र । वय॑ः । सहं॑स्वतः । या । च॒कर्थ॑ । सः । इ॒न्द्र॒ । विश्वा॑ । अ॒सि॒ । उ॒क्थ्य॑ः ॥११

सुऽप्रवाचनं। तव । वीर। वीर्यं । यत्। एकेन । क्रतुना। विंदसे । वसु।

जातूऽस्थिरस्य। प्र। वयः। सहस्वतः। या। चकर्थ। सः। इंद्र।विश्वा। असि। उक्थ्यः॥११॥

वीर बलवन् हे इंद्र तव वीर्यं सामर्थ्यं सुप्रवाचनं । सुष्ठु प्रवचनीयं । सर्वैः श्लाघनीयमित्यर्थः । किं तत् । एकेन क्रतुना कर्मणा वसु विंदसे । शत्रूणां धनं लभसे ॥ विद्लृ

लाभे । तुदादिः स्वरितेत् ॥ यद्वा तदीयं धनं स्तोतॄन्प्रापयसीति यत् तत्प्रशस्यमित्यर्थः । सहस्वतो बलवतो जातूष्ठिरस्य । एतन्नामकः कश्चित् । तस्य वयोऽन्नं प्रादाः । यद्वा जातूष्ठिरस्य। जातु कदाचित् सर्वदा स्थिरस्य सहस्वतो बलवतो यज्ञादेः कर्मणः संबंधि वयो हविर्लक्षणमन्नं प्र विंदस इति समन्वयः । या यानीमान्यन्यानि विश्वा सर्वाणि कर्माणि चकर्थ कृतवानसि । स तादृशस्त्वमुक्थ्यः । सर्वैः प्रशंसनीयो भवसि ॥

अरं॑मयः॒ः सर॑पस॒स्तरा॑य॒ कं तु॒र्वीत॑ये च व॒य्या॑य च स्रु॒तिम् ।

नी॒चा सन्त॒मुद॑नयः परा॒वृजं॒ प्रान्धं श्रो॒णं श्र॒वय॒न्त्सास्यु॒क्थ्यः॑ ॥१२

अर॑मयः । सर॑ऽअपसः । तरा॑य । कम् । तु॒र्वीत॑ये । च॒ ।
व॒य्या॑य । च॒ । स्रु॒तिम् ।

नी॒चा । सन्त॑म् । उत् । अ॒न॒यः॒ । प॒रा॒ऽवृज॑म् । प्र । अ॒न्धम् । श्रो॒णम् । श्र॒वय॑न् । सः । अ॒सि॒ । उ॒क्थ्यः॑ ॥१२

अरमयः । सरऽअपसः । तराय। कं। तुर्वीतये। च।
वय्याय। च। स्रुतिं ।

नीचा। संतं । उत्। अनयः । पराऽवृजं । प्र। अंधं । श्रोणं ।
श्रवयन्। सः । असि । उक्थ्यः ॥ १२॥

हे इंद्र सरपसः । सरणमपः कर्म यासां ताः सरपसः ॥
शकंध्वादित्वात्पररूपत्वं । ता अपः कं सुखेन तराय
तरणायारमयः । अक्रीडयः । किंच तुर्वीतये । तुर्वीतिर्नाम
कश्चिद्राजर्षिः । तस्मै वय्याय च। वय्यो नाम कश्चित् तस्मै
। ताभ्यां स्रुतिं सरणं प्रत्यरमयः । तौ हि जलपूर्णां

महानदीं दृष्ट्वा तरीतुमसमर्थावास्तां । तौ च त्वया तारितौ । परावृजं । परितः पापानि वृणक्ति दहतीति परावृक् कश्चिदृषिः । तमप्सु मग्नं तथा नीचा नीचं संतमुदनयः । आपद्भ्य ऊर्ध्वं नीतवानसि । किंच अंधं संतं श्रोणं पंगुं संतं चक्षुर्दानादपंगुकरणाच्चोड्नयः । किं कुर्वन् । प्रकर्षेण श्रवयन् । आत्मानं कीर्तिमंतं कुर्वन् । उदनय इति समन्वयः । स इत्यादि सिद्धं ।

अ॒स्मभ्यं॒ तद्व॑सो दा॒नाय॒ राध॒ः सम॑र्थयस्व ब॒हु ते॑ वस॒व्य॑म् ।

इन्द्र॒ यच्चि॒त्रं श्र॑व॒स्या अनु॒ द्यून्बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥ १३

अ॒स्मभ्य॑म् । तत् । व॒सो॒ इति॑ । दा॒नाय॑ । राधः॑ । सम् । अ॒र्थ॒य॒स्व॒ । ब॒हु । ते॒ । व॒स॒व्य॑म् ।

इन्द्रं । यत् । चि॒त्रम् । श्र॒व॒स्याः । अनुं । द्यून् । बृ॒हत् ।
व॒दे॒म॒ । वि॒दथें । सु॒ऽवीराः ॥१३

अस्मभ्यं । तत् । वसो इति । दानाय। राधः । सं ।
अर्थयस्व । बहु। ते। वसव्यं ।

इंद्र। यत्। चित्रं । श्रवस्याः । अनु। द्यून्। बृहत्। वदेम
विदथे । सुऽवीराः ॥१३॥

वसो सर्वस्य वासक वसुमन्वा हे इंद्र स्तोतृभ्योऽस्मभ्यं तद्राधो धनं दानाय । उपलक्षणमेतत् । भोगाय च समर्थयस्व । देहि । अस्मान् संगमयेत्यर्थः । अर्थ याचने चुरादिरदंत आत्मनेपदी ॥ ते तव तद्बहु प्रभूतं वसव्यं । वस्वेव वसव्यं । वस्वादित्वात् स्वार्थिको यत् । तादृशं प्रभूतं धनमस्ति खलु । चित्रं चायनीयं यद्धनमनु द्यून् अन्वहं ॥ कालाध्वनोरिति द्वितीया ॥ श्रवस्याः । भोग्यमिच्छेः ॥ अंतर्णीतण्यर्थत्वादकर्मकत्वं । यथा

रोदितीति । स त्वन्यः । द्वे ह्यत्र कर्मणी उद्देश्यकर्म च विधेयकर्मांतर्भूतं । उद्देश्यकर्मणा सकर्मको भविष्यति । यथा माणवकं पुत्रीयतीति भाष्य उदाहृतं । पा० ३. १. ८. २. । श्रवःशब्दाच्छंदसि परेच्छायां क्यच् । तदंतस्य लेट्यडागमे रूपं । सुवीराः कल्याणपुत्रपौत्राः संतो वयं विदथेऽस्मिन्यज्ञे बृहत् प्रभूतं शस्त्रादिकं वाक्यं वदेम ॥ ॥ १२ ॥

**टिप्पणी**

२.१३.१ तदाहना अभवत् पिप्युषी पयः इति

आहनसम् -- आ-समन्तात् - हनसम्।

सोमयागे यदा सोमस्य हननं कुर्वन्ति, तदा ऋजीषः अवशिष्टं भवति। तस्य न कोपि उपचारः संभवमस्ति। आहनसम् - न कोपि अवशिष्टः अस्ति। अथ सोम इति वै पशुम् अवोचाम । एवम् पुरोडाशान् । दश त्वा एते सोम अंशवः । प्रत्नो अंशुर् यम् एतम् अभिषुण्वन्ति । तृप्तो अंशुर् आपः । रसो अंशुर् व्रीहिः । वृषो अंशुर् यवः । शुक्रो अंशुः पयः । जीवो अंशुः पशुः । अमृतो अंशुर् हिरण्यम् । ऋग् अंशुर् यजुर् अंशुः साम अंशुर् इति । एत वा उ दश सोम अंशवः । यदा वा एते सर्वे संगच्छन्ते । अतः सोमो अतः सुतः । - कौ १३.४

# ऋग्वेदः सूक्तं २.१४



दे. इन्द्रः। त्रिष्टुप्

अध्वर्यवो भरतेन्द्राय सोममामत्रेभिः सिञ्चता मद्यमन्धः ।

कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि ॥१॥

अध्वर्यवो यो अपो वव्रिवांसं वृत्रं जघानाशन्येव वृक्षम् ।

तस्मा एतं भरत तद्वशायँ एष इन्द्रो अर्हति पीतिमस्य ॥२॥

अध्वर्यवो यो दृभीकं जघान यो गा उदाजदप हि वलं वः ।

तस्मा एतमन्तरिक्षे न वातमिन्द्रं सोमैरोर्णुत जूर्न वस्त्रैः ॥३॥

अध्वर्यवो य उरणं जघान नव चख्वांसं नवतिं च बाहून् ।

यो अर्बुदमव नीचा बबाधे तमिन्द्रं सोमस्य भृथे हिनोत ॥४॥

अध्वर्यवो यः स्वश्नं जघान यः शुष्णमशुषं यो व्यंसम् ।

यः पिप्रुं नमुचिं यो रुधिक्रां तस्मा इन्द्रायान्धसो जुहोत ॥५॥

अध्वर्यवो यः शतं शम्बरस्य पुरो बिभेदाश्मनेव पूर्वीः ।

यो वर्चिनः शतमिन्द्रः सहस्रमपावपद्भरता सोममस्मै ॥६॥

अध्वर्यवो यः शतमा सहस्रं भूम्या उपस्थेऽवपज्जघन्वान् ।

कुत्सस्यायोरतिथिग्वस्य वीरान्न्यावृणग्भरता सोममस्मै ॥७॥

अध्वर्यवो यन्नरः कामयाध्वे श्रुष्टी वहन्तो नशथा तदिन्द्रे ।

गभस्तिपूतं भरत श्रुतायेन्द्राय सोमं यज्यवो जुहोत ॥८॥

अध्वर्यवः कर्तना श्रुष्टिमस्मै वने निपूतं वन उन्नयध्वम् ।

जुषाणो हस्त्यमभि वावशे व इन्द्राय सोमं मदिरं जुहोत ॥९॥

अध्वर्यवः पयसोधर्यथा गोः सोमेभिरीं पृणता भोजमिन्द्रम् ।

वेदाहमस्य निभृतं म एतद्दित्सन्तं भूयो यजतश्चिकेत ॥१०॥

अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य क्षम्यस्य राजा ।

तमूर्दरं न पृणता यवेनेन्द्रं सोमेभिस्तदपो वो अस्तु ॥११॥

अस्मभ्यं तद्वसो दानाय राधः समर्थयस्व बहु ते वसव्यम् ।

इन्द्र यच्चित्रं श्रवस्या अनु द्यून्बृहद्वदेम विदथे सुवीराः ॥१२॥

## सायणभाष्यम्

॥

' अध्वर्यवो भरत ' इति द्वादशर्चं तृतीयं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम् । ' अध्वर्यवो द्वादश ' इत्यनुक्रान्तम् । सूक्तविनियोगो लैङ्गिकः । अतिरात्रे प्रथमे पर्याये होतुः शस्त्रयाज्या ' अध्वर्यवः ' इत्येषा । ' अध्वर्यवो भरतेन्द्राय सोममिति याज्या ' ( आश्व. श्रौ. ६.४) इति सूत्रितम् ।।

अध्व॑र्यवो॒ भर॒तेन्द्रा॑य॒ सोम॒मामं॑त्रेभिः सिञ्चता॒ मद्य॒मन्धः॑ ।

का॒मी हि वी॒रः सदं॑मस्य पी॒तिं जु॒होत॒ वृष्णे॒ तदि॒दे॒ष वं॑ष्टि ॥
१

अ॒ध्व॑र्यवः । भरं॑त । इन्द्रा॑य । सोमं॑म् । आ । अमं॑त्रेभिः ।
सि॒ञ्च॒त॒ । मद्यं॑म् । अन्धः॑ ।

का॒मी । हि । वी॒रः । सदं॑म् । अ॒स्य॒ । पी॒तिम् । जु॒होतं॑ ।
वृष्णें॑ । तत् । इत् । ए॒षः । व॒ष्टि॒ ॥१

अध्वर्यवः। भरत। इंद्राय। सोमं। आ। अमत्रेभिः । सिंचत।
मद्यं । अंधः ।।

कामी। हि। वीरः। सदं। अस्य । पीतिं । जुहोतं । वृष्णे ।
तत्। इत्। एषः। वष्टि ॥१॥

गृत्समदो ब्रूते । अध्वर्यवः अध्वरस्य नेतारः । अध्वरं
यजमानायेच्छंतः ॥ कव्यध्वरपृतनस्यर्चि लोप
इत्यकारलोपः । अत्र यास्कः । अध्वर्युरध्वरयुरध्वरं

युनक्त्यध्वरस्य नेताध्वरं कामयत इति । नि० १. ८. ॥ हे अध्वर्यवः इंद्राय देवाय सोमं हविर्धानादुत्तरवेदिं प्रति भरत । हरत॥ आमंत्रितस्याविद्यमानत्वादनिघातः । हृत्वामत्रेभिः । अमा सहादंत्यत्र होत्रादय इत्यमत्राणि चमसाः । तैर्मद्यं मदकरमंधः सोमलक्षणमन्नमासिंचत। अग्नौ प्रक्षिपत । अत्र यास्कः । आ सिंचतामत्रैर्मदनीयमंधोऽमत्रं पात्रममा अस्मिन्नदंति । नि० ५.. १.। इति । वीरः स इंद्रोऽस्य सोमस्य पीतिं पानं प्रति सदं सदैव कामी हि । कामयमानो हि । तस्माद्वृष्णे वर्षित्र इंद्राय सोमं जुहोत । जुहुत ॥ हु दानादनयोः । लोटि तप्तनप्तनथनाश्चेति तबादेशः । एष इंद्रस्तदित् तदेव सोमद्रव्यं वष्टि । कामयते ॥

अध्वर्यवो॒ यो अ॒पो व॑व्रि॒वांसं॑ वृ॒त्रं ज॒घाना॒शन्ये॑व वृ॒क्षम् ।

तस्मा॑ ए॒तं भ॑रत तद्व॒शायँ॑ ए॒ष इन्द्रो॑ अर्हति पी॒तिम॑स्य ॥२

अध्व॑र्यवः । यः । अ॒पः । व॒व्रि॒ऽवांस॑म् । वृ॒त्रम् । ज॒घान॑ । अ॒शन्या॑ऽइव । वृ॒क्षम् ।

तस्मै॑ । ए॒तम् । भ॒र॒त॒ । त॒त्ऽव॒शाय॑ । ए॒षः । इन्द्रः॑ । अ॒र्ह॒ति॒ । पी॒तिम् । अ॒स्य॒ ॥२

अध्वर्यवः । यः। अपः । वव्रिवांसं। वृत्रं । जघान। अशन्याऽइव। वृक्षं ।

तस्मै । एतं। भरत। तत्ऽवशाय। एषः । इंद्रः । अर्हति । पीतिं । अस्य ॥२॥

हे अध्वर्यवः य इंद्रोऽप उदकानि वव्रिवांसमावृत्य स्थितं वृत्रं । वृणोत्याकाशमिति वृत्रो मेघः । तं मेघं वज्रेण जघान । हतवान् । अशन्येव । यथाशन्या वैद्युताग्निना वृक्षं दहति तद्वत् । तस्मै तद्वशाय सोमकामाय तस्मा इंद्रायैतं सोमं

भरत। उत्तरवेदिं प्रति हरत । एष इंद्रोऽस्य सोमस्य पीतिं पानमर्हति । ।

अध्वंर्यवो यो दृभींकं जघान यो गा उदाजदप हि वलं वः ।

तस्मां एतमन्तरिंक्षे न वातमिन्द्रं सोमैरोर्णुत जूर्न वस्त्रैः ॥३

अध्वंर्यवः । यः । दृभींकम् । जघानं । यः । गाः । उत्ऽआजंत् । अपं । हि । वलम् । वरिति वः ।

तस्मैं । एतम् । अन्तरिंक्षे । न । वातंम् । इन्द्रंम् । सोमैः । आ । ऊर्णुत । जूः । न । वस्त्रैः ॥३

अध्वर्यवः।यः। दृभीकं। जघान। यः। गाः। उत्ऽआजत्। अप। हि। वलं वरिति वः।

तस्मै । एतं। अंतरिक्षे । न। वातं । इंद्रं । सोमैः । आ।
ऊर्णुत । जूः। न । वस्त्रैः ॥३॥

हे अध्वर्यवः य इंद्रो दृभीकं । सर्वान्विदारयति भियं करोतीति दृभीको नामासुरः । तमसुरं जघान । यश्च वलासुरेण निरुद्धा गा उदाजत् । निरगमयत् । ततश्च तमेव वलमसुरं अपवः । अपावृणोत् । हिंसितवानित्यर्थः । वृणोतेर्लुङि मंत्रे घसेत्यादिना च्लेर्लुक् । हल्ङ्यादिना तिपो लोपः । तस्मा इंद्रायैतं सोममंतरिक्षे वातं न वातमिव धाराभिर्व्याप्तं कुरुत । तदेवाहं सोमैरिंद्रमा ऊर्णत । सर्वत आच्छादयत ॥ ऊर्णुञ् आच्छादने । आदादिकः । लोटि रूपं ॥ तत्र दृष्टांतः । जूर्न जीर्णो यथा वस्त्रैरंगमाच्छादयति तद्वत् ॥

अध्वं॑र्यवो॒ य उरं॑णं ज॒घान॒ नव॑ च॒ख्वांसं॑ नव॒तिं च॑ बा॒हून् ।

यो अर्बुदमवं नीचा बंबाधे तमिन्द्रं सोमंस्य भृथे हिंनोत ॥४

अध्वंर्यवः । यः । उरंणम् । जघानं । नवं । चख्वांसंम् । नवतिम् । च । बाहून् ।

यः । अर्बुंदम् । अवं । नीचा । बबाधे । तम् । इन्द्रंम् । सोमंस्य । भृथे । हिनोत ॥४

अर्ध्वर्यवः। यः । उरणं । जघान । नव । चख्वांसं। नवतिं । च । बाहून् ।।

यः । अर्बुदं । अव। नीचा। बबाधे। तं । इंद्रं । सोमस्य। भृथे। हिनोत ॥४॥

हे अध्वर्यवः य इंद्रो नव नवतिं च एकोनशतं बाहून् चख्वांसं ॥ चष्टेरिदं रूपं । यद्वा खनतेः क्वसौ रूपं । निलोपः । छांदसं रूपं ॥ सर्वस्य दर्शयंतं । यद्वा आत्मनो देहे निखातवंतमुरणमेतन्नामकमसुरं जघान ।

यश्चार्बुदमेतन्नामकमसुरं च नीचाधोमुखं कृत्वावबबाधे।
तमेनमिंद्रं सोमस्य भृथे सोमं बिभ्रति पात्रे हिनोत ।
वर्धयत । यद्वा सोमस्य भृथे भरणे संपादने सति हिनोत ।
स्तोत्रैः प्रीणयत ॥ हि गतिवृद्ध्योः । स्वादिः ॥

अध्व॑र्यवो॒ यः स्वश्नं॑ ज॒घान॒ यः शुष्ण॑म॒शुषं॒ यो व्यं॑सम् ।

यः पिप्रुं॒ नमु॑चिं॒ यो रु॑धि॒क्रां तस्मा॒ इन्द्रा॒यान्ध॑सो जुहोत ॥५

अध्व॑र्यवः । यः । सु । अश्न॑म् । ज॒घान॑ । यः । शुष्ण॑म् ।
अ॒शुष॑म् । यः । विऽअं॑सम् ।

यः । पिप्रु॑म् । नमु॑चिम् । यः । रु॒धि॒ऽक्राम् । तस्मै॑ । इन्द्रा॑य
। अन्ध॑सः । जु॒हो॒त॒ ॥५

अध्वर्यवः । यः । सु। अश्नं । जघान । यः । शुष्णं । अशुषं
। यः । विऽअंसं ।

यः । पिप्रुं । नमुचिं । यः । रुधिऽक्रां । तस्मै । इंद्राय । अंधसः। जुहोत ॥५॥

हे अध्वर्यवः ये इंद्रोऽश्नं । अश्नाति भक्षयति प्राणिजातमिति । यद्वा अश्नुते स्वतेजसा सर्वं व्याप्नोतीत्यन्नः कश्चिदसुरः । तमसुरं सु सुष्ठु जघान । अशुषं केनाप्यशोषणीयं शुष्णमसुरं यश्च तमसुरं व्यंसमंसहीनं कृत्वा जघान । यश्च पिप्रुं तेजसां जगद्व्याप्य वर्तमानमेतन्नामकमसुरं नमुचिमसुरं जघान यश्च । तैत्तिरीयके नमुचिमसुरं नालभतेति प्रकृत्य फेनेन शिर उद्वर्तयदित्यंतेन वाक्यसंदर्भेण नमुचिवधः प्रपंचितः । तथा मंत्रश्च । अपां फेनेन नमुचेः शिर इंद्रोदवर्तयः । ८. १४. १३.। इति । रुधिक्रामेतन्नामकमसुरं यश्च जघान । तस्मा इंद्रायांधसो हविर्लक्षणान्यन्नानि जुहोत । जुहुत ॥

अध्व॑र्यवो॒ यः श॒तं शम्ब॑रस्य॒ पुरो॑ बि॒भेदाश्म॑नेव पू॒र्वीः ।

यो व॒र्चिनः॑ श॒तमिन्द्रः॑ स॒हस्र॑म॒पाव॑प॒द्भर॑ता॒ सोम॑मस्मै ॥६

अध्व॑र्यवः । यः । श॒तम् । शम्ब॑रस्य । पुरः॑ । बि॒भेद॑ ।
अश्म॑नाऽइव । पू॒र्वीः ।

यः । व॒र्चिनः॑ । श॒तम् । इन्द्रः॑ । स॒हस्र॑म् । अ॒प॒ऽअव॑पत् ।
भर॑त । सोम॑म् । अ॒स्मै॒ ॥६

अध्वर्यवः । यः। शतं । शंबरस्य । पुरः । बिभेद ।
अश्मनाऽइव । पूर्वीः ।।

यः । वर्चिनः। शतं । इंद्रः । सहस्रं। अपऽअवपत् । भरत।
सोमं। अस्मै ॥६॥

हे अध्वर्यवः य इंद्रः शंबरस्य मायाविनोऽसुरस्य पूर्वीः पुरातनीः शतं पुरः पुरीरश्मनेव अश्मसदृशेन वज्रेण बिभेद । यश्चेंद्रो वर्चिनः ॥ वर्च दीप्तौ । गमेरिनिः । उ०४.६.। इति विधीयमान इनिर्बहुलवचनादस्माद्भवति । यद्वा नामैतत् । तस्यासुरस्य शतं सहस्रमेतत्संख्याकानपरिमितान्वीरान् पुत्रानपावपत् । युगपदेव भूम्यामपातयत् । तथा च मंत्रवर्णः । शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान् । ७. ९९.५.। इति । अस्मा इंद्राय सोमं भरत ॥ ॥ १३ ॥

अध्वंर्यवो॒ यः श॒तमा स॒हस्र॒ं भूम्यां उ॒पस्थेऽवंपज्जघ॒न्वान् ।

कुत्संस्या॒योरंतिथि॒ग्वस्यं वी॒रान्न्यावृंण॒ग्भरंता॒ सोमंमस्मै ॥ ७

अध्वर्यवः । यः । श॒तम् । आ । स॒हस्रम् । भूम्याः । उ॒पऽस्थे । अवपत् । ज॒घ॒न्वान् ।

कुत्सस्य । आ॒योः । अ॒ति॒थि॒ऽग्वस्य । वी॒रान् । नि । अवृणक् । भरत । सोमम् । अ॒स्मै ॥७

अध्वर्यवः। यः। शतं । आ। सहस्रं। भूम्याः। उपऽस्थे। अवपत् । जघन्वान् ।

कुत्सस्य। आयोः। अतिथिऽग्वस्य । वीरान्।नि।अवृणक्। भरत। सोमं।अस्मै ॥७॥

हे अध्वर्यवो जघन्वान् पूर्वं शत्रून् हतवान् य इंद्रः शतं सहस्रमसुरान् भूम्या उपस्थ उत्संगेऽवपत् । एकैकेन प्रकारेणापातयत् । किंच यः कुत्सस्यैतन्नामकस्य राजर्षेः । आयोः पौरूरवसस्य राजर्षेः। अतिथिग्वस्य दिवोदासस्य । एतेषां त्रयाणां वीरानभिगंतॄन्प्रति द्वंद्विनः

शुष्णादीनसुरान् न्यवृणक् । वृणक्तिर्हिंसाकर्मा । अवधीत् । तथा च मंत्रवर्णः । त्वं कुत्सं शुष्णहत्येष्वाविथारंधयोऽतिथिग्वाय शंबरं ।१. ५१. ६.। इति । तादृशायेंद्राय सोमं भरत ॥

अध्व॑र्यवो॒ यन्न॑रः का॒मया॑ध्वे श्रु॒ष्टी वह॑न्तो नशथा॒ तदिन्द्रे॑ ।

गभ॑स्तिपूतं भरत श्रु॒तायेन्द्रा॑य॒ सोमं॑ यज्यवो जुहोत ॥८

अध्व॑र्यवः । यत् । न॒र॒ः । क॒मया॑ध्वे । श्रु॒ष्टी । वह॑न्तः । न॒श॒थ॒ । तत् । इन्द्रे॑ ।

गभ॑स्तिऽपूतम् । भ॒र॒त॒ । श्रु॒ताय॑ । इन्द्रा॑य । सोम॑म् । य॒ज्य॒वः॒ । जु॒हो॒त॒ ॥८

अध्वर्यवः । यत्। नरः । कमयाध्वे। श्रुष्टी। वहंतः । नशथ। तत् । इंद्रे ।

गभस्तिऽपूतं । भरत। श्रुताय । इंद्राय। सोमं। यज्यवः । जुहोत ॥८॥

नरः कर्मणां नेतारो हे अध्वर्यवः यदभिलषितमर्थं कामयाध्वे ॥ कामयतेर्लेट्यडागमः ॥ श्रुष्टी क्षिप्रमिंद्रे सोमं वहंतः प्रापयंतो यूयं तदभिलषितं फलं नशथ । प्राप्नुत। श्रुताय लोके प्रसिद्धायेंद्राय गभस्तिपूतं हस्ताभ्यां मंजनदोहनादिभिः शोधितं सोमं भरत। उत्तरवेदिं प्रति हरत । ततो यज्यवो यागं कुर्वाणा हे अध्वर्यव आहृतं सोममिंद्राय जुहोत । जुहुत । अग्नौ प्रक्षिपत ॥

अध्व॑र्यव॒ः कर्त॑ना श्रु॒ष्टिम॑स्मै॒ वने॒ निपू॑तं॒ वन॒ उन्न॑यध्वम् ।

जु॒षा॒णो हस्त्य॑म॒भि वा॑वशे व॒ इन्द्रा॑य॒ सोमं॑ मदि॒रं जु॑होत ॥
९

अध्वंर्यवः । कर्तन । श्रुष्टिम् । अस्मै । वनें । निऽपूंतम् । वनें । उत् । नयध्वम् ।

जुषाणः । हस्त्यंम् । अभि । वावशे । वः । इन्द्रांय । सोमंम् । मदिरम् । जुहोत ॥९

अध्वर्यवः। कर्तन। श्रुष्टिं । अस्मै। वने । निऽपूतं । वने । उत्। नयध्वं ।

जुषाणः । हस्त्यं । अभि । वावशे। वः । इंद्राय । सोमं । मदिरं । जुहोत ॥९॥

हे अध्वर्यवः अस्मा इंद्राय सोमं श्रुष्टिं सुखकरं कर्तन । कुरुत ॥ करोतेर्लोटि बहुलं छंदसीति विकरणस्य लुक् । तप्तनप्तनथनाश्चेति तनबादेशः । आमंत्रितस्याविद्यमानत्वान्न निघातः । किंच वने संभजनीये वन उदके निपूतमाप्यायनेन शोधितं

सोममुन्नयध्वं । ऊर्ध्वं नयत । यद्वा वने तद्विकारे चमसे निपूतं दशापवित्रेण शोधितं सोमं वने चमस उन्नयध्वं । जुषाणः प्रीयमाणः स इंद्रो वो युष्माकं हस्त्यं हस्ताभ्यामभिषुतं सोममभिवावशे । कामयते ॥ वश कांतौ । यङ्लुगंतस्य लटि व्यत्ययेनात्मनेपदं । लोपस्त आत्मनेपदेष्विति तलोपः । मदिरं मदकरमिमं सोममिंद्राय जुहोत । इंद्रोद्देशेनाग्नौ प्रक्षिपत ॥

अध्वंर्यव॒ः पय॒सोध॒र्यथा॒ गोः सोमेंभिरीं पृणता भो॒जमिन्द्रंम् ।

वेदा॒हमंस्य॒ निभृंतं म ए॒तद्दित्संन्तं॒ भूयों यज॒तश्चिंकेत ॥१०

अध्वंर्यवः । पयंसा । ऊधः । यथां । गोः । सोमेंभिः । ई॒म् । पृ॒ण॒त॒ । भो॒जम् । इन्द्रंम् ।

वेदं । अ॒हम् । अ॒स्य॒ । निऽभृंतम् । मे॒ । ए॒तत् । दित्संन्तम् । भूयः॑ । य॒ज॒तः । चि॒के॒त॒ ॥१०

अध्वर्यवः । पयसा । ऊधः । यथा । गोः । सोमेभिः । ईं। पृणत । भोजं । इंद्रं।

वेद । अहं । अस्य। निऽभृतं । मे । एतत्। दित्संतं । भूयः। यजतः । चिकेत ॥१०॥

हे अध्वर्यवः यथा गोरूधः पयसा पूर्णं तद्वदीमेनं भोजं फलस्य दातारं रक्षितारं चेदं सोमेभिः सोमैः। पृणत । पूरयत । मे मदीयस्य सोमस्य निभृतं गूढं सुखसाधनस्वभावमहमेव वेद । जानामि । इति पूर्वं न परस्मै कथितं । तथापि युष्मभ्यं ब्रवीमीत्येवं । दित्संतं सोमं दातुमिच्छंतं यजमानं यजतो यष्टव्य इंद्रो भूयो ऽतिशयेन चिकेत ॥ दित्संतं । डुदाञ् दाने । इच्छायां सन् । सनि मीमाध्वित्याकारस्य इसादेशः । अत्र

लोपोऽभ्यासस्येत्यभ्यासलोपः । सः स्यार्धधातुक इति सकारस्य तत्वं ।

अध्वंर्यवो॒ यो दि॒व्यस्य॒ वस्वो॒ यः पार्थिंवस्य॒ क्षम्यंस्य॒ राजां ।

तमूर्दरं॒ न पृंणता॒ यवे॒नेन्द्रं॒ सोमेंभि॒स्तदपों वो अस्तु ॥११

अध्वंर्यवः । यः । दि॒व्यस्यं । वस्वः॑ । यः । पार्थिंवस्य । क्षम्यंस्य । राजां ।

तम् । ऊर्दंरम् । न । पृ॒ण॒त॒ । यवेंन । इन्द्रंम् । सोमेंभिः । तत् । अपः॑ । व॒ः । अ॒स्तु॒ ॥११

अध्वर्यवः । यः । दिव्यस्य । वस्वः। यः। पार्थिवस्य । क्षम्यस्य । राजा।

तं । ऊर्दरं । न। पृणत। यवेन । इंद्रं । सोमेभिः। तत् ।
अपः। वः । अस्तु ॥११॥

हे अध्वर्यवः य इंद्रो दिव्यस्य द्युलोकार्हस्य वस्वो वसुनो राजा भवति । यश्च पार्थिवस्य । पृथिवीशब्देन विस्तीर्णमंतरिक्षमुच्यते । तत्रत्यं धनं पार्थिवं । तस्य राजा । यश्च क्षम्यस्य । क्षमा भूमिः । तत्रत्यं धनं क्षम्यं । तस्य च राजा भवति । तमेवंविधमिंद्रं सोमेभिः सोमैः पृणत पूरयत । तत्र दृष्टांतः । ऊर्दरं न । ऊर्ध्वं दीर्णमूर्दरं कुसूलं । यथा यवेन तत्पूर्णं तद्वदिंद्रं पूरयतेति । तादृशं सोमादिनेंद्रोदरपूरणलक्षणमपः कर्म वो युष्माकमस्तु ॥

अ॒स्मभ्यं॒ तद्वंसो दा॒नाय॒ राध॒ः समंर्थयस्व ब॒हु तें वस॒व्यंम् ।

इन्द्र॒ यच्चि॒त्रं श्र॑व॒स्या अनु॒ द्यून्बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥
१२

अ॒स्मभ्यं॑म् । तत् । व॒सो॒ इति॑ । दा॒नाय॑ । राधः॑ । सम् ।
अ॒र्थ॒य॒स्व॒ । ब॒हु । ते॒ । व॒स॒व्यं॑म् ।

इन्द्र॑ । यत् । चि॒त्रम् । श्र॒व॒स्याः । अनु॑ । द्यून् । बृ॒हत् ।
व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥१२

अस्मभ्यं । तत् । वसो इति । दानाय। राधः । सं ।
अर्थयस्व। बहु। ते। वसव्यं ।

इंद्र। यत्। चित्रं । श्रवस्याः। अनु। द्यून्। बृहत्। वदेम
विदथे। सुऽवीराः ॥१२॥

एषा ऋग्व्याख्याता ॥ ॥ १४ ॥

# ऋग्वेदः सूक्तं २.१५



## दे. इन्द्रः। त्रिष्टुप्।

प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम् ।

त्रिकद्रुकेष्वपिबत्सुतस्यास्य मदे अहिमिन्द्रो जघान ॥१॥

अवंशे द्यामस्तभायद्बृहन्तमा रोदसी अपृणदन्तरिक्षम् ।

स धारयत्पृथिवीं पप्रथच्च सोमस्य ता मद इन्द्रश्चकार ॥२॥

सद्मेव प्राचो वि मिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम् ।

वृथासृजत्पथिभिर्दीर्घयाथैः सोमस्य ता मद इन्द्रश्चकार ॥३॥

स प्रवोळ्हॄन्परिगत्या दभीतेर्विश्वमधागायुधमिद्धे अग्नौ ।

सं गोभिरश्वैरसृजद्रथेभिः सोमस्य ता मद इन्द्रश्चकार ॥४॥

स ईं महीं धुनिमेतोररम्णात्सो अस्नातॄनपारयत्स्वस्ति ।

त उत्स्नाय रयिमभि प्र तस्थुः सोमस्य ता मद इन्द्रश्चकार ॥५॥

सोदञ्चं सिन्धुमरिणान्महित्वा वज्रेणान उषसः सं पिपेष ।

अजवसो जविनीभिर्विवृश्चन्सोमस्य ता मद इन्द्रश्चकार ॥६॥

स विद्वाँ अपगोहं कनीनामाविर्भवन्नुदतिष्ठत्परावृक् ।

प्रति श्रोण स्थाद्व्यनगचष्ट सोमस्य ता मद इन्द्रश्चकार ॥७॥

भिनद्वलमङ्गिरोभिर्गृणानो वि पर्वतस्य दृंहितान्यैरत् ।

रिणग्रोधांसि कृत्रिमाण्येषां सोमस्य ता मद इन्द्रश्चकार ॥८॥

स्वप्नेनाभ्युप्या चुमुरिं धुनिं च जघन्थ दस्युं प्र दभीतिमावः ।

रम्भी चिदत्र विविदे हिरण्यं सोमस्य ता मद इन्द्रश्चकार ॥९॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।

शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥१०॥

## सायणभाष्यम्

' प्र घा न्वस्य ' इति दशर्चं चतुर्थं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम् । अत्रानुक्रमणिका- प्र घ दश ' इति ।दशरात्रे षष्ठेऽहनि निष्केवल्ये त्रीणि सूक्तानि । तत्रेदं द्वितीयम् । ' षष्ठस्य ' इति खण्डे सूत्रितम्-' एन्द्र याह्युप नः प्र घा न्वस्याभूरेक इति निष्केवल्यम् ' (आश्व श्रौ. ८. १) इति । त्र्येकमामके निष्केवल्ये ' प्र घा न्वस्य ' इत्येषा सूक्तमुखीया । उशनःस्तोमे सूत्रितं-' त्र्यर्यमा मनुषो देवताता प्र घा न्वस्य महतो महानि ' ( आश्व. श्रौ. ९. ५) इति ।।

प्र घा॒ न्वं॑स्य मह॒तो म॒हानिं स॒त्या स॒त्यस्य॒ करं॑णानि वोचम्
।

त्रिकं॑द्रुकेष्वपिबत्सु॒तस्या॒स्य मदे॒ अहि॒मिन्द्रों जघान ॥१

प्र । घ॒ । नु । अ॒स्य॒ । म॒ह॒तः । म॒हानिं । स॒त्या । स॒त्यस्यं ।
करं॑णानि । वो॒च॒म् ।

त्रिऽकं॑द्रुकेषु । अ॒पि॒ब॒त् । सु॒तस्यं । अ॒स्य । मदें । अहिंम् ।
इन्द्रः॑ । ज॒घा॒न॒ ॥१

प्र। घ। नु । अस्य । महतः। महानि। सत्या। सत्यस्य ।
करणानि। वोचं ।

त्रिऽकद्रुकेषु । अपिबत् । सुतस्य । अस्य। मदे। अहिं।
इंद्रः। जघान ॥१॥

गृत्समदो ब्रूते । महतो बलवतः सत्यस्य सत्यसंकल्पस्यास्येंद्रस्य सत्यानि यथार्थानि महानि महांति करणान्यस्मिन् सूक्ते वक्ष्यमाणानि कर्माणि तु अद्य प्रवोचं । प्रकर्षेण ब्रवीमि ॥ वच परिभाषणे । छंदसि लुङ्लिङ्लिट इति वर्तमाने लुङि अस्यतिवक्तिख्यातिभ्योऽङ्। वच उम् ॥ घेति प्रसिद्धौ । कानि तानि उच्यंते । त्रिकद्रुकेषु ज्योतिर्गौरायुरित्येवंरूपेष्वाभिप्लविकेष्वहःसु सुतस्याभिषुतं सोममिंद्रोऽपिबत् । ततः पीतस्यास्य सोमस्य मदे हर्षे संजाते सतींद्रोऽहिं वृत्रमसुरं जघान । हतवान् ॥

अ॒वं॒शे द्यामंस्तभायद्बृ॒हन्त॒मा रोदंसी अपृणद॒न्तरिंक्षम् ।

स धांरयत्पृथि॒वीं प॒प्रथंच्च॒ सोमंस्य॒ ता मद॒ इन्द्रंश्चकार ॥२

अ॒वं॒शे । द्याम् । अ॒स्त॒भा॒य॒त् । बृ॒हन्त॑म् । आ । रोद॑सी॒
इति॑ । अ॒पृ॒ण॒त् । अ॒न्तरि॑क्षम् ।

सः । धा॒र॒य॒त् । पृ॒थि॒वीम् । प॒प्रथ॑त् । च॒ । सोम॑स्य । ता ।
मदे॑ । इन्द्रः॑ । च॒का॒र॒ ॥२

अवंशे। द्यां । अस्तभायत्। बृहंतं। आ। रोदसी इति ।
अपृणत्। अंतरिक्षं ।

सः। धारयत्। पृथिवीं । पप्रथत्। च। सोमस्य। ता। मदे ।
इंद्रः। चकार ॥२॥

अवंश आकाशे द्यां द्योतमानं सूर्यं द्युलोकं वास्तभायत् ।
इंद्रोऽस्तभ्नात्। अनवलंबनस्य
तस्यावस्थापनमकरोदित्यर्थः । स्तंभु इति सौत्रो धातुः
क्र्यादिः । लङि व्यत्ययो बहुलमित्यहावपि शायजादेशः ॥
बृहंतं महदंतरिक्षं रोदसी द्यावापृथिव्यौ चापृणत् ।

स्वतेजसा पूरितवान् । किंच स इंद्रः पृथिवीं विस्तीर्णां भूमिं धारयत् । अधारयत् । तथा पप्रथश्च । एनां भूमिमप्रथयत् ॥ प्रथ प्रख्याने । स्यंतस्स लुङि चङि रूपं । चङ्यन्यतरस्यामिति मध्योदात्तत्वं ॥ सोमस्य मदे हर्षे संजाते सति तानीमानि कर्माणींद्रश्चकार ॥

सद्मे॑व प्राचो॒ वि मि॑माय॒ मानै॒र्वज्रे॑ण॒ खान्यं॑तृणन्न॒दीना॑म् ।

वृथा॑सृजत्प॒थिभि॑र्दीर्घया॒थैः सोम॑स्य॒ ता मद॒ इन्द्र॑श्चकार ॥३

सद्म॑ऽइव । प्राचः॑ । वि । मि॒मा॒य॒ । मानैः॑ । वज्रे॑ण । खानि॑ । अ॒तृ॒ण॒त् । न॒दीना॑म् ।

वृथा॑ । अ॒सृ॒ज॒त् । प॒थिऽभिः॑ । दी॒र्घ॒ऽया॒थैः । सोम॑स्य । ता । मदे॑ । इन्द्रः॑ । च॒का॒र॒ ॥३

सद्मऽइव। प्राचः। वि। मिमाय। मानैः । वज्रेण। खानि।
अतृणत् । नदीनां ।

वृथा। असृजत्। पथिऽभिः। दीर्घऽयाथैः। सोमस्य। ता।
मदे। इंद्रः। चकार ॥३॥

सद्मेव यथा यज्ञगृहान्मानैः षट्त्रिंशत्प्रक्रमप्राचीत्येवंरूपैः परिमाणैः प्राक्प्रवणान् कुर्वंति तद्वत सिंधून लोकान्वानृजून्वा मानैः परिमाणैः प्राचः प्राङ्मुखान्विमिमाय । इंद्रो विशेषेण निर्मितवान् । तथा नदीनां खानि निर्गमनद्वाराणि वज्रेण चातृणत् । अखनत् ॥ तृदि हिंसानादरयोः । रुधादि । लङ् । तथा च मंत्रः । इंद्रो अस्माँ अरदद्वज्रबाहुः ।३. ३३. ६.। इति । तथा दीर्घयाथैर्बहुकालं गंतव्यैः पथिभिर्मार्गैर्वृथासृजत् अनायासेन ता नदीः सृष्टवान् । सोमस्येति सिद्धार्थ इति ॥

स प्र॑वो॒ळ्हॄन्प॑रि॒गत्या॑ द॒भीते॒र्विश्व॑मधा॒गायु॑धमि॒द्धे अ॒ग्नौ ।

सं गोभि॒रश्वै॑रसृज॒द्रथे॑भि॒ः सोम॑स्य॒ ता मद॒ इन्द्र॑श्चकार ॥४

सः । प्र॒ऽवो॒ळ्हॄन् । प॒रि॒ऽगत्य॑ । द॒भीते॑ः । विश्व॑म् । अ॒धा॒क् । आयु॑धम् । इ॒द्धे । अ॒ग्नौ ।

सम् । गोभि॑ः । अश्वै॑ः । अ॒सृ॒ज॒त् । रथे॑भिः । सोम॑स्य । ता । मदे॑ । इन्द्र॑ः । च॒का॒र॒ ॥४

सः । प्रऽवोळ्हॄन्। परिऽगत्य। दभीतेः । विश्वं । अधाक् । आयुधं । इद्धे । अग्नौ ।

सं। गोभिः। अश्वै । असृजत् । रथेभिः। सोमस्य। ता। मदे । इंद्रः । चकार ॥ ४ ॥

प्राक्किल चुमुरिधुनिप्रभृतयोऽसुरा दभीतेः पुरं संरुध्य परिगृह्य तस्मात्पुरान्निरगुरिति कथा । स इंद्रं दभीतेः । दभीतिर्नाम कश्चिद्राजर्षिः । तस्य प्रवोळ्ढॄन् प्रवोढॄन् ॥ सहिवहोरोदवर्णस्येत्योत्वं । प्रकर्षेण तं दभीतिं वहतस्तानसुरान् मध्ये मार्गं परिगत्य तेषां विश्वं सर्वमायुधमिद्धेऽग्नौ दीप्यमाने वह्नावधाक् । अधाक्षीत्॥ दहेर्लुङि मंत्रे घसेत्यादिना च्लेर्लुक् ॥ पश्चात्तं दभीतिं गोभिरश्वै रथेभी रथैश्च समसृजत् । संयोजितवान् । सोमस्यादि सिद्धमिति ॥

अतिमूर्तिनाम्न्येकाहे मरुत्वतीये सूक्तमुखीया। अतिमूर्तिनेति खंडे सूचितं । स ईं महीं धुनिमेतोररम्णात । आ°९.८.। इति ॥

स ईं म॒हीं धुनि॒मेतोंररम्णा॒त्सो अंस्ना॒तृनंपारयत्स्व॒स्ति ।

त उ॒त्स्नायं॑ र॒यिम॒भि प्र तं॑स्थु॒ः सोमं॑स्य॒ ता मद॒ इन्द्रं॑श्चकार ॥५

सः । ई॒म् । म॒हीम् । धुनिं॑म् । एतोः॑ । अ॒र॒म्ण॒ात् । सः ।
अ॒स्ना॒तॄन् । अ॒पा॒र॒य॒त् । स्व॒स्ति ।

ते । उ॒त्ऽस्नायं॑ । र॒यिम् । अ॒भि । प्र । त॒स्थु॒ः । सोमं॑स्य ।
ता । मदें॑ । इन्द्रः॑ । च॒का॒र॒ ॥५

सः। ई। महीं। धुनिं। एतोः । अरम्णात्। सः । अस्नातॄन्।
अपारयत् । स्वस्ति । ते। उत्ऽस्नाय। रयिं । अभि। प्र।
तस्थुः । सोमस्य । ता। मदे। इंद्रः । चकार ॥५॥

स इंद्र ईमेनां महीं महतीं धुनिं । धुनोति स्तोतॄणां
पापानीति धुनिः परुष्णी नदी । तामेतोः ॥
ईश्वरपदासंनिधानेऽपि तोसुन्प्रत्ययः । पा°३. ४.१३. ॥
ऋषीणां गमनार्थमरम्णात् । उपाशमयत् । महाजलां

नदीमल्पोदकामकरोदित्यर्थः । ततः स इंद्रोऽस्नातॄन् स्नातुमशक्तान् तरणासमर्थानृषीन स्वस्ति क्षेमेणापारयत् । ते महर्षय उत्स्नाय तां नदीमुत्तीर्य यं रयिमपेक्ष्य गच्छंति तं रयिमभिलक्ष्य प्रतस्थुः । प्रतस्थिरे। शिष्टं सिद्धं ॥ ॥५॥

सोदं॑ञ्चं॒ सिन्धु॑मरिणान्महि॒त्वा वज्रे॒णान॑ उ॒षस॒ः सं पिं॑पेष ।

अ॒ज॒वसों ज॒विनीं॑भिर्वि॒वृ॒श्चन्सोमं॑स्य॒ ता मद॒ इन्द्रं॑श्चकार ॥६

सः । उदं॑ञ्चम् । सिन्धु॑म् । अ॒रि॒णा॒त् । म॒हि॒ऽत्वा । वज्रे॑ण । अन॑ः । उ॒षस॑ः । सम् । पि॒पे॒ष॒ ।

अ॒ज॒वस॑ः । ज॒विनीं॑भिः । वि॒ऽवृ॒श्चन् । सोमं॑स्य । ता । मदें । इन्द्र॑ः । च॒का॒र॒ ॥६

सः। उदंचं । सिंधु । अरिणात् । महिऽत्वा। वज्रेण । अनः । उषसः। सं । पिपेष।

अजवसः । जविनीभिः । विऽवृश्चन् । सोमस्य । ता। मदे । इंद्रः । चकार ॥६॥

स इंद्रः सिंधु प्रांचं संतं महित्वा स्वकीयेन महिम्नोदंचमरिणात् । उदङ्मुखमकरोत् । सिंधुशब्दश्छंदसि पुल्लिंगः ॥ उषस उषोदेव्या अनः शकटं वज्रेण संपिपेष । चूर्णीचकार । एतच्च दिवश्चिदा दुहितरं ।४. ३०. ९.। इत्यत्र स्पष्टं वक्ष्यते । किं कुर्वन् । अजवसो जवहीना दुर्बलाः सेना जविनीभिर्जवयुक्ताभिः सेनाभिर्विवृश्चन । विशेषेण भिंदन् । पिपेषेति समन्वयः ॥ ओव्रश्चू छेदने । शतरि ग्रहिज्यादिना संप्रसारणं । शिष्टं स्पष्टं ।

स वि॒द्वाँ अंपगो॒हं क॒नीनां॑मा॒विर्भव॑न्नु॒दं॑तिष्ठत्परा॒वृक् ।

प्रतिं श्रो॒णः स्था॒द्व्य१॒॑नगं॑चष्ट॒ सोमं॑स्य॒ ता मद॒ इन्द्रं॑श्चकार

॥७

सः । वि॒द्वान् । अ॒प॒ऽगो॒हम् । क॒नीना॑म् । आ॒विः । भव॑न् ।

उत् । अ॒ति॒ष्ठ॒त् । प॒रा॒ऽवृक् ।

प्रतिं । श्रो॒णः । स्था॒त् । वि । अ॒नक् । अ॒च॒ष्ट॒ । सोमं॑स्य ।

ता । मदें । इन्द्रः॑ । च॒का॒र॒ ॥७

सः । विद्वान् । अपऽगोहं । कनीनां आविः । भवन्। उत्।

अतिष्ठत् । पराऽवृक्।

प्रति। श्रोणः। स्थात्।वि। अनक्। अचष्ट । सोमस्य। ता।

मदे । इंद्रः। चकार ॥ ७॥

पुरा किल कन्यकाश्चक्षुर्हीनं पादहीनं परावृजं जिघृक्षुमृषिं दृष्ट्वाभिदुद्रुवुः । ततः स ऋषिरिंद्रं स्तुत्वा चक्षुः पादं च लेभे । तदेतदाह । कनीनां कन्यकानामपगोहमपगोहनं तिरोभावं विद्वान् परावृगृषिराविर्भवन् सर्वेषां प्रत्यक्षो भवन् उदतिष्ठत् । श्रोणः पूर्वं पंगुरिदानीमिंद्रस्य प्रसादाद्विभग्नजानुस्ताः कन्याः प्रति स्थात् । पूर्वमंधोऽधुना चक्षुर्लाभाद्व्यचष्ट । ताः कन्यका विशेषेण पश्यति स्म । तानीमानि कर्माणि स इंद्रश्चकार ॥

भि॒नद्व॒लमङ्गिंरोभिर्गृणा॒नो वि पर्वंतस्य दृंहि॒तान्यैंरत् ।

रि॒णग्रोधांसि कृ॒त्रिमांण्येषां॒ सोमंस्य॒ ता मद॒ इन्द्रंश्चकार ॥८

भि॒नत् । व॒लम् । अङ्गिंरःऽभिः । गृ॒णा॒नः । वि । पर्वंतस्य । दृं॒हि॒तानिं । ऐ॒र॒त् ।

रि॒णक् । रोधां॑सि । कृ॒त्रिमां॑णि । ए॒षा॒म् । सोमं॑स्य । ता । मदें । इन्द्रः॑ । च॒का॒र॒ ॥८

भिनत्। वलं। अंगिरःऽभिः । गृणानः । वि। पर्वतस्य। दृंहितानि। ऐरत् ।

रिणक् । रोधांसि। कृत्रिमाणि । एषां । सोमस्य । ता । मदे । इंद्रः। चकार ॥८॥

अंगिरोभिर्गृणानः स्तूयमानः स इंद्रो वलं वलनामकमसुरं भिनत् । अभिनत् । तथा गवां निरोधकस्य पर्वतस्य दृंहितानि शिलाभिर्दृढीकृतानि द्वाराणि व्यैरत् । उद्घाटितवान् । तदेवाह । एषां पर्वतानां कृत्रिमाणि क्रियया निर्वृत्तानि रोधांसि निरुद्धानि द्वाराणि रिणक् । उदघाटयत् । गतमन्यत् । ।

अतिमूर्तिनाम्न्येकाहे निष्केवल्ये सूक्तमुखीया स्वप्नेनेत्येषा । सूत्रितं । स्वप्नेनाभ्युप्या चुमुरिं धुनिं चेति सूक्तमुखीया । आ° ९. ८.। इति ॥

स्वप्नें॑ना॒भ्युप्या॒ चुमुं॑रिं॒ धुनिं॑ च ज॒घन्थ॒ दस्युं॒ प्र द॒भीतिं॑मावः ।

र॒म्भी चि॒दत्रं॑ विविदे॒ हिरं॑ण्यं॒ सोमं॑स्य॒ ता मद॒ इन्द्रं॑श्चकार ॥ ९

स्वप्नें॑न । अ॒भि॒ऽउप्यं॑ । चुमुं॑रिम् । धुनिं॑म् । च॒ । ज॒घन्थं॑ । दस्युं॑म् । प्र । द॒भीतिं॑म् । आ॒व॒ः ।

र॒म्भी । चि॒त् । अत्रं॑ । वि॒वि॒दे॒ । हिरं॑ण्यम् । सोमं॑स्य । ता । मदें॑ । इन्द्रः॑ । च॒का॒र॒ ॥९

स्वप्नेन । अभिऽउप्य । चुमुरि। धुनिं । च । जघंथ। दस्युं ।
प्र। दभीतिं । आवः ।

रंभी। चित् । अत्र । विविदे । हिरण्यं । सोमस्य । ता । मदे
। इंद्रः । चकार ॥९॥

स त्वं दस्युं सर्वस्योपक्षपयितारं चुमुरिं धुनिं च एतन्नामानावसुरौ स्वप्नेन दीर्घनिद्रयाभ्युप्य संयोज्य जघंथ । हतवानसि । ततस्ताभ्यां युध्यमानं दभीतिं राजर्षिं प्रावः । रक्षितवानसि । तथा च मंत्रवर्णः । त्वं नि दस्युं चुमुरिं धुनिं चास्वापयो दभीतये सुहंतु। ७.१९.४.। इति ॥ आवः । अवते रक्षणार्थस्य लङि सिपि रूपं । रंभी चित् वेत्रधारी चास्य दौवारिकोऽत्रास्मिन्युद्धे तयोरसुरयोर्हिरण्यं धनं विविदे । लेभे । विद्लृ लाभे स्वरितेत् । तानीमानि कर्माणि सोमस्य मदे सति चकारेति ।

नू॒नं सा ते॒ प्रति॒ वरं॑ जरि॒त्रे दु॑ही॒यदि॑न्द्र॒ दक्षि॑णा म॒घोनी॑ ।

शिक्षा॑ स्तो॒तृभ्यो॒ माति॑ ध॒ग्भगो॑ नो बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥१०

नू॒नम् । सा । ते॒ । प्रति॑ । वर॑म् । ज॒रि॒त्रे । दु॒ही॒यत् । इ॒न्द्र॒ । दक्षि॑णा । म॒घोनी॑ ।

शिक्ष॑ । स्तो॒तृऽभ्यः॑ । मा । अति॑ । ध॒क् । भगः॑ । नः॒ । बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥१०

नूनं । सा । ते । प्रति। वरं। जरित्रे। दुहीयत् । इंद्र। दक्षिणा। मघोनी।

शिक्ष। स्तोतृऽभ्यः। मा। अति।धक्। भगः।नः।बृहत्। वदेम। विदथे। सुवीराः ॥१०॥

हे इंद्र या दक्षिणा दक्षमुत्साहनं करोतीति दक्षिणा स्तोतृभ्यो देया ते त्वत्संबंधिनी मघोनी धनवत जरित्रे स्तोत्रे वरं श्रेष्ठमभिमतमर्थं नूनं प्रतिदुहीयत् । इदानीं प्रतिदोग्धि। संपादयतीत्यर्थः । तादृशीं दक्षिणां स्तोतृभ्योऽस्मभ्यं शिक्ष । प्रयच्छ । किंच भगो भजनीयस्त्वं माति धक् ॥ दहेर्दानार्थस्य लुङि मंत्रे घसेत्यादिना च्लेर्लुक् ॥ नोऽस्मानतिक्रम्यान्येभ्यो दक्षिणां मा दाः । प्रथममस्मभ्यं दत्त्वा पश्चादन्येभ्यो दीयतामित्यर्थः । यद्वा नोऽस्माकं कामान् मा धक् । मा धाक्षीः। अपेक्षितफलदानेन पूरयेत्यर्थः । सुवीराः शोभनपुत्रपौत्राः संतो वयं विदथे ऽस्मिन्यज्ञे बृहत् प्रभूतं स्तोत्रं वदेम । त्वामुद्दिश्य ब्रवाम । अत्र सा ते प्रतिदुग्धामिति प्रकृत्य वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वेत्यंतं निरुक्तमनुसंधेयं । नि० १.७.॥॥६॥ ॥१॥

२.१५.९

संयुज्य तपसात्मानम् ऐन्द्रं बिभ्रन्महद्वपुः । अदृश्यत मुहूर्तेन दिवि च व्योम्नि चेह च ।। ६६।।

तमिन्द्रमिति मत्वा तु दैत्यौ भीमपराक्रमौ । धुनिश्च चुमुरिश्चोभौ सायुधावभिपेततुः ।। ६७ ।।

विदित्वा स तयोर्भावम् ऋषिः पापं चिकीर्षतोः । यो जात इति सूक्तेन कर्माण्यैन्द्राण्यकीर्तयत् ।। ६८ ।।

उक्तेषु कर्मस्वैन्द्रेषु भीस्तावाशु विवेश ह ।
इदमन्तरमित्युक्त्वा ताविन्द्रस्तु निबर्हयत् ।। ६९ ।।

निहत्य तौ गृत्समदम् ऋषिं शक्रोऽभ्यभाषत । यथेष्टं मां सखे पश्य प्रियत्वं आगतोऽसि मे ।।बृहद्देवता ४.७० ।।

# ऋग्वेदः सूक्तं २.१६


**ऋग्वेदः - मण्डल २**

← सूक्तं २.१५ | सूक्तं २.१६ | सूक्तं २.१७ →


गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः

## दे. इन्द्रः। जगती, ९ त्रिष्टुप्

प्र वः सतां ज्येष्ठतमाय सुष्टुतिमग्नाविव समिधाने हविर्भरे ।

इन्द्रमजुर्यं जरयन्तमुक्षितं सनाद्युवानमवसे हवामहे ॥१॥

यस्मादिन्द्राद्बृहतः किं चनेमृते विश्वान्यस्मिन्सम्भृताधि वीर्या ।

जठरे सोमं तन्वी सहो महो हस्ते वज्रं भरति शीर्षणि क्रतुम् ॥२॥

न क्षोणीभ्यां परिभ्वे त इन्द्रियं न समुद्रैः पर्वतैरिन्द्र ते रथः ।

न ते वज्रमन्वश्नोति कश्चन यदाशुभिः पतसि योजना पुरु ॥३॥

विश्वे ह्यस्मै यजताय धृष्णवे क्रतुं भरन्ति वृषभाय सश्चते ।

वृषा यजस्व हविषा विदुष्टरः पिबेन्द्र सोमं वृषभेण भानुना ॥४॥

वृष्णः कोशः पवते मध्व ऊर्मिर्वृषभान्नाय वृषभाय पातवे ।

वृषणाध्वर्यू वृषभासो अद्रयो वृषणं सोमं वृषभाय सुष्वति ॥५॥

वृषा ते वज्र उत ते वृषा रथो वृषणा हरी वृषभाण्यायुधा ।

वृष्णो मदस्य वृषभ त्वमीशिष इन्द्र सोमस्य वृषभस्य तृप्णुहि ॥६॥

प्र ते नावं न समने वचस्युवं ब्रह्मणा यामि सवनेषु दाधृषिः ।

कुविन्नो अस्य वचसो निबोधिषदिन्द्रमुत्सं न वसुनः सिचामहे ॥७॥

पुरा सम्बाधादभ्या ववृत्स्व नो धेनुर्न वत्सं यवसस्य पिप्युषी ।

सकृत्सु ते सुमतिभिः शतक्रतो सं पत्नीभिर्न वृषणो नसीमहि ॥८॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।

शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥९॥

**सायणभाष्यम्**

' प्र वः सताम् ' इति नवर्चं पञ्चमं सूक्तं गार्त्समदमैन्द्रम् । अत्रानुक्रमणिका- प्र वो नवान्त्या त्रिष्टुप् ' इति । नवमी त्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः ।। तृतीये पर्यायेऽच्छावाकशस्त्रे 'प्र वः सताम् ' इति सूक्तम् । ' अतिरात्रे ' इति खण्डे सूत्रितं-' प्र वः सतां प्रो द्रोणे हरयः कर्माग्मन्निति याज्या ' ( आश्व. श्रौ ६. ४) इति ।।

प्र वः॑ स॒तां ज्येष्ठ॑तमाय सुष्टु॒तिम॒ग्नावि॑व समिधा॒ने ह॒विर्भ॑रे । 

इन्द्र॑मजु॒र्यं ज॒रय॑न्तमुक्षि॒तं स॒नाद्युवा॑न॒मव॑से हवामहे ॥१

प्र । वः । सताम् । ज्येष्ठंतमाय । सुऽस्तुतिम् । अग्नौऽइंव । सम्ऽइधाने । हविः । भरे ।

इन्द्रंम् । अजुर्यम् । जरयंन्तम् । उक्षितम् । सनात् । युवांनम् । अवंसे । हवामहे ॥१

प्र। वः । सतां । ज्येष्ठऽतमाय । सुऽस्तुतिं । अग्नौऽइव । संऽइधाने। हविः। भरे।।

इंद्रं । अजुर्यं। जरयंतं । उक्षितं । सनात्। युवनं । अवसे। हवामहे ॥१॥

गृत्समदो ब्रूते । हे यजमाना वो युष्मदर्थं सतां महतां देवानां ज्येष्ठतमायातिशयेन श्रेष्ठायेंद्राय तदर्थं । अग्नाविव समिधाने । इवशब्द एवार्थः । दीप्यमान एवाग्नौ हविः प्रभरे । संपादयामि । ततः परं सुष्टुतिं शोभनां स्तुतिं करोमि ॥ भर इति भृञ् भरणे ञित्त्वादुभयपदी। लटि

रूपं ॥ अजुर्यमजरणीयं जरयंतं सर्वमन्यज्जरयंतमुक्षितं सोमेन सिक्तं सनात्सनातनं युवानं नित्यतरुणं तादृशमिंद्रमवसेऽस्माकं रक्षणाय तस्य तर्पणाय वा हवामहे । आह्वयामः ॥

यस्मा॒दिन्द्रा॑द्बृह॒तः किं च॒नेमृ॒ते विश्वा॑न्यस्मि॒न्सम्भृ॒ताधि॑ वी॒र्या॑ ।

ज॒ठरे॒ सोमं॑ त॒न्वी॒३॒ सहो॒ महो॒ हस्ते॒ वज्रं॒ भर॑ति शी॒र्षणि॒ क्रतु॑म् ॥२

यस्मा॑त् । इन्द्रा॑त् । बृ॒ह॒तः । किम् । च॒न । ई॒म् । ऋ॒ते । विश्वा॑नि । अ॒स्मि॒न् । सम्ऽभृ॑ता । अधि॑ । वी॒र्या॑ ।

ज॒ठरे॑ । सोम॑म् । त॒न्वि॑ । सहः॑ । महः॑ । हस्ते॑ । वज्र॑म् । भर॑ति । शी॒र्षणि॑ । क्रतु॑म् ॥२

यस्मात्।इंद्रात्।बृहतः।किं।चन।।ऋते।विश्वनि।अस्मिन्।
संऽभृता।अधि।वीर्या।

जठरे। सोमं । तन्वि । सहः । महः । हस्ते। वज्रं । भरति ।
शीर्षणि । क्रतुं ॥२॥

बृहतो महतो यस्मादिंद्रादृते किमपीमिदं जगच्चन ।
नास्तीत्यर्थः । चेति नेति निपातद्वयसमुदायश्चनेति । चेति
चिदित्यर्थे नेति निषेधार्थे । ऐकपद्यं तु सांप्रदायिकं ।
उत्क्तार्थे मंत्रः । नेंद्रादृते पवते धाम किं चनेति ।। यद्वा
इंद्रादृत ईमिदं जगत् किं । न क्षुद्रमत्यल्पमित्यर्थः । कुत
एतत् तदेवोच्यते । अस्मिन्निंद्रे विश्वानि सर्वाणि वीर्याणि
सामर्थ्यान्यधि संभृता । अधिकं संभृतान्यासते । यश्चेंद्रो
जठरे स्वोदरे सोममभिषुतं सोमरसं भरति । बिभर्ति ।
किंच तन्वि तन्वां स्वकीये सर्वस्मिन् शरीरे सहो बलं
महस्तेजश्च बिभर्ति । हस्ते वज्रमायुधं बिभर्ति । शीर्षणि

शिरसि क्रतुं विज्ञानं भरति । बिभर्ति ॥

यद्वृत्तयोगादनिघातः । वाक्यभेदाद्वा निघाताभावः ।

शीर्षणि । शीर्षन् छंदसीति ॥

न क्षो॒णीभ्यां॑ परि॒भ्वे॑ त इन्द्रि॒यं न स॑मु॒द्रैः पर्व॑तैरिन्द्र ते॒ रथः॑

।

न ते॒ वज्र॒मन्व॑श्नोति॒ कश्च॒न यदा॒शुभि॒ः पत॑सि॒ योज॑ना पु॒रु

॥३

न । क्षो॒णीभ्या॑म् । प॒रि॒ऽभ्वे॑ । ते॒ । इ॒न्द्रि॒यम् । न । स॒मु॒द्रैः ।

पर्व॑तैः । इ॒न्द्र॒ । ते॒ । रथः॑ ।

न । ते॒ । वज्र॑म् । अनु॑ । अ॒श्नो॒ति॒ । कः । च॒न । यत् ।

आ॒शुऽभिः॑ । पत॑सि । योज॑ना । पु॒रु ॥३

न। क्षोणीभ्यां । परिऽभ्वे। ते । इंद्रियं । न। समुद्रैः। पर्वतैः। इंद्र । ते। रथः।

न ते।वज्रं। अनु। अश्नोति। कः। चन। यत्। आशुऽभिः। पतसि। योजना। पुरु॥३॥

हे इंद्र ते तवेंद्रियं बलं क्षोणीभ्यां द्यावापृथिवीभ्यां न परिभ्वे। न परिभवनीयं ॥ कृत्यार्थे तवैकेन्केन्यत्वन इति केन्प्रत्ययः । उदात्तस्वरितयोरिति स्वरितत्वं ॥ किंच ते रथः समुद्रैः पर्वतैश्च न परिभवनीयः । ते वज्रमायुधं कश्चन पुमान् नान्वश्नोति । न व्याप्नोति परिभवितुं ॥ अशू व्याप्तौ । व्यत्ययेन परस्मैपदं ॥ यद्यदासुरवधार्थ दिग्विजयकाले पुरु पुरूणि बहूनि योजना योजनानि पतसि । गच्छसि । तदा तव बलादि न परिभवनीयमिति समन्वयः ॥

विश्वे॒ ह्यं॑स्मै यज॒तायं धृ॒ष्णवे॒ क्रतुं॒ भरं॑न्ति वृष॒भाय॒ सश्चं॑ते ।

वृषां यजस्व ह॒विषां वि॒दुष्टंर॒ः पिबेंन्द्र॒ सोमं वृष॒भेणं भा॒नुनां ॥४

विश्वें । हि । अ॒स्मै॒ । य॒ज॒तायं । धृ॒ष्णवें । क्रतुंम् । भरंन्ति । वृ॒ष॒भायं । सश्चंते ।

वृषां । य॒ज॒स्व॒ । ह॒विषां । वि॒दुःऽतंरः । पिबं । इ॒न्द्र॒ । सोमंम् । वृ॒ष॒भेणं । भा॒नुनां ॥४

विश्वे । हि। अस्मै । यजताय। धृष्णवे। क्रतुं । भरंति । वृषभायं । सश्चते ।।

वृषा। यजस्व । हविष। विदुःऽतरः। पिब। इंद्र। सोमं। वृषभेण । भानुना ॥४॥

हे यजमान विश्वे सर्वे जना यजताय सर्वैर्यजनीयाय धृष्णवे शत्रूणां धर्षणशीलाय वृषभाय कामानां वर्षित्रे सश्चते सज्जमानाय स्तुत्यादिकर्मवत्सु स्तोतृषु

एतादृशायेंद्राय क्रतुं यज्ञादिलक्षणं कर्म भरंति हि । हरंति खलु । प्रणयंतीत्यर्थः । भरंति । हियोगादनिघातः । यस्मादेवं तस्माद्वृषा सोमरससेचनसमर्थो विदुष्टरः ॥ विद्वच्छब्दात्तरपि छांदसं संप्रसारणं । शासिवसिघसीनां चेति संहितायां षत्वं । विद्वत्तरस्तं हविषा तमिंद्रं यजस्व । इदानीमिंद्रं संबोध्याह। हे इंद्र वृषभेण कामानां वर्षकेण भानुना दीप्यमानेनाग्निना सह सोमं पिब ।।

वृष्ण॒ः कोशः॑ पवत॒े मध्वं ऊ॒र्मिर्वृ॑ष॒भान्ना॑य वृष॒भाय॒ पातंवे ।

वृषंणाध्व॒र्यू वृं॑ष॒भासो॒ अद्रंयो॒ वृषंण॒ं सोमं॑ वृष॒भायं सुष्वति ॥५

वृष्णः॑ । कोशः॑ । प॒व॒त॒े । मध्वः॑ । ऊ॒र्मिः । वृ॒ष॒भऽअंन्नाय । वृ॒ष॒भायं । पातंवे ।

वृषंणा । अ॒ध्व॒र्यू इतिं । वृ॒ष॒भासः॑ । अद्रं॑यः । वृषंणम् ।
सोमंम् । वृ॒ष॒भायं । सु॒स्व॒ति॒ ॥५

वृष्णः । कोशः। पवते। मध्वः। ऊर्मिः। वृषभऽअन्नाय।
वृषभाय। पातवे।

वृषणा। अध्वर्यू इति । वृषभासः । अद्रयः। वृषणं । सोमं।
वृषभाय। सुस्वति ॥५॥

हे इंद्र वृष्णः फलस्य वर्षितुर्मध्वो मदकरस्य सोमस्य
कोशो रस ऊर्मिरनुष्ठातृणां पातृणां च प्रेरकः सन् पवते ।
गच्छति ॥ पव गतौ । अनुदात्तेत् । किमर्थं । वृषभान्नाय ।
बलवर्धकाण्यन्नानि यस्य स तथोक्तः । तादृशाय वृषभाय
कामानां वर्षित्र इंद्राय पातवे । पानार्थं पवत इति
समन्वयः । किंच वृषणा सोमरससेचनसम-थावध्वर्यं
अध्वर्युप्रतिप्रस्थातारौ वृषभासो वर्षका
अद्रयोऽभिषवग्रावाणश्च वृषणं स्वर्गादिफलस्य सेक्तारं ममं

वृषभाय देवानां श्रेष्ठाय तुभ्यं सुष्वति । सुन्वंति ॥
सुनोतेर्लटि बहुलं छंदसीति विकरणस्य सुः ।
अदभ्यस्तादिति झोऽदादशः ॥ ॥ १७॥

वृषां ते वज्रं उत ते वृषा रथो वृषंणा हरीं वृषभाण्यायुंधा ।

वृष्णो मदंस्य वृषभ त्वमींशिष इन्द्र सोमंस्य वृषभस्यं तृप्णुहि ॥६

वृषां । ते । वज्रः । उत । ते । वृषां । रथः । वृषंणा । हरी इतिं । वृषभाणिं । आयुंधा ।

वृष्णः । मदंस्य । वृषभ । त्वम् । ईशिषे । इन्द्रं । सोमंस्य । वृषभस्यं । तृप्णुहि ॥६

वृषा । ते। वज्रः । उत । ते । वृषा। रर्थः। वृषणा। हरी इति । वृषभाणि। आयुधा।

वृष्णः । मदस्य । वृषभ। त्वं । ईशिषे । इंद्र। सोमस्य।
वृषभस्य । तृप्णुहि ॥६॥

वृषभ कामानां वर्षक हे इंद्र ते तव वज्रो वृधा कामवर्षकः । तथा ते रथोऽपि वृषा । ते हरी एतन्नाम कावथो वृषणा वर्षकी । तवायुधा वज्रव्यतिरिक्तान्यायुधान्धाय वृषभाणि । वृष्णो वर्षकस्य मदस्य मदकरस्य सोमस्य त्वमवशिषे । स्वामी भवसि । हे इंद्र वृषभस्य वर्षकेण सोमस्य सोमेन तृप्णुहि । तृप्तो भव ॥ तृप प्रीणने स्वादिः । क्षुभ्नादिषु । पा° ८. ४. ३९.। नृमनतृप्नोतीति पठितं । तथापि सर्वविधीनां छंदसि विकल्पितत्वादत्र णत्वप्रतिषेधो न भवति । ।

प्र ते॒ नावं॒ न सम॑ने वच॒स्युवं॒ ब्रह्म॑णा यामि॒ सव॑नेषु॒ दाधृ॑षिः
।

कुविन्नों अस्य वचंसो निबोधिंषदिन्द्रमुत्सं न वसुंनः सिचामहे ॥७

प्र । ते । नावंम् । न । समंने । वचस्युवंम् । ब्रह्मंणा । यामि । सवंनेषु । दधृंषिः ।

कुवित् । नः । अस्य । वचंसः । निऽबोधिंषत् । इन्द्रंम् । उत्संम् । न । वसुंनः । सिचामहे ॥७

प्र। ते । नावं । न। समने। वचस्युवं । ब्रह्मणा। यामि। सवनेषु । दधृषिः।

कुवित्। नः। अस्य। वर्चसः।निऽबोधिषत्। इंद्रं। उत्सं। न। वसुनः । सिचामहे॥७॥

दाधृषिस्त्वत्प्रसादाच्छत्रूणां धर्षकोऽहं समने संग्रामे वचस्युवं । अभि तन्वादित्वादुवङादेशः ॥ स्तोत्रमिच्छंतं नावं न नावमिवापद्भ्यस्तारकं ते त्वां सवनेषु त्रिषु

ब्रह्मणः स्तोत्रेण प्रयामि । प्राप्नोमि । किंच अस्य वचसः । स्तुतिलक्षणमेतद्वाक्यं । कुविद्बहु निबोधिषत् । इंद्रो नितरां बुध्यतां ॥ बुध अवगमने । लेटि सिब्बहुलमिति सिप् । कुविद्योगादनिघातः । तिङि चोदात्तवतीति गतेर्निघातः ॥ वयं चोत्सं न जलस्य निधानभूतं कूपमिव वसुनो निधानभूतमिंद्रं सिचामहे । सोमेन सिंचामः । सिचिर् क्षरणे स्वरितेत् । आगमानुशासनस्यानित्य त्वान्नुमभावः ।

पु॒रा सं॑म्बा॒धाद॒भ्या वं॑वृत्स्व नो धे॒नुर्न व॒त्सं यवं॑सस्य पि॒प्युषीं॑ ।

स॒कृत्सु ते॑ सुम॒तिभिः॑ शतक्रतो॒ सं पत्नी॑भि॒र्न वृष॑णो नसीमहि ॥८

पुरा । सम्ऽबाधात् । अभि । आ । ववृत्स्व । नः । धेनुः । न । वत्सम् । यवंसस्य । पिप्युषीं ।

सकृत् । सु । ते । सुमतिऽभिः । शतक्रतो इतिं शतऽक्रतो । सम् । पत्नींभिः । न । वृषंणः । नसीमहि ॥८

पुरा। संऽ वाधात्। अभि। आ। ववृत्स्व। नः । धेनुः । न। वत्सं। यवसस्य।पिप्युषी।

सकृत् । सु। ते । सुमतिऽभिः । शतक्रतो इति शतऽक्रतो। सं । पत्नीभिः । न । वृषणः । नसीमहि ॥६॥

हे इंद्र संबाधात् शत्रुजन्यात्संबाधात् पुरा नोऽस्मानभ्याववृत्स्व । आवर्तय । यथा संबाधोऽस्मान् न स्पृशति तथा कुवित्यर्थः । तत्र दृष्टांतः । धेनुर्न वत्सं । यथा यवसस्य घासेन पिप्युप्याप्यायिता धेनुर्वत्सं क्षुद्बा धात्परावर्तयति तद्वत् । हे शतक्रतो वयं

सुमतिभिस्त्वद्विषयैः शोभनैः स्तोत्रैः सकृत् सकृदपि सु नसीमहि । सुष्ठु व्याप्येमहि । तत्र दृष्टांतः । वृषणो न। सेक्तारो युवानो यथा पत्नीभिर्व्याप्यंते तद्वत् ॥

नू॒नं सा ते॒ प्रति॒ वरं॑ जरि॒त्रे दु॑ही॒यदिं॑न्द्र॒ दक्षिं॑णा म॒घोनीं॑ ।

शिक्षां॑ स्तो॒तृभ्यो॒ माति॑ ध॒ग्भगो॑ नो बृ॒हद्वं॑देम वि॒दथे॑ सु॒वीराः॑ ॥९

नू॒नम् । सा । ते॒ । प्रतिं॑ । वरं॑म् । ज॒रि॒त्रे । दु॒ही॒यत् । इ॒न्द्र॒ । दक्षिं॑णा । म॒घोनीं॑ ।

शिक्षं॑ । स्तो॒तृऽभ्यः॑ । मा । अति॑ । ध॒क् । भगः॑ । नः॒ । बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥९

नूनं । सा । ते । प्रति । वरं। जरित्रे। दुहीयत् । इंद्र। दक्षिणा। मघोनी ।

शिक्ष। स्तोतृऽभ्यः। मा। अति। धक्।भगः। नः। बृहत्।
वदेम।विदथे सुवीराः ॥९॥

हे इंद्र या दक्षिणा दक्षमुत्साहनं करोतीति दक्षिणा स्तोतृभ्यो देया ते त्वत्संबंधिनी मघोनी धनवत जरित्रे स्तोत्रे वरं श्रेष्ठमभिमतमर्थं नूनं प्रतिदुहीयत् । इदानीं प्रतिदोग्धि। संपादयतीत्यर्थः । तादृशीं दक्षिणां स्तोतृभ्योऽस्मभ्यं शिक्ष । प्रयच्छ । किंच भगो भजनीयस्त्वं माति धक् ॥ दहेर्दानार्थस्य लुङि मंत्रे घसेत्यादिना च्लेर्लुक् ॥ नोऽस्मानतिक्रम्यान्येभ्यो दक्षिणां मा दाः । प्रथममस्मभ्यं दत्त्वा पश्चादन्येभ्यो दीयतामित्यर्थः । यद्वा नोऽस्माकं कामान् मा धक् । मा धाक्षीः। अपेक्षितफलदानेन पूरयेत्यर्थः । सुवीराः शोभनपुत्रपौत्राः संतो वयं विदथे ऽस्मिन्यज्ञे बृहत् प्रभूतं स्तोत्रं वदेम । त्वामुद्दिश्य ब्रवाम । अत्र सा ते प्रतिदुग्धामिति प्रकृत्य

वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वेत्यंतं निरुक्तमनुसंधेयं । नि० १.७.॥॥६॥ ॥१॥

# ऋग्वेदः सूक्तं २.१७

ऋग्वेदः - मण्डल २
← सूक्तं २.१६ | सूक्तं २.१७ | सूक्तं २.१८ →

गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः

## दे. इन्द्रः। जगती, ८-९ त्रिष्टुप्

तदस्मै नव्यमङ्गिरस्वदर्चत शुष्मा यदस्य प्रत्नथोदीरते ।

विश्वा यद्गोत्रा सहसा परीवृता मदे सोमस्य दृंहितान्यैरयत् ॥१॥

स भूतु यो ह प्रथमाय धायस ओजो मिमानो महिमानमातिरत् ।

शूरो यो युत्सु तन्वं परिव्यत शीर्षणि द्यां महिना प्रत्यमुञ्चत ॥२॥

अधाकृणोः प्रथमं वीर्यं महद्यदस्याग्रे ब्रह्मणा शुष्ममैरयः ।

रथेष्ठेन हर्यश्वेन विच्युताः प्र जीरयः सिस्रते सध्र्यक्पृथक् ॥३॥

अधा यो विश्वा भुवनाभि मज्मनेशानकृत्प्रवया अभ्यवर्धत ।

आद्रोदसी ज्योतिषा वह्निरातनोत्सीव्यन्तमांसि दुधिता समव्ययत् ॥४॥

स प्राचीनान्पर्वतान्दृंहदोजसाधराचीनमकृणोदपामपः ।

अधारयत्पृथिवीं विश्वधायसमस्तभ्नान्मायया द्यामवस्रसः ॥५॥

सास्मा अरं बाहुभ्यां यं पिताकृणोद्विश्वस्मादा जनुषो वेदसस्परि ।

येना पृथिव्यां नि क्रिविं शयध्यै वज्रेण हत्व्यवृणक्तुविष्वणिः ॥६॥

अमाजूरिव पित्रोः सचा सती समानादा सदसस्त्वामिये भगम् ।

कृधि प्रकेतमुप मास्या भर दद्धि भागं तन्वो येन मामहः ॥७॥

भोजं त्वामिन्द्र वयं हुवेम ददिष्ट्वमिन्द्रापांसि वाजान् ।

अविड्ढीन्द्र चित्रया न ऊती कृधि वृषन्निन्द्र वस्यसो नः ॥८॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।

शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥९॥

## सायणभाष्यम्

' तदस्मै ' इति नवर्चं षष्ठं सूक्तं गार्त्समदमैन्द्रम् । अत्रानुक्रमणिका- तदस्मै द्वित्रिष्टुबन्तम् ' इति । अन्त्ये द्वे त्रिष्टुभौ शिष्टाः सप्त जगत्य । अतिरात्रे द्वितीये पर्यायेऽच्छावाकशस्त्रे ' तदस्मै ' इति सूक्तम् । ' अतिरात्रे पर्यायाणाम् ' इति खण्डे सूत्रितं- ' तदस्मै नव्यमस्य पिब यस्य जज्ञान इन्द्रेति याज्या ' (आश्व. श्रौ. ६. ४) इति ।।

तद॑स्मै॒ नव्य॑मङ्गिर॒स्वद॑र्चत॒ शुष्मा॒ यद॑स्य प्र॒त्नथो॒दीर॑ते ।

विश्वा॒ यद्गो॒त्रा सह॑सा॒ परी॑वृता॒ मदे॒ सोम॑स्य दृंहि॒तान्यैर॑यत् ॥१

तत् । अ॒स्मै॒ । नव्यं॑म् । अ॒ङ्गि॒र॒स्वत् । अ॒र्च॒त॒ । शुष्मा॑ः ।
यत् । अ॒स्य॒ । प्र॒त्नऽथा॑ । उ॒त्ऽईर॑ते ।

विश्वा॑ । यत् । गो॒त्रा । सह॑सा । परि॑ऽवृता । मदे॑ । सोम॑स्य
। दृं॒हि॒तानि॑ । ऐर॑यत् ॥१

तत् । अस्मै । नव्यम् । अङ्गिरस्वत् । अर्चत । शुष्माः ।
यत् । अस्य । प्रत्नऽथा । उत्ऽईरते ।

विश्वा । यत् । गोत्रा । सहसा । परिऽवृता । मदे । सोमस्य
। दृंहितानि । ऐरयत् ।। १ ।।

गृत्समदो ब्रूते । हे स्तोतारः नव्यं नवतरमन्येष्वदृष्टपूर्वं तत् तादृशं स्तोत्रम् अङ्गिरस्वत् अङ्गिरस इव ' तस्मै इन्द्राय अर्चत ब्रूत । यत् यस्माज्जातमात्रस्य अस्य इन्द्रस्य शुष्माः शत्रूणां शोषकाणि तेजांसि प्रत्नथा ।। ' प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ' इति इवार्थे थाल्प्रत्ययः ।।

प्रत्नानि पुरा- तनानीव उदीरते उद्गच्छन्ति ।। ' ईर गतौ ' । अनुदात्तेत् । ' तिङि चोदात्तवति ' इति गतेर्निघातः ।। यस्माच्च विश्वा सर्वान् गोत्रा मेघान् । गा उदकानि त्रायन्ते रक्षन्तीति गोत्रा मेघाः । परीवृता वृत्रेणाक्रान्तान् ।। सर्वत्र सुपो डादेशः ।। तान् दृंहितानि तेन दृढीकृतान् मेघान् सोमस्य 'मदे हर्षे संजाते सति 'सहसा बलेन ऐरयत् उदघाटयत् । मेघभेदनेनापः प्रेरयामासेत्यर्थः । यद्वा विश्वा सर्वाणि परीवृता वलासुरेण आक्रान्तानि दृंहितानि पर्वतबिले निरुद्धानि गोत्रा ।। ' इनित्रकट्यचश्च ' इति समूहार्थे त्रप्रत्ययः ।। गवां वृन्दानि सहसैरयत् ।। तस्माद्बिलान्निरगमयत् । तस्मादर्चतेति समन्वयः ।। ऐरयत् । ' ईर गतौ ' । ण्यन्तस्य लङि रूपम् । यद्वृत्तयोगादनिघातः ।।

स भूंतु यो हं प्रथमाय धायंस ओजो मिमांनो

महि॒मान॒मातिं॑रत् ।

शूरो॒ यो यु॒त्सु त॒न्वं॑ परि॒व्यतं॑ शी॒र्षणि॒ द्यां मं॑हि॒ना प्रत्यं॑मुञ्चत ॥२

सः । भू॒तु॒ । यः । ह॒ । प्र॒थ॒मायं॑ । धायं॑से । ओजः॑ । मिमां॑नः । म॒हि॒मानं॑म् । आ । अतिं॑रत् ।

शूरः॑ । यः । यु॒त्ऽसु । त॒न्वं॑म् । प॒रि॒ऽव्यतं॑ । शी॒र्षणिं॑ । द्याम् । म॒हि॒ना । प्रतिं॑ । अ॒मु॒ञ्च॒त॒ ॥२

सः । भूतु । यः । ह । प्रथमाय । धायसे । ओजः । मिमानः । महिमानम् । आ । अतिरत् ।

शूरः । यो । युत्सु । तन्वं । परिव्यत । शीर्षणि । द्याम् । महिना । प्रति । अमुञ्चत ।।२ ।।

सः इन्द्रः भूतु भवतु । वर्धतामित्यर्थः । 'यः इन्द्रः ओजः तेजो बलं मिमानः कुर्वाणः सन् प्रथमाय प्राथमिकाय धायसे ।। ' धेट् पाने ' ।। सोमपानाय महिमानम् आतिरत् अवर्धयत् ।। तिरतेर्व्यत्ययेन शः । यद्योगादनिघातः ।। शूरः शत्रूणां शातयिता यः इन्द्रः युत्सु युद्धेषु तन्वं स्वकीयं शरीरं परिव्यत वर्मणा परिवीतमकरोत् । स इन्द्रः महिना स्वकीयेन महिम्ना शीर्षणि स्वशिरसि द्यां प्रत्यमुञ्चत अधारयत् ।।

अधा॑कृणोः प्र॒थ॒मं वी॒र्यं॑ म॒हद्यद॒स्याग्रे॒ ब्रह्म॑णा॒ शुष्म॒मैर॑यः ।

र॒थे॒ष्ठेन॒ हर्य॑श्वेन॒ विच्यु॑ता॒ः प्र जी॒रयः॑ सिस्रते
स॒ध्र्य१॒क्पृथ॑क् ॥३

अध॑ । अ॒कृ॒णो॒ः । प्र॒थ॒मम् । वी॒र्य॑म् । म॒हत् । यत् । अ॒स्य॒ । अग्रे॑ । ब्रह्म॑णा । शुष्म॑म् । ऐर॑यः ।

र॒थे॒ऽस्थेन॑ । हरि॑ऽअश्वेन । वि॒ऽच्यु॑ताः । प्र । जी॒रयः॑ ।
सि॒स्र॒ते॒ । स॒ध्र्य॑क् । पृथ॑क् ॥३

अध । अकृणोः । प्रथमम् । वीर्यम् । महत् । यत् । अस्य । अग्रे । ब्रह्मणा । शुष्मम् । ऐरयः ।

रथेऽस्थेन । हरिऽअश्वेन । विऽच्युताः । प्र । जीरयः ।
सिस्रते । सध्र्यक् । पृथक् ॥३

अध अपि च हे इन्द्र त्वं प्रथमं मुख्यं तत् वीर्यं सामर्थ्यम् अकृणोः अकरोः । किं तत् । ब्रह्मणा स्तोत्रेण स्तुतिसाधनभूतेन वेदवाक्येन अस्य वीर्यस्य स्तोतुर्जनस्य अग्रे पुरतः यत् शुष्मं शत्रूणां शोषकं बलम् ऐरयः उदगमयः । जीरयः जरयितारः बाधका असुराः रथेष्ठेन रथस्थितेन हर्यश्वेन त्वया विच्युताः स्वस्थानाच्च्याविताः सन्तः सध्र्यक् सध्रीचीनाः परस्परं संगताः पृथक् भीत्या वियुक्ताः सन्तः प्र सिस्रते प्रकर्षेण धावन्ति ।। ' स्रु गतौ ' ।

जुहोत्यादिः । ' बहुलं छन्दसि ' इत्यभ्यासस्येत्वम् ।। सध्र्यगिति ' सहस्य सध्रिः ' इति सध्र्यादेशः । अद्रिसध्र्यो-रन्तोदात्तत्वेन .निपातनात् ' उदात्तस्वरितयोः - इति यणः स्वरितत्वम् ।।

अधा॒ यो विश्वा॒ भुव॑ना॒भि म॒ज्मने॑शान॒कृत्प्रव॑या अ॒भ्यव॑र्धत ।

आद्रोद॑सी॒ ज्योति॑षा॒ वह्नि॒रात॑नो॒त्सीव्य॒न्तमां॑सि॒ दुधि॑ता॒ सम॑व्ययत् ॥४

अध॑ । यः । विश्वा॑ । भुव॑ना । अ॒भि । म॒ज्मना॑ । ई॒शा॒न॒ऽकृत् । प्रऽव॑याः । अ॒भि । अव॑र्धत ।

आत् । रोद॑सी॒ इति॑ । ज्योति॑षा । वह्नि॑ः । आ । अ॒त॒नो॒त् । सीव्य॑न् । तमां॑सि । दुधि॑ता । सम् । अ॒व्य॒य॒त् ॥४

अध । यः । विश्वा । भुवना । अभि । मज्मना ।
ईशानऽकृत् । प्रऽवयाः । अभि । अवर्धत ।

आत् । रोदसी इति । ज्योतिषा । वह्निः । आ । अतनोत् ।
सीव्यन् । तमांसि । दुधिता । सम् । अव्ययत् ॥४

अध अपि च प्रवयाः प्रवृद्धान्नः पुरातनो वा यः इन्द्रः विश्वा भुवना सर्वान् लोकान् मज्मना बलेनाभिभूय ईशानकृत् आत्मानं सर्वस्याधिपतिं कुर्वन् । यद्वा अग्न्यादीन् देवान् तत्तल्लोका- धिपतीन् कुर्वन् अभ्यवर्धत सर्वतः प्रवृद्धोऽभवत् । आत् अनन्तरं वह्निः जगतां वोढा स इन्द्रः ज्योतिषा स्वीयेन तेजसा रोदसी द्यावापृथिव्यौ आतनोत् व्याप्नोत् । किंच तमांसि तमोरूपाणि रक्षांसि दुधिता दुःस्थितानि दुर्गतानि सीव्यन् विस्तारयन् समव्ययत् आवृणोत् । जगद्व्याप्य वर्तत इत्यर्थः ।।

स प्रा॒चीना॒न्पर्व॑तान्दृं॑ह॒दोज॑साधरा॒चीन॑मकृणोद॒पामपः॑ ।

अधा॑रयत्पृथि॒वीं वि॒श्वधा॑यस॒मस्त॑भ्नान्मा॒यया॒ द्याम॑व॒स्रसः॑ ॥५

सः । प्रा॒चीना॑न् । पर्व॑तान् । दृं॒ह॒त् । ओज॑सा । अ॒ध॒रा॒चीन॑म् । अ॒कृ॒णो॒त् । अ॒पाम् । अपः॑ ।

अधा॑रयत् । पृ॒थि॒वीम् । वि॒श्वऽधा॑यसम् । अस्त॑भ्नात् । मा॒यया॑ । द्याम् । अ॒व॒ऽस्रसः॑ ॥५

सः । प्राचीनान् । पर्वतान् । दृंहत् । ओजसा । अधराचीनम् । अकृणोत् । अपाम् । अपः ।

अधारयत् । पृथिवीम् । विश्वऽधायसम् । अस्तभ्नात् । मायया । द्याम् । अवऽस्रसः ॥५

सः इन्द्रः प्राचीनान् इतस्ततः प्रकर्षेणाञ्चतो गच्छतः सपक्षान् पर्वतान् ओजसा बलेन दृंहत् । पक्षच्छेदं कृत्वा भूमौ दृढीचकार । अचलानकरोदित्यर्थः । अपां मेघस्थितानामुदकानाम् अपः स्यन्दनलक्षणं कर्म अधराचीनम् । अधःप्रदेशमञ्चति गच्छतीत्यधराचीनम् । तादृशम् अकृणोत् । मेघभेदनं कृत्वापो भूमावपातयदित्यर्थः । किंच विश्वधायसं विश्वस्य धात्रीं पृथिवीं बलेन अधारयत् । मायया प्रज्ञयोपायेन द्यां द्युलोकम् अवस्रसः ।। ' स्रंसु गतौ ' । संपदादिलक्षणो भावे क्विप् ।। अवपतनात् अस्तभ्नात् ।। ।। १९ ।।

सास्मा॒ अर॑ बा॒हुभ्यां॒ यं पि॒ताकृ॑णो॒द्विश्व॑स्मा॒दा ज॒नुषो॒ वेद॑स॒स्परि॑ ।

येनां पृथि॒व्यां नि क्रिविं॑ श॒यध्यै॒ वज्रे॑ण

ह॒त्व्यवृ॑णक्तुवि॒ष्वणि॑ः ॥६

सः । अ॒स्मै॒ । अर॑म् । बा॒हुऽभ्या॑म् । यम् । पि॒ता ।

अकृ॑णोत् । विश्व॑स्मात् । आ । ज॒नुष॑ः । वेद॑सः । परि॑ ।

येन॑ । पृ॒थि॒व्याम् । नि । क्रिवि॑म् । श॒यध्यै॑ । वज्रे॑ण । ह॒त्वी

। अवृ॑णक् । तु॒वि॒ऽस्वनि॑ः ॥६

सः । अस्मै । अरम् । बाहुऽभ्याम् । यम् । पिता ।

अकृणोत् । विश्वस्मात् । आ । जनुषः । वेदसः । परि ।

येन । पृथिव्याम् । नि । क्रिविम् । शयध्यै । वज्रेण । हत्वी

। अवृणक् । तुविऽस्वनिः ॥६

सः तादृश इन्द्रः अस्मै जगते अरम् अलं पर्याप्तो बभूव ।

रक्षकत्वेन स्वामी बभूवेत्यर्थः । पिता सर्वस्य पालकः

प्रजापतिः विश्वस्मात् सर्वस्मात् जनुषः जनात् परि

ततोऽप्युत्कृष्टात वेदसः ज्ञानात् तद्विशिष्टं बाहुभ्यां स्वकीयाभ्यां बाहुभ्यां यम् आ अकृणोत् । तुविष्वणिः बहुकीर्तिः महास्वनो वा स इन्द्रः येन ज्ञानेन 'क्रिविम् एतन्नामानममुरं वज्रेण हत्वी ।। ' स्नात्व्यादयश्च ' इति त्वी।। हत्वा ताडयित्वा पृथिव्यां भूमौ शयध्यै शयनाय दीर्घनिद्रायै नि अवृणक् ।। वृणक्तिर्हिंसाकर्मा ।। न्यवधीत् ।।

अ॒मा॒जूरि॑व पि॒त्रोः सचा॑ स॒ती स॑मा॒नादा सद॑स॒स्त्वामि॑ये॒ भग॑म् ।

कृ॒धि प्र॑के॒तमुप॑ मा॒स्या भ॑र द॒द्धि भा॒गं त॒न्वो॒३॒॑ येन॑ मा॒महः॑ ॥७

अ॒मा॒जूःऽइ॑व । पि॒त्रोः । सचा॑ । स॒ती । स॒मा॒नात् । आ । सद॑सः । त्वाम् । इ॒ये॒ । भग॑म् ।

कृ॒धि । प्र॒ऽके॒तम् । उप॑ । मा॒सि॒ । आ । भ॒र॒ । द॒द्धि । भा॒गम् । त॒न्वः॑ । येन॑ । म॒महः॑ ॥७

अमाजूःऽइव । पित्रोः । सचा । सती । समानात् । आ । सदसः । त्वाम् । इये । भगम् ।

कृधि । प्रऽकेतम् । उप । मासि । आ । भर । दद्धि । भागम् । तन्वः । येन । ममहः ॥७

हे इन्द्र अमाजूः यावज्जीवं गृह एव जीर्यन्ती पित्रोः सचा मातापितृभ्यां सह भवन्ती तयोः शुश्रूषणपरा पतिमलभमाना सती दुहिता समानात् आत्मनः पित्रोश्च साधारणात् 'सदसः गृहात् ।। ' अधिकरणे चोपसंख्यानम् ' इति पञ्चमी ।। गृह उपस्थायैव यथा भागं याचति तथा स्तोताहं भगं भजनीयं धनं त्वाम् इये ।। ई गत्यादिषु । लिट्युत्तम इति व्यत्ययेनात्मनेपदम् । इयङादेशः ।। त्वां याचे । तत्र देयं धनं प्रकेतं प्रकर्षेण ज्ञातव्यं विश्वजनीयं

कृधि कुरु । तत्र उप मासि एतावदिदं धनमिति कुरु । आ भर तत्र धनं संपादय । भागं भजनीयं धनं तन्वः शरीराय सह्यमिति यावत् दद्धि देहि । येन धनेन ममहः स्तोतॄनिमान् पूजयसि ।।

भो॒जं त्वामिं॑न्द्र व॒यं हु॑वेम द॒दिष्ट्वमि॒न्द्रापां॑सि॒ वाजा॑न् ।

अ॒वि॒ड्ढीं॑न्द्र चि॒त्रया॑ न ऊ॒ती कृ॒धि वृं॑षन्निन्द्र॒ वस्यं॑सो नः ॥८

भो॒जम् । त्वाम् । इ॒न्द्र॒ । व॒यम् । हु॒वे॒म॒ । द॒दिः । त्वम् । इ॒न्द्र॒ । अपां॑सि । वाजा॑न् ।

अ॒वि॒ड्ढि । इ॒न्द्र॒ । चि॒त्रया॑ । न॒ः । ऊ॒ती । कृ॒धि । वृ॒ष॒न् । इ॒न्द्र॒ । वस्यं॑सः । न॒ः ॥८

भोजम् । त्वाम् । इन्द्र । वयम् । हुवेम । ददिः । त्वम् । इन्द्र । अपांसि । वाजान् ।

अविड्ढि । इन्द्र । चित्रया । नः । ऊती । कृधि । वृषन् । इन्द्र । वस्यसः । नः ॥८

हे इन्द्र भोजं पालयितारं भोजयितारं वा त्वां वयं हुवेम ।। ह्वयतेर्लिङि ' बहुलं छन्दसि इति संप्रसारणम् ।। हे इन्द्र त्वम् अपांसि कर्माणि वाजान् अन्नानि ददिः ।। 'दाण् दाने ' ' आदृगमहनजनः०' इति किप्रत्ययः । लिड्वद्भावादभ्यासादिकार्यम्। 'न लोकाव्ययनिष्ठा०' इति षष्ठी- प्रतिषेधः ।। दाता खलु । हे इन्द्र चित्रया नानाप्रकारया ऊती ऊत्या पालनेन नः अस्मान् अविड्ढि रक्ष ।' वृषन् कामानां वर्षक हे इन्द्र नः अस्मान् वस्यसः अतिशयेन वसुमतः कृधि कुरु ।।

नू॒नं सा ते॒ प्रति॒ वरं॑ जरि॒त्रे दु॑ही॒यदि॑न्द्र॒ दक्षि॑णा म॒घोनी॑ ।

शिक्षा॑ स्तो॒तृभ्यो॒ माति॑ ध॒ग्भगो॑ नो बृ॒हद्व॑देम वि॒दथे॑ सु॒वीरा॑ः ॥९

नू॒नम् । सा । ते॒ । प्रति॑ । वर॑म् । ज॒रि॒त्रे । दु॒ही॒यत् । इ॒न्द्र॒ । दक्षि॑णा । म॒घोनी॑ ।

शिक्ष॑ । स्तो॒तृऽभ्य॑ः । मा । अति॑ । ध॒क् । भग॑ः । न॒ः । बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीरा॑ः ॥९

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी ।

शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥९

हे इंद्र या दक्षिणा दक्षमुत्साहनं करोतीति दक्षिणा स्तोतृभ्यो देया ते त्वत्संबंधिनी मघोनी धनवत जरित्रे स्तोत्रे वरं श्रेष्ठमभिमतमर्थं नूनं प्रतिदुहीयत् । इदानीं

प्रतिदोग्धि। संपादयतीत्यर्थः । तादृशीं दक्षिणां स्तोतृभ्योऽस्मभ्यं शिक्ष । प्रयच्छ । किंच भगो भजनीयस्त्वं माति धक् ॥ दहेर्दानार्थस्य लुङि मंत्रे घसेत्यादिना च्लेर्लुक् ॥ नोऽस्मानतिक्रम्यान्येभ्यो दक्षिणां मा दाः । प्रथममस्मभ्यं दत्त्वा पश्चादन्येभ्यो दीयतामित्यर्थः । यद्वा नोऽस्माकं कामान् मा धक् । मा धाक्षीः। अपेक्षितफलदानेन पूरयेत्यर्थः । सुवीराः शोभनपुत्रपौत्राः संतो वयं विदथे ऽस्मिन्यज्ञे बृहत् प्रभूतं स्तोत्रं वदेम । त्वामुद्दिश्य ब्रवाम । अत्र सा ते प्रतिदुग्धामिति प्रकृत्य वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वेत्यंतं निरुक्तमनुसंधेयं । नि० १.७.॥॥६॥ ॥१॥

# ऋग्वेदः सूक्तं २.१८



## दे. इन्द्रः। त्रिष्टुप्।

प्राता रथो नवो योजि सस्निश्चतुर्युगस्त्रिकशः सप्तरश्मिः ।

दशारित्रो मनुष्यः स्वर्षाः स इष्टिभिर्मतिभी रंह्यो भूत् ॥१॥

सास्मा अरं प्रथमं स द्वितीयमुतो तृतीयं मनुषः स होता ।

अन्यस्या गर्भमन्य ऊ जनन्त सो अन्येभिः सचते जेन्यो वृषा ॥२॥

हरी नु कं रथ इन्द्रस्य योजमायै सूक्तेन वचसा नवेन ।

मो षु त्वामत्र बहवो हि विप्रा नि रीरमन्यजमानासो अन्ये ॥३॥

आ द्वाभ्यां हरिभ्यामिन्द्र याह्या चतुर्भिरा षड्भिर्हूयमानः ।

आष्टाभिर्दशभिः सोमपेयमयं सुतः सुमख मा मृधस्कः ॥४॥

आ विंशत्या त्रिंशता याह्यर्वाङा चत्वारिंशता हरिभिर्युजानः ।

आ पञ्चाशता सुरथेभिरिन्द्रा षष्ट्या सप्तत्या सोमपेयम् ॥५॥

आशीत्या नवत्या याह्यर्वाङा शतेन हरिभिरुह्यमानः ।

अयं हि ते शुनहोत्रेषु सोम इन्द्र त्वाया परिषिक्तो मदाय ॥६॥

मम ब्रह्मेन्द्र याह्यच्छा विश्वा हरी धुरि धिष्वा रथस्य ।

पुरुत्रा हि विहव्यो बभूथास्मिञ्छूर सवने मादयस्व ॥७॥

न म इन्द्रेण सख्यं वि योषदस्मभ्यमस्य दक्षिणा दुहीत ।

उप ज्येष्ठे वरूथे गभस्तौ प्रायेप्राये जिगीवांसः स्याम ॥८॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।

शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥९॥

**सायणभाष्यम्**

' प्राता रथः' इति नवर्चं सप्तमं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम् । ' प्रातः ' इत्यनुक्रान्तम् । लैङ्गिको विनियोगः।।

प्रा॒ता रथो॒ नवो॑ योजि॒ सस्नि॒श्चतु॑र्युगस्त्रिक॒शः स॒प्तर॑श्मिः ।

दशा॑रित्रो मनु॒ष्यः॑ स्व॒र्षाः स इ॒ष्टिभि॑र्म॒तिभी॒ रंह्यो॑ भूत् ॥१

प्रा॒तरिति॑ । रथः॑ । नवः॑ । यो॒जि॒ । सस्निः॑ । चतुः॑ऽयुगः । त्रिऽक॒शः । स॒प्तऽर॑श्मिः ।

दश॑ऽअरित्रः । म॒नु॒ष्यः॑ । स्व॒ःऽसाः । सः । इ॒ष्टिऽभिः॑ । म॒तिऽभिः॑ । रंह्यः॑ । भू॒त् ॥१

प्रातरितिं । रथः । नवः । योजि । सस्निः । चतुःऽयुगः । त्रिऽकशः । सप्तऽरश्मिः ।

दशऽअरित्रः । मनुष्यः । स्वःऽसाः । सः । इष्टिभिः । मतिऽभिः । रंह्यः । भूत् ॥ १ ॥

रथः रंहणाद्रथो यज्ञः । स च नवः । नूयते स्तूयतेऽत्रेति नवः स्तुतिमान् । सस्निः ॥ 'स्ना शौचे'। 'आदृगमहन" इति किन्प्रत्ययः । शुद्धः । एवंविधो यज्ञः प्रातः प्रातःकाले योजि अयोज्यस्माभिः । चतुर्युगः । युज्यन्त इति युगानि ग्रावाणः । चत्वारि युगानि यस्य स तथोक्तः । अध्वर्य्वाद्यृत्विगभिप्रायं वा । त्रिकशः । तिस्रः कशा वाचो मन्द्रमध्यमोत्कृष्टरूपो यस्य स तथोक्तः । सवनत्रयाभिप्रायं वा । सप्तरश्मिः । अश्नुवते व्याप्नुवन्ति कर्माणीति रश्मयश्छन्दांसि । सप्तसंख्याकानि गायत्र्यादीनि छन्दांसि यस्य स तथोक्तः । दशारित्रः ।

अरिभ्यः पापेभ्यस्त्रायन्त इत्यरित्रा ग्रहाः । दशसंख्याका ग्रहा यस्य स तादृशः । चमसाध्वर्य्वभिप्रायं वा। मनुष्यः मनुष्याणां हितः । स्वर्षाः स्वर्गस्य दाता । सः एवंविधो यज्ञः इष्टिभिः प्रायणीयातिथ्यादिभिः मतिभिः मननीयैः स्तोत्रैः रंह्यः शब्दनीयः भूत् अभूत् । यद्वा नवोऽभिनवः। सस्निः॥ सनोतेर्द्विवचनादि ॥ कामानां दाता ।। रथः । रमन्तेऽस्मिन्निति रथः स्यन्दनः प्रातःसवने च सोमपानार्थं योजि अश्वैरयोजि। कीदृशः । चतुर्युगः । त्रिकशः । तिस्रः कशा यस्य स तथोक्तः । सप्तरश्मिः सप्तरज्जुः । दशारित्रो दशचक्रः मनुष्यो मनुष्यहितः स्वर्षाः स्वर्गस्य संगमयिता इन्द्ररथः इष्टिभिर्यागैर्मतिभिः स्तोत्रैश्च प्राप्तव्यो भवति ॥

सास्मा॒ अरं॑ प्रथ॒मं स द्वि॒तीयं॑मु॒तो तृ॒तीयं॒ मनुं॑ष॒ः स होता॑ ।

अ॒न्यस्या॒ गर्भ॑म॒न्य ऊं जनन्त॒ सो अ॒न्येभि॑ः सचते॒ जेन्यो॒ वृषा॑ ॥२

सः । अ॒स्मै॒ । अर॑म् । प्र॒थ॒मम् । सः । द्वि॒तीय॑म् । उ॒तो इति॑ । तृ॒तीय॑म् । मनु॑षः । सः । होता॑ ।

अ॒न्यस्या॑ः । गर्भ॑म् । अ॒न्ये । ऊ॒ं इति॑ । ज॒न॒न्त॒ । सः । अ॒न्येभि॑ः । स॒च॒ते॒ । जेन्य॑ः । वृषा॑ ॥२

सः । अस्मै । अरम् । प्रथमम्। सः । द्वितीयम्। उतो इति । तृतीयम् । मनुषः । सः । होता।

अन्यस्याः। गर्भम् । अन्ये। ऊँ इति। जनन्त । सः । अन्येभिः । सचते। जेन्यः । वृषा ॥२॥

सः यज्ञः सोमो वा अस्मै इन्द्राय प्रथमं प्रातःसवने अरं पर्याप्तोऽभूत् । सः च द्वितीयं माध्यंदिने सवने पर्याप्तोऽभूत् । उतो अपि च सः तृतीयं तृतीये सवने

पर्याप्तोऽभूत् । सर्वत्र कालाध्वनोः' इति द्वितीया । सः यज्ञः सोमो वा मनुषः मनुष्यस्य होता शुभानां वोढा भवति । किंच अन्ये ऋत्विजः अन्यस्याः पृथिव्या वेदात्मिकायाः वाचो वा गर्भं सन्तं सोमं यज्ञं वा जनन्त अजनयन्त । उ प्रसिद्ध्यर्थः । वृषा अभिमतफलवर्धकः जेन्यः जयसमर्थः सः। यज्ञः सोमो वा अन्येभिः अन्यैः इन्द्रादिभिर्देवैः सचते संगच्छते ।। ‘सच समवाये' । अनुदात्तेत् ॥

हरी॒ नु कं॒ रथ॒ इन्द्र॑स्य योजमा॒यै सू॒क्तेन॒ वच॑सा॒ नवे॑न ।

मो षु त्वामत्र॑ ब॒हवो॒ हि विप्रा॒ नि री॑रम॒न्यज॑मानासो अ॒न्ये ॥३

हरी॒ इति॑ । नु । क॒म् । रथे॑ । इन्द्र॑स्य । यो॒ज॒म् । आ॒ऽयै । सु॒ऽउ॒क्तेन॑ । वच॑सा । नवे॑न ।

मो इतिं । सु । त्वाम् । अत्रं । बुहवः । हि । विप्राः । नि । रीरमन् । यजंमानासः । अन्ये ॥३

हरी इति । नु । कम्। रथे । इन्द्रस्य । योजम् । आऽयै । सुऽउक्तेन । वचसा । नवेन ।

मो इति । सु। त्वाम् । अत्र । बहवः । हि । विप्राः । नि । रीरमन् । यजमानासः । अन्ये ॥३॥

इन्द्रस्य संबन्धिनि रथे हरी एतन्नामकावश्वौ नु क्षिप्रं कं सुखेन 'आयै गमनाय ' नवेन अन्यैरकृतपूर्वेण वचसा वेदात्मकेन सूक्तेन साधनेन योजं युनज्मि ॥“ युजिर् योगे । लुङि ‘इरितो वा' इति च्लेरङादेशः । अत्र अस्मिन् यज्ञे ‘बहवः विप्राः मेधाविनः स्तोतारो भवन्ति हि । तथापि अन्ये मद्व्यतिरिक्ताः ‘यजमानासः यजमानाः त्वां सु सुष्ठु मो नि ‘रीरमन् नितरां मा रमयन्तु । अतोऽस्मदीयं यज्ञमागत्य सोमं पिबेति भावः । रीरमन् । रमतेर्ण्यन्तस्य

लुङि चङि सन्वद्भावादभ्यासस्येत्वदीर्घौ । वाक्यभेदादत्र हियोगाभावेन निघातः ।

आ द्वाभ्या॒ं हरि॑भ्यामिन्द्र या॒ह्या च॒तुर्भि॒रा ष॒ड्भिर्हू॒यमा॑नः ।

आष्टा॒भिर्द॒शभिः॑ सोम॒पेय॑म॒यं सु॒तः सु॑मख॒ मा मृध॑स्कः ॥४

आ । द्वाभ्या॑म् । हरि॑ऽभ्याम् । इ॒न्द्र॒ । या॒हि॒ । आ ।
च॒तुःऽभिः॑ । आ । ष॒ट्ऽभिः । हू॒यमा॑नः ।

आ । अ॒ष्टा॒भिः । द॒शऽभिः॑ । सो॒म॒ऽपेय॑म् । अ॒यम् । सु॒तः ।
सु॒ऽम॒ख॒ । मा । मृधः॑ । क॒रिति॑ कः ॥४

आ। द्वाभ्याम् । हरिऽभ्याम् । इन्द्र । याहि । आ।
चतुःऽभिः । आ । षट्ऽभिः । हूयमानः ।

आ। अष्टाभिः । दशऽभिः । सोमऽपेयम् । अयम् । सुतः । सुऽमख । मा। मृधः । करिति कः।।४।।

हे इन्द्र होतृभिः हूयमानः त्वं द्वाभ्यां हरिभ्याम् अश्वाभ्यामिमं यज्ञं प्रति सोमपानार्थम् आ याहि । चतुर्भिः हरिभिः आ याहि । तथा षड्भिः आगच्छ सोमपेयम् ॥'पा पाने' । कर्मणि अचो यत् । 'ईद्यति' इतीत्वम् । पातव्यं सोमं प्रति अष्टाभिः अश्वैः 'आ याहि ॥ 'अष्टनो दीर्घात् (पा. सू. ६.. १. १७२) इति विभक्तेरुदात्तत्वम् ॥ दशभिः हरिभिरागच्छ । सुमख सुयज्ञ सुधन वा हे इन्द्र अयं सोमस्त्वदर्थमभिषुतः । अतो यज्ञस्य मृधः हिंसाः मा 'कः मा कार्षीः । करोतेर्लुङि मन्त्रे घस इत्यादिना च्लेर्लुक्। गुणे कृते हल्ङ्यादिना सिपो लोपः । यद्यपीन्द्रस्य द्वावेव हरी तथापि तयोर्विभूतिभेदान्नानात्वम् । अतोऽश्वबहुत्वमविरुद्धम् ॥

आ विं॑श॒त्या त्रि॒ंशता॑ याह्य॒र्वाङा च॑त्वारि॒ंशता॒
हरिं॑भिर्युजा॒नः ।

आ पं॑ञ्चा॒शता॑ सु॒रथे॑भिरि॒न्द्रा ष॒ष्ट्या सं॑प्त॒त्या सो॑म॒पेयं॑म्
॥५

आ । वि॒ंश॒त्या । त्रि॒ंशता॑ । या॒हि॒ । अ॒र्वाङ् । आ ।
च॒त्वा॒रि॒ंशता॑ । हरि॑ऽभिः । यु॒जा॒नः ।

आ । प॒ञ्चा॒शता॑ । सु॒ऽरथे॑भिः । इ॒न्द्र॒ । आ । ष॒ष्ट्या ।
स॒प्त॒त्या । सो॒म॒ऽपेय॑म् ॥५

आ। विंशत्या । त्रिंशता । याहि । अर्वाङ। आ।
चत्वारिंशता । हरिऽभिः । युजानः ।

आ। पञ्चाशता । सुऽरथेभिः । इन्द्र । आ । षष्ट्या ।
सप्तत्या । सोमऽपेयम् ॥ ५ ॥

हे इन्द्र सोमपेयं पातव्यं सोमं प्रति अर्वाङ् अस्मदभिमुखः सन् विंशत्या विंशतिसंख्याकैरश्वैः आ याहि । त्रिंशता त्रिंशत्संख्याकैर्हरिभिरागच्छ । चत्वारिंशता चत्वारिंशत्संख्याकैः हरिभिः युजानः युज्यमानस्त्वं सोमपानं प्रति आ याहि । सुरथेभिः सुरंहणैः सुगमनैः पञ्चाशता हरिभिः आ याहि । तथा षष्ट्या षष्टिसंख्याकैर्हरिभिः सप्तत्या एतत्संख्याकैर्हरिभिः सोमपानं प्रत्यागच्छ ॥ ॥ २१ ॥

आशी॒त्या न॑व॒त्या या॑ह्य॒र्वाङा श॒तेन॒ हरि॑भिरु॒ह्यमा॑नः ।

अ॒यं हि ते॑ शु॒नहो॑त्रेषु॒ सोम॒ इन्द्र॑ त्वा॒या परि॑षिक्तो॒ मदा॑य ॥
६

आ । अ॒शी॒त्या । न॒व॒त्या । या॒हि॒ । अ॒र्वाङ् । आ । श॒तेन॑ । हरि॑ऽभिः । उ॒ह्यमा॑नः ।

अ॒यम् । हि । ते॒ । शु॒नऽहो॑त्रेषु । सोम॑ः । इन्द्र॑ । त्वा॒ऽया ।
परि॑ऽसिक्तः । मदा॑य ॥६

आ। अशीत्या । नवत्या । याहि । अर्वाङ् । आ। शतेन ।
हरिऽभिः । उह्यमानः ।

अयम् । हि । ते । शुनऽहोत्रेषु । सोमः । इन्द्र । त्वाऽया।
परिऽसिक्तः । मदाय ॥ ६ ॥

अशीत्या अशीतिसंख्याकैरश्वैः सोमपानार्थम् अर्वाङ्
अस्मदभिमुखः सन् आ याहि । नवत्या
एतत्संख्याकैरश्वैरागच्छ । शतेन शतसंख्याकैः
हरिभिरुह्यमानः धार्यमाणस्त्वम् आ याहि । हे इन्द्र हि
यस्मात् ते मदाय हर्षाय शुनहोत्रेषु । सुखेन हूयते सोमो
यैरिति शुनहोत्राः पात्रविशेषाः । तेषु अयं सोमः त्वाया
त्वत्कामनया परिषिक्तः ॥

मम॒ ब्रह्मे॑न्द्र या॒ह्यच्छा॒ विश्वा॒ हरी॑ धु॒रि धि॑ष्वा॒ रथ॑स्य ।

पु॒रु॒त्रा हि वि॒हव्यो॑ ब॒भूथा॒स्मिञ्छू॑र॒ सव॑ने मादयस्व ॥७

मम॑ । ब्रह्म॑ । इ॒न्द्र॒ । या॒हि॒ । अच्छ॑ । विश्वा॑ । हरी॒ इति॑ ।
धु॒रि । धि॒ष्व॒ । रथ॑स्य ।

पु॒रु॒ऽत्रा । हि । वि॒ऽहव्यः॑ । ब॒भूथ॑ । अ॒स्मिन् । शू॒र॒ । सव॑ने
। मा॒द॒य॒स्व॒ ॥७

मम । ब्रह्म । इन्द्र । याहि। अच्छ। विश्वा । हरी इति । धुरि
। धिष्व । रथस्य ।

पुरुऽत्रा । हि । विऽहव्यः। बभूथ । अस्मिन् । शूर । सवने
। मादयस्व ॥ ७ ॥

हे इन्द्र मम ब्रह्म अस्मदीयामेव स्तुतिम् अच्छ अभिलक्ष्य याहि । विश्वा व्याप्तौ हरी रथस्य धुरि युगप्रान्ते धिष्व संयोजय । पुरुत्रा पुरुभिर्बहुभिर्यजमानैस्त्वं विहव्यः विविधं ह्वातव्यः बभूथ बभूविथ ॥ बभूथाततन्थ जगृभ्म ववर्थ' इति निपातनादिडभावः ॥ हे शूर अस्मिन् सवने यज्ञे मादयस्व सोमपानेन हृष्टो भव ॥

न मे इन्द्रेण सख्यं वि योषदस्मभ्यमस्य दक्षिणा दुहीत ।

उप ज्येष्ठे वरूथे गभस्तौ प्रायेप्राये जिगीवांसः स्याम ॥८

न । मे । इन्द्रेण । सख्यम् । वि । योषत् । अस्मभ्यम् । अस्य । दक्षिणा । दुहीत ।

उप । ज्येष्ठे । वरूथे । गभस्तौ । प्रायेऽप्राये । जिगीवांसः । स्याम ॥८

न । मे । इन्द्रेण । सख्यम् । वि। योषत् । अस्मभ्यम् । अस्य । दक्षिणा । दुहीत ।

उप । ज्येष्ठे । वरूथे। गभस्तौ । प्रायेऽप्राये । जिगीवांसः । स्याम ॥ ८॥

इन्द्रेण सह मे मम सख्यं यष्टृयष्टव्यलक्षणं सख्यं 'न वि योषन् कदाचिदपि न वियुज्यताम् ।। यौतेर्लेटि ' सिब्बहुलम् ' इति सिप् । अडागमः ।। अस्य इन्द्रस्य दक्षिणा इन्द्रकर्तृकं दानम् अस्मभ्यं दुहीत अभिमतफलं दुग्धाम् ।। दुहेर्लिङि रूपम् । ज्येष्ठे अतिशयेन प्रशस्ये वरूथे आपदां वारके वरणीये वा गभस्तौ बाहौ उप समीपे वर्तिनः स्याम । इन्द्रस्य हस्तस्पर्श- योग्या भवेमेत्यर्थः । किंच प्रायेप्राये सोमपानार्थमिन्द्रस्य यज्ञशालायां प्रवेशेप्रवेशे जिगीवांसः शत्रूणां जेतारो भवेम । यद्वा

प्रायेप्राये । प्रकर्षेणेयते गम्यते योद्धृभिरिति प्रायं युद्धम् । तस्मिन् युद्धे जिगी- वांसः शत्रून् जितवन्तो भवेम ।।

नू॒नं सा ते॒ प्रति॒ वरं॑ जरि॒त्रे दु॑ही॒यदि॑न्द्र॒ दक्षि॑णा म॒घोनी॑ ।

शिक्षा॑ स्तो॒तृभ्यो॒ माति॑ ध॒ग्भगो॑ नो बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥९

नू॒नम् । सा । ते॒ । प्रति॑ । वर॑म् । ज॒रि॒त्रे । दु॒ही॒यत् । इ॒न्द्र॒ । दक्षि॑णा । म॒घोनी॑ ।

शिक्ष॑ । स्तो॒तृऽभ्यः॑ । मा । अति॑ । ध॒क् । भगः॑ । न॒ः । बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥९

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी ।

शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः ।
बृऽहत् । वदेम । विदथे । सुऽवीराः ।।९।

हे इंद्र या दक्षिणा दक्षमुत्साहनं करोतीति दक्षिणा स्तोतृभ्यो देया ते त्वत्संबंधिनी मघोनी धनवत जरित्रे स्तोत्रे वरं श्रेष्ठमभिमतमर्थं नूनं प्रतिदुहीयत् । इदानीं प्रतिदोग्धि। संपादयतीत्यर्थः । तादृशीं दक्षिणां स्तोतृभ्योऽस्मभ्यं शिक्ष । प्रयच्छ । किंच भगो भजनीयस्त्वं माति धक् ॥ दहेर्दानार्थस्य लुङि मंत्रे घसेत्यादिना च्लेर्लुक् ॥ नोऽस्मानतिक्रम्यान्येभ्यो दक्षिणां मा दाः । प्रथममस्मभ्यं दत्त्वा पश्चादन्येभ्यो दीयतामित्यर्थः । यद्वा नोऽस्माकं कामान् मा धक् । मा धाक्षीः। अपेक्षितफलदानेन पूरयेत्यर्थः । सुवीराः शोभनपुत्रपौत्राः संतो वयं विदथे ऽस्मिन्यज्ञे बृहत् प्रभूतं स्तोत्रं वदेम । त्वामुद्दिश्य ब्रवाम । अत्र सा ते प्रतिदुग्धामिति प्रकृत्य

वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वेत्यंतं निरुक्तमनुसंधेयं । नि० १.७.॥॥६॥ ॥१॥

# ऋग्वेदः सूक्तं २.१९

ऋग्वेदः - मण्डल २
← सूक्तं २.१८
सूक्तं २.१९
गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः
सूक्तं २.२० →

## दे. इन्द्रः। त्रिष्टुप्

अपाय्यस्यान्धसो मदाय मनीषिणः सुवानस्य प्रयसः ।

यस्मिन्निन्द्रः प्रदिवि वावृधान ओको दधे ब्रह्मण्यन्तश्च नरः ॥१॥

अस्य मन्दानो मध्वो वज्रहस्तोऽहिमिन्द्रो अर्णोवृतं वि वृश्चत् ।

प्र यद्वयो न स्वसराण्यच्छा प्रयांसि च नदीनां चक्रमन्त ॥२॥

स माहिन इन्द्रो अर्णो अपां प्रैरयदहिहाच्छा समुद्रम् ।

अजनयत्सूर्यं विदद्गा अक्तुनाह्नां वयुनानि साधत् ॥३॥

सो अप्रतीनि मनवे पुरूणीन्द्रो दाशद्दाशुषे हन्ति वृत्रम् ।

सद्यो यो नृभ्यो अतसाय्यो भूत्पस्पृधानेभ्यः सूर्यस्य सातौ ॥४॥

स सुन्वत इन्द्रः सूर्यमा देवो रिणङ्मर्त्याय स्तवान् ।

आ यद्रयिं गुहदवद्यमस्मै भरदंशं नैतशो दशस्यन् ॥५॥

स रन्धयत्सदिवः सारथये शुष्णमशुषं कुयवं कुत्साय ।

दिवोदासाय नवतिं च नवेन्द्रः पुरो व्यैरच्छम्बरस्य ॥६॥

एवा त इन्द्रोचथमहेम श्रवस्या न त्मना वाजयन्तः ।

अश्याम तत्साप्तमाशुषाणा ननमो वधरदेवस्य पीयोः ॥७॥

एवा ते गृत्समदाः शूर मन्मावस्यवो न वयुनानि तक्षुः ।

ब्रह्मण्यन्त इन्द्र ते नवीय इषमूर्जं सुक्षितिं सुम्नमश्युः ॥८॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।

शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥९॥

## सायणभाष्यम्

' अपाय्यस्य ' इति नवर्चमष्टमं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम् । ' अपायि ' इत्यनुक्रान्तम् । लैङ्गिकः सूक्तविनियोगः । द्वितीये पर्याये होतृशस्त्रयाज्या अपायीत्येषा ( आश्व श्रौ. ६.४) ।।

अपा॑य्य॒स्यान्ध॑सो॒ मदा॑य॒ मनी॑षिणः सुवा॒नस्य॒ प्रय॑सः ।

यस्मि॒न्निन्द्रः॑ प्र॒दिवि॑ वावृधा॒न ओको॑ द॒धे ब्र॑ह्म॒ण्यन्त॑श्च॒ नरः॑ ॥

अपा॑यि । अ॒स्य । अन्ध॑सः । मदा॑य । मनी॑षिणः । सु॒वा॒नस्य॑ । प्रय॑सः ।

यस्मि॑न् । इन्द्रः॑ । प्र॒ऽदिवि॑ । व॒वृ॒धा॒नः । ओकः॑ । द॒धे ।
ब्र॒ह्म॒ण्यन्तः॑ । च॒ । नरः॑ ॥

अपायि । अस्य । अंधसः । मदाय । मनीषिणः ।
सुवानस्य । प्रयसः ।

यस्मिन्। इंद्रः। प्रऽदिवि। ववृधानः। ओकः । दधे।
ब्रह्मण्यंतः । च। नरः ॥१॥

सुवानस्य सोमाभिषवं कुर्वाणस्य मनीषिणः प्राज्ञस्य यजमानस्य संबंधिनः प्रयसः ॥ प्रीङ् तर्पणे । असुन् ॥ प्रीतिकरस्यास्य सोमलक्षणस्यांधसो मदायापायि । एतदन्नमिंद्रेण पीतमित्यर्थः । यद्वा अपायीति पतिर्व्यत्ययो बहुलमिति चिण् कर्तरि भवति । छंदसि लुङ्लङ्लिट् इति लोडर्थे लुङ्॥ प्रीतिकरस्यांधसो मदायापायि ॥ शेषविवक्षया कर्मणि षष्ठी । इंद्रः सोमं पिबतु । प्रदिवि पुराणे यस्मिन्सोमलक्षणेंऽ धसि वावृधानो वर्धमान इंद्र

ओको दधे। सेव्यतया निवासं चकार । किंच ब्रह्मण्यंत इंद्राय स्तोत्रमिच्छंतो नरः कर्मणां नेतार ऋत्विजो यस्मिन्निवासं दधिरे । तदेतदपायीति पूर्वेणान्वयः ।।

अ॒स्य मं॑न्दा॒नो मध्वो॒ वज्रं॑ह॒स्तोऽहि॒मिन्द्रो॑ अर्णो॒वृतं॒ वि वृं॑श्चत् ।

प्र यद्वयो॒ न स्वसं॑रा॒ण्यच्छा॒ प्रयां॑सि च न॒दीनां॒ चक्रं॑मन्त ॥

अ॒स्य । म॒न्दा॒नः । मध्वः॑ । वज्रं॑ऽहस्तः । अहि॑म् । इन्द्रः॑ । अ॒र्णः॒ऽवृतं॑म् । वि । वृ॒श्च॒त् ।

प्र । यत् । वयः॑ । न । स्वसं॑राणि । अच्छं॑ । प्रयां॑सि । च॒ । न॒दीनां॑म् । चक्रं॑मन्त ॥

अस्य । मंदानः । मध्वः । वज्रऽहस्तः । अहिं। इंद्रः । अर्णःऽवृतं । वि। वृश्चत् ।

प्र । यत् । वयः । न । स्वसराणि । अच्छ। प्रयांसि। च।
नदीनां । चक्रमंत ॥२॥

अस्य मध्वः । तृतीयार्थे षष्ठी । अनेन मदकरेण सोमेन मंदानो हृष्यन वज्रहस्तो वज्रयुक्तो हस्तो यस्य स इंद्रोऽर्णोवृतमुदकस्यावरकमुदकेनावृतं वाहिं वृत्रं मेघं वा विवृश्चत् । विशेषेणाच्छिनत् ॥ ओव्रश्चू छेदने । तौदादिकः । लङि ग्रहिज्यादिना संप्रसारणं । यद्यदाहिभेदने जाते नदीनां प्रयांसि प्रीणयितॄणि जलान्यच्छ समुद्रमभिलक्ष्य प्रचक्रमंत । गंतुमुपाक्रमन् । तत्र दृष्टांतः। वयो न । यथा पक्षिणः स्वसराणि । सुष्ठर्यंते प्राप्यंत इति स्वराणि स्वसराणि कुलायाः । तानभिलक्ष्य गच्छंति तद्वत् ॥

स माहिंन॒ इन्द्रो॒ अर्णो॑ अ॒पां प्रैरंयदहि॒हाच्छां समु॒द्रम् ।

अजंनय॒त्सूर्यं॑ वि॒दद्गा अ॒क्तुनाह्नां॑ व॒युनांनि साधत् ॥३

सः । माहिंनः । इन्द्रः । अर्णः । अपाम् । प्र । ऐरयत् ।
अहिऽहा । अच्छं । समुद्रम् ।

अजंनयत् । सूर्यंम् । विदत् । गाः । अक्तुनां । अह्नांम् ।
वयुनांनि । साधत् ॥३

सः । माहिनः । इंद्रः । अर्णः । अपां। प्र। ऐरयत् ।
अहिऽहा। अच्छ। समुद्रं ।

अजनयत् । सूर्यं । विदत् । गाः । अक्तुना । अह्नां।
वयुनानि । साधत् ॥३॥

माहिनो मंहनीयः पूजनीयो यद्वा महिमोपेतः । अहिहाहिं मेघं हतवानिंद्रः ॥ ब्रह्मभ्रूणवृत्रेषु क्विप् । बहुलं छंदसीति भूतकाले क्विप् ॥ स इंद्रोऽपामर्णः ॥ ऋ गतौ ॥ स्रोतोलक्षणं प्रवाहं समुद्रमच्छाभिलक्ष्य प्रैरयत् । किंच स इंद्रोंऽगिरसां बिलांतर्वर्तिनामावृतानां गवां लाभाय

सूर्यमजनयत् । ततो गाः पणिभिरपहृता गा विदत् । अलभत । विदिर् लाभे । लुङीरितो वेति च्लेरङादेशः । वाक्यभेदादनिघातः । तथाक्तुना तेजसाह्नां दिवसानां वयुनानि प्रज्ञानानि प्रकाशान् साधत् । असाधयत् । ।

सो अ॑प्र॒तीनि॒ मन॑वे पु॒रूणीन्द्रो॑ दाशद्दा॒शुषे॒ हन्ति॑ वृ॒त्रम् ।

स॒द्यो यो नृभ्यो॑ अत॒साय्यो॒ भूत्प॑स्पृधा॒नेभ्य॒ः सूर्य॑स्य सा॒तौ ॥४

सः । अ॒प्र॒तीनि॑ । मन॑वे । पु॒रूणि॑ । इन्द्रः॑ । दा॒श॒त् । दा॒शुषे॑ । हन्ति॑ । वृ॒त्रम् ।

स॒द्यः । यः । नृऽभ्यः॑ । अ॒त॒साय्यः॑ । भूत् । प॒स्पृ॒धा॒नेभ्यः॑ । सूर्य॑स्य । सा॒तौ ॥४

सः । अप्रतीनि । मनवे । पुरूणि । इंद्रः । दाशत् । दाशुषे । हंति । वृत्रं ।

सद्यः । यः । नृऽभ्यः । अतसाय्यः । भूत् । पस्पृधानेभ्यः । सूर्यस्य । सातौ ॥४॥

स इंद्रो दाशुषे हविर्दत्तवते मनवे मनुष्याय यजमानाय पुरूणि बहून्यप्रतीन्युत्कृष्टानि धनानि दाशत् । ददाति । किंच वृत्रमसुरं हंति । कीदृशः । य इंद्रः सूर्यस्य सातौ । सातिः संभजनं । सूर्यसंभजनविषये भूते पस्पृधानेभ्यः अहमेव प्रथमं सूर्यं प्राप्नुयामहमेव प्रथमं सूर्य प्राप्नुयामिति स्पर्धमानेभ्यः स्तोतृभ्यः सद्यस्तदानीमेवातसाय्यस्तत्प्राप्तिहेतुभूतः सन् समाश्रयणीयो भूत्। अभूत् । यद्वा सूर्यस्य सातौ ॥ षोंऽतकर्मणि । अधिकरणे क्तिन् । सूर्यस्य संबंधिनि युद्धे पस्पृधानेभ्यः सूर्येण सह स्पर्धमानभ्यो ऽतसाय्योऽभूत् ॥

स सु॑न्व॒त इन्द्र॒ः सूर्य॒मा दे॒वो रि॑ण॒ङ्मर्त्या॑य स्त॒वान् ।

आ यद्र॒यिं गु॒हद॑वद्यमस्मै॒ भर॒दंश॒ं नैत॑शो दश॒स्यन् ॥५

सः । सु॒न्व॒ते । इन्द्र॑ः । सूर्य॑म् । आ । दे॒वः । रि॒ण॒क् ।
मर्त्या॑य । स्त॒वान् ।

आ । यत् । र॒यिम् । गु॒हत्ऽअ॑वद्यम् । अ॒स्मै॒ । भर॑त् ।
अंश॑म् । न । एत॑शः । द॒श॒स्यन् ॥५

सः । सुन्वते । इंद्रः । सूर्यं। आ । देवः रिणक् । मर्त्याय ।
स्तवान् ।।

आ। यत् । रयिं । गुहत् ऽअवद्यं । अस्मै । भरत् । अंशे।
न। एतशः । दशस्यन् ॥५॥

स्तवान् एतशेन स्तूयमानो देवो द्योतमानः स इंद्रः सुन्वते सोमाभिषवं कुर्वते मर्त्याय मनुष्यायैतशाय सूर्यमारिणक् । एतशेन स्पर्धमानं सूर्यं बलेनारेचयत् । तथा च निगमः । प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिंद्र इति । यद्यस्मादेतशः सौवश्व्यो राजा दशस्यन् यजमानोऽस्मा इंद्राय गुहद्वयं प्रच्छन्नावद्यं रयिं सोमरूपमभरत् । संपादयामास । तत्र दृष्टांतः । अंशं न । यथा पितांशं भागं पुत्राय भरति तद्वत् ॥ ॥२३॥

स रं॑न्धयत्स॒दिव॒ः सारं॑थये॒ शुष्णं॑म॒शुषं॒ कुयं॑व॒ं कुत्सा॑य ।

दिवो॑दासाय नव॒तिं च॒ नवेन्द्र॒ः पुरो॒ व्यै॑र॒च्छम्बं॑रस्य ॥६

सः । र॒न्ध॒य॒त् । स॒ऽदिवः॑ । सारं॑थये । शुष्णं॑म् । अ॒शुषं॑म् । कुयं॑वम् । कुत्सा॑य ।

दिवः॑ऽदासाय । न॒व॒तिम् । च॒ । नव॑ । इन्द्रः॑ । पुरः॑ । वि । ऐ॒र॒त् । शम्ब॑रस्य ॥६

सः । रंधयत् । सऽदिवः । सारथये । शुष्णं । अशुषं । कुयव। कुत्साय ।।

दिवःऽदासाय । नवतिं । च । नवं । इंद्रः । पुरः । वि। ऐरत् । शंबरस्य ॥६॥

सदिवो दीप्तियुक्तः स इंद्रः सारथय आत्मनः सारथ्यं कुर्वते कुत्साय राजर्षये शुष्णं । शोषयति सर्वमिति शुष्णः कश्चिदसुरः । तमशुषं न केनापि शोषणीयं । कुयवमेतन्नामानमसुर रंधयत् ॥ रध्यतिर्वशगमने ॥ वशमनयत्॥ यद्वा रध हिंसासंराद्ध्योरित्यस्य ण्यंतस्य रधिजभोरचीति नुम् ॥ अवधीत् । किंच स इंद्रो दिवोदासायैतन्नामकाय राज्ञे शंबरस्यासुरस्य नव नवतिं पुरो व्यैरत् । विदारितवान् ।

ए॒वा त॑ इन्द्रो॒चथ॑महेम श्र॒व॒स्या न त्मना॑ वा॒जय॑न्तः ।

अ॒श्याम॒ तत्साप्त॑माशुषा॒णा न॒नमो॒ वध॒रदे॑वस्य पी॒योः ॥७

ए॒व । ते॒ । इ॒न्द्र॒ । उ॒चथ॑म् । अ॒हे॒म॒ । श्र॒व॒स्या । न । त्मना॑ ।
वा॒जय॑न्तः ।

अ॒श्याम॑ । तत् । साप्त॑म् । आ॒शु॒षा॒णाः । न॒नमः॑ । वधः॑ ।
अदे॑वस्य । पी॒योः ॥७

एव । ते । इंद्र। उचथं । अहेम। श्रवस्या । न । त्मना ।
वाजयंतः ।

अश्याम। तत् । साप्तं । आशुषाणाः । ननमः। वधः ।
अदेवस्य । पीयोः ॥७॥

हे इंद्र श्रवस्या । सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घः । अन्नेच्छया वाजयंतस्त्वां बलिनं कुर्वतः । यद्वा श्रवस्या यशःकामनया वाजयंतो ऽन्नमिच्छंतः ॥ इच्छायामपि णिच् दृश्यते । अश्वायंतो गव्यंतो वाजयंत इति क्यजंतत्वे चित्प्रातिपदिकस्यांतोदात्तत्वं स्यात् वाजयंतः शतक्रतुमिति यथा । तादृशा वयं ते तुभ्यमेवोचथं स्तोत्रं त्मना आत्मना स्वयमेव नाहेम । इदानीं प्रापयेम ॥ अहि गतौ । न संप्रत्यर्थे ॥ आशुषाणाः । अश्नोतेः कानचि व्यत्ययो बहुलमिति लिट्यपि विकरणद्वय उप्रत्ययः स च ॥ त्वामश्नुवाना वयं यदभिलषितं तत्साप्तं सप्तपुरुषसंबंधि साप्तपदीनं सख्यमश्याम। व्याप्नुयाम । अदेवस्य देवानिंद्रादीनजानतः पीयोः ॥ पीयतिहिंसाकर्मा ॥ हिंसकस्यासुरस्य वधः ॥ वध्यंते शत्रवोऽनेनेति वधरायुधं ॥ ननमः । तदधो नमय ॥ ननमः । णमु । प्रह्वत्वे । ण्यं तस्य लुङि चङि रूपं । मितां ह्रस्व इति ह्रस्वः ॥

ए॒वा तें गृत्सम॒दाः शू॑र॒ मन्मा॑व॒स्यवो॒ न व॒युना॑नि तक्षुः ।

ब्र॒ह्म॒ण्यन्त॑ इन्द्र ते॒ नवी॑य॒ इष॒मूर्जं॑ सुक्षि॒तिं सु॒म्नम॑श्युः ॥८

ए॒व । ते॒ । गृ॒त्स॒ऽम॒दाः । शू॒र॒ । मन्म॑ । अ॒व॒स्यवः॑ । न । व॒युना॑नि । त॒क्षु॒ः ।

ब्र॒ह्म॒ण्यन्तः॑ । इ॒न्द्र॒ । ते॒ । नवी॑यः । इषं॑म् । ऊर्जं॑म् । सु॒ऽक्षि॒तिम् । सु॒म्नम् । अ॒श्यु॒ः ॥८

एव । ते । गृत्सऽमदाः। शूर। मन्म । अवस्यवः। न। वयुनानि । तक्षुः।।

ब्रह्मण्यंतः । इंद्र । ते । नवीयः । इषं । ऊर्जं। सुऽक्षितिं । सुम्नं । अश्युः ॥८॥

शूर बलवन् हे इंद्र ते तुभ्यं गृत्समदाः । अत्र यास्कः । गृत्समदो गृत्समदनो गृत्स इति मेधाविनाम गृणातेः स्तुतिकर्मणः । नि°९.५ । इति । तथाविधा मन्म मननीयं स्तोत्रं ते तुभ्यमेव तक्षुः । ततक्षुः । चक्रुः । तत्र दृष्टांतः । अवस्यवो न ॥ अवः । गत्यर्थादवतेरमुनि रूपमव इति । अवो गमनमिच्छंतः पुमांसो वयुनानि मार्गान् यथा कुर्वंति तद्वत ! किंच नवीयः ॥ सुपां सुलुगिति षष्ट्या लुक् ॥ नवीयसो नवतरस्य ते तव ब्रह्मण्यंतः स्तोत्रं कर्तुमिच्छंतो गृत्समदाः सुक्षितिमियं शोभननिवासोपेतमन्नमूर्जं बलं सुम्नं सुखं चाश्युः । प्राप्नुयुः । एकस्मिन गृत्समदे बहुवचनं परोक्षनिर्देशश्च ॥

नू॒नं सा ते॒ प्रति॒ वरं॑ जरि॒त्रे दु॑ही॒यदि॑न्द्र॒ दक्षि॑णा म॒घोनी॑ ।

शिक्षां स्तो॒तृभ्यो॒ मातिं ध॒ग्भगों नो बृ॒हद्वंदेम वि॒दथें सु॒वीराः ॥९

नू॒नम् । सा । ते॒ । प्रतिं । वरंम् । ज॒रि॒त्रे । दु॒ही॒यत् । इ॒न्द्र॒ । दक्षिंणा । म॒घोनीं ।

शिक्षं । स्तो॒तृऽभ्यः । मा । अतिं । ध॒क् । भगः । न॒ः । बृ॒हत् । व॒दे॒म॒ । वि॒दथें । सु॒ऽवीराः ॥९

नूनं । सा । ते । प्रति । वरं । जरित्रे। दुहीयत् । इंद्र। दक्षिणा । मघोनी ।

शिक्ष । स्तोतृभ्यः। मा। अति। धक् । भगः। नः। बृहत्। वदेम विदथे । सुवीराः ॥९॥

हे इंद्र या दक्षिणा दक्षमुत्साहनं करोतीति दक्षिणा स्तोतृभ्यो देया ते त्वत्संबंधिनी मघोनी धनवत जरित्रे स्तोत्रे वरं श्रेष्ठमभिमतमर्थं नूनं प्रतिदुहीयत् । इदानीं

प्रतिदोग्धि। संपादयतीत्यर्थः । तादृशीं दक्षिणां स्तोतृभ्योऽस्मभ्यं शिक्ष । प्रयच्छ । किंच भगो भजनीयस्त्वं माति धक् ॥ दहेर्दानार्थस्य लुङि मंत्रे घसेत्यादिना च्लेर्लुक् ॥ नोऽस्मानतिक्रम्यान्येभ्यो दक्षिणां मा दाः । प्रथममस्मभ्यं दत्त्वा पश्चादन्येभ्यो दीयतामित्यर्थः । यद्वा नोऽस्माकं कामान् मा धक् । मा धाक्षीः। अपेक्षितफलदानेन पूरयेत्यर्थः । सुवीराः शोभनपुत्रपौत्राः संतो वयं विदथे ऽस्मिन्यज्ञे बृहत् प्रभूतं स्तोत्रं वदेम । त्वामुद्दिश्य ब्रवाम । अत्र सा ते प्रतिदुग्धामिति प्रकृत्य वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वेत्यंतं निरुक्तमनुसंधेयं । नि० १.७.॥॥६॥ ॥१॥

# ऋग्वेदः सूक्तं २.२०

ऋग्वेदः - मण्डल २
← सूक्तं २.१९
सूक्तं २.२०
सूक्तं २.२१ →
गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः

## दे. इन्द्रः। त्रिष्टुप्,३ विराड्रूपा

वयं ते वय इन्द्र विद्धि षु णः प्र भरामहे वाजयुर्न रथम् ।

विपन्यवो दीध्यतो मनीषा सुम्नमियक्षन्तस्त्वावतो नॄन् ॥१॥

त्वं न इन्द्र त्वाभिरूती त्वायतो अभिष्टिपासि जनान् ।

त्वमिनो दाशुषो वरूतेत्थाधीरभि यो नक्षति त्वा ॥२॥

स नो युवेन्द्रो जोहूत्रः सखा शिवो नरामस्तु पाता ।

यः शंसन्तं यः शशमानमूती पचन्तं च स्तुवन्तं च प्रणेषत् ॥३॥

तमु स्तुष इन्द्रं तं गृणीषे यस्मिन्पुरा वावृधुः शाशदुश्च ।

स वस्वः कामं पीपरदियानो ब्रह्मण्यतो नूतनस्यायोः ॥४॥

सो अङ्गिरसामुचथा जुजुष्वान्ब्रह्मा तूतोदिन्द्रो गातुमिष्णन् ।

मुष्णन्नुषसः सूर्येण स्तवानश्नस्य चिच्छिश्नथत्पूर्व्याणि ॥५॥

स ह श्रुत इन्द्रो नाम देव ऊर्ध्वो भुवन्मनुषे दस्मतमः ।

अव प्रियमर्शसानस्य साह्वाञ्छिरो भरद्दासस्य स्वधावान् ॥६॥

स वृत्रहेन्द्रः कृष्णयोनीः पुरंदरो दासीरैरयद्वि ।

अजनयन्मनवे क्षामपश्च सत्रा शंसं यजमानस्य तूतोत् ॥७॥

तस्मै तवस्यमनु दायि सत्रेन्द्राय देवेभिरर्णसातौ ।

प्रति यदस्य वज्रं बाह्वोर्धुर्हत्वी दस्यूनपुर आयसीर्नि तारीत् ॥८॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।

शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥९॥

## सायणभाष्यम्

' वयं ते वयः ' इति नवर्चं नवमं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम् । ' वयं ते ' इत्यनुक्रान्तम् । सूक्तविनियोगो लिङ्गादवधार्यताम् ।

व॒यं ते॒ वय॑ इन्द्र वि॒द्धि षु ण॒ः प्र भ॑रामहे वाज॒युर्न रथ॑म् ।

वि॒प॒न्यवो॒ दीध्य॑तो मनी॒षा सु॒म्नमिय॑क्षन्त॒स्त्वाव॑तो॒ नॄन् ॥१

व॒यम् । ते॒ । वयः॑ । इ॒न्द्र॒ । वि॒द्धि । सु । नः॒ । प्र । भ॒रा॒म॒हे॒ । वा॒ज॒ऽयुः । न । रथ॑म् ।

वि॒प॒न्यवः॑ । दीध्य॑तः । म॒नी॒षा । सु॒म्नम् । इय॑क्षन्तः । त्वाऽव॑तः । नॄन् ॥१

वयं। ते ।वयः। इंद्र। विद्धि । सु। नः । प्र। भरामहे । वाजऽयुः । न। रथं ।

विपन्यवः । दीध्यतः । मनीषा। सुम्नं । इयक्षंतः । त्वाऽवतः । नॄन् ॥१॥

हे इंद्र ते तुभ्यं वयं वयः सोमलक्षणमन्नं प्रभरामहे । प्रकर्षेण संपादयामः । तत्र दृष्टांतः । वाजयुर्न । यथान्नमात्मन इच्छन् पुमान् रथं शकटं संपादयति तद्वत् । एवं हविःसंपादकान् नोऽस्मान् सु सुष्ठु विद्धि । जानीहि ॥ विदेर्ज्ञानार्थस्य लोटि रूपं । वाक्यादित्वादनिघातः । किं

कुर्वतो वयं । विपन्यवः । तव स्तोत्रं कुर्वाणाः । मनीषा मनस इषया स्तुत्या दीध्यतो दीप्यमानाः ॥ दीधीङ् दीप्तिदेवनयोः । व्यत्ययेन शतृ ॥ त्वावतः ॥ युष्मदस्मद्भ्यां छंदसि सादृश्य उपसंख्यानमिति वतुप् ॥ त्वत्सदृशान् नॄन् नेतॄन अग्न्यादीन् सुम्नं सुखमियक्षतः । याचमानाः । यद्वा सुखं सुखेन नॄन नेतॄन् अग्न्यादीन्देवानियक्षतः ॥ इयक्षतिर्गतिकमी ॥ हविषा तान् प्राप्नुवंतो वयं भरामह इति समन्वयः ।।

त्वं न॑ इन्द्र॒ त्वाभि॑रू॒ती त्वा॑य॒तो अ॑भिष्टि॒पासि॒ जना॑न् ।

त्वमि॒नो दा॒शुषो॑ वरू॒तेत्थाधी॑र॒भि यो नक्ष॑ति त्वा ॥२

त्वम् । नः॒ । इ॒न्द्र॒ । त्वाभिः॑ । ऊ॒ती । त्वा॒ऽय॒तः ।
अ॒भि॒ष्टि॒ऽपा । अ॒सि॒ । जना॑न् ।

त्वम् । इ॒नः । दा॒शुषः॑ । व॒रू॒ता । इ॒त्थाऽधीः॑ । अ॒भि । यः
। नक्ष॑ति । त्वा॒ ॥२

त्वं । नः । इंद्र । त्वाभिः । ऊती । त्वाऽयतः । अभिष्टिऽपा
। असि। जनान् ।।

त्वं । इनः । दाशुषः । वरूता । इत्थाऽधीः । अभि । यः ।
नक्षति । त्वा ॥२॥

हे इंद्र त्वं त्वाभिस्त्वदीयाभिरूती ऊतिभिः
पालनादिभिर्नोऽस्मान् पाहि । किंच त्वायतः ॥ सुप
आत्मनः क्यच् । शतुरनुम इति विभक्तेरुदात्तत्वं ॥
त्वत्कामान् जनान् अभिष्टिपा ॥ सुपां सुलुगिति सोराकारः
॥ अभिष्टयोऽभिगंतारः शत्रवः । तेभ्यः पाता रक्षकोऽसि ।
भवसि । दाशुषो हविर्दत्तवतो यजमानस्य त्वमिनः ।
ईश्वरः खलु । वरूता ॥ ग्रसितस्कभितस्तभितेति
निपातनादीकारस्य ऊकारः । बाधकानां निवारको ऽसि ।

किंच त्वं तस्य स्तोतुरित्थाधीरेवंविधोपद्रवोपशमरूपकर्मासि । यस्त्वा त्वामभिनक्षति हविषा परिचरति ॥

स नो॒ युवेन्द्रो॑ जो॒हूत्रः॒ सखा॑ शि॒वो न॒राम॑स्तु पा॒ता ।

यः शंस॑न्तं॒ यः श॑शमा॒नमू॒ती पच॑न्तं च स्तु॒वन्तं॑ च प्र॒णेष॑त् ॥३

सः । नः॒ । युवा॑ । इन्द्रः॑ । जो॒हूत्रः॑ । सखा॑ । शि॒वः । न॒राम् । अ॒स्तु॒ । पा॒ता ।

यः । शंस॑न्तम् । यः । श॒श॒मा॒नम् । ऊ॒ती । पच॑न्तम् । च॒ । स्तु॒वन्त॑म् । च॒ । प्र॒ऽनेष॑त् ॥३

सः । नः। युवा। इंद्रः । जोहूत्रः। सखा। शिवः। नरां । अस्तु । पाता ।

चराचरात्मकौ मर्त्यामर्त्यात्मकौ वा साधूसाधकौ भवतः ॥ १५॥

या वों मा॒या अं॒भि॒द्रुहें यजत्रा॒ः पाशां आदित्या रि॒पवे॒ विचृंत्ताः ।

अ॒श्वीव॒ ताँ अतिं येषं॒ रथे॒नारिंष्टा उ॒रावा शर्मंन्स्याम ॥१६

याः । व॒ः । मा॒याः । अ॒भि॒ऽद्रुहें । य॒ज॒त्रा॒ः । पाशाः॑ । आ॒दि॒त्या॒ः । रि॒पवें । विऽचृंत्ताः ।

अ॒श्वीऽइंव । तान् । अतिं । ये॒ष॒म् । रथेंन । अरिंष्टाः । उ॒रौ । आ । शर्मंन् । स्या॒म॒ ॥१६

याः । वः । मायाः । अभिऽद्रुहे । यजत्राः । पाशाः । आदित्याः । रिपवे । विऽचृत्ताः ।

अश्वीऽइव । तान् । अति । येषम् । रथेन । अरिष्टाः । उरौ । आ । शर्मन् । स्याम ॥१६

हे यजत्राः यष्टव्या आदित्याः वो युष्माकं याः मायाः अभिद्रुहे अभिद्रोहं कुर्वते राक्षसादये निर्मिताः ये च पाशाः रिपवे शत्रवे विवृत्ताः चृती हिंसाग्रन्थनयोः प्रसारिता इत्यर्थः तान्पाशान् मायाश्च रथेन अतियेषं अतीत्य प्रयतेयं अतितरेयमित्यर्थः तत्र दृष्टान्तः - अश्वीव यथा शोभनाश्वः कश्चित्पुरुषः दुस्तरान्मार्गान्शीघ्रमतिक्रामति तद्वत् येष्टृ प्रयत्ने भौवादिकोनुदात्तेत् छान्दसो लङ् व्यत्ययेन परस्मैपदम् तथा वयं अरिष्टाः शत्रुभिरहिंसिताः सन्तः उरौ विस्तीर्णे शर्मन् शर्मेति गृहनाम त्वया दत्ते सुखे गृहे वा आसमन्तात्स्याम वर्तमाना भवेम॥ १६॥

माहं म॒घोनों वरुण प्रि॒यस्यं भूरि॒दाव्न॒ आ विंदं॒ शूनंमा॒पेः ।

मा रा॒यो रा॑जन्सु॒यमा॒दवं॑ स्थां बृ॒हद्वं॑देम वि॒दथे॑ सु॒वीराः॑ ॥
१७

मा । अ॒हम् । म॒घोनः॑ । व॒रु॒ण॒ । प्रि॒यस्यं॑ । भू॒रि॒ऽदाव्नः॑ ।
आ । वि॒द॒म् । शूनं॑म् । आ॒पेः ।

मा । रा॒यः । रा॒ज॒न् । सु॒ऽयमा॑त् । अवं॑ । स्था॒म् । बृ॒हत् ।
व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥१७

मा । अहम् । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः ।
आ । विदम् । शूनम् । आपेः ।

मा । रायः । राजन् । सुऽयमात् । अव । स्थाम् । बृहत् ।
वदेम । विदथे । सुऽवीराः ॥१७

हे वरुण मघोनो धनवतः प्रियस्यानुकूलस्य भूरिदावः
भूरेर्बहुलस्य दातुरहं मा आविदं मा आवेद्यानि अविद्नं
विज्ञापनं मा करवाणि किंतदनावेद्यं आपेर्ज्ञातेः शूनं शून्यं

दारिद्र्यम् वर्णलोपश्छान्दसः यद्वा शूनं गतं प्राप्तं दारिद्र्यम् टुओश्विगतिवृद्ध्योः श्वीदितोनिष्ठायामितीट्प्रतिषेधः यजादित्वात्संप्रसारणम् ओदितश्चेति नकारः वृषादित्वादाद्युदात्तत्वम् एतदुक्तं भवति अस्मदीयाः पुत्राद्यः क्षुधिता इति प्रभुसमीपेभिधाय याचमानो मा भूवमिति हे राजन्सुयमात् सुष्ठु नियम्यतेनेन पुरुषो गृह इति सुयमः ईषद्दुःसुष्वितिखल् तादृशाद्रायो धनान्मावस्थां अवयुत्य स्थितो मा भूवं वयं सुवीराः शोभनपुत्रा विदथे यज्ञे गृहे वा वर्तमानाः सन्तो बृहत् प्रौढं स्तोत्रं वदेम उच्चारयाम॥१७॥

**टिप्पणी**

<u>कच्छपोपरि पौराणिकाः संदर्भाः</u>



*राजारानी मन्दिरस्य भित्त्योपरि वरुणः*

इदं कवेरादित्यस्य स्वराजो विश्वानि सान्त्यभ्यस्तु मह्ना ।

अति यो मन्द्रो यजथाय देवः सुकीर्तिं भिक्षे वरुणस्य भूरेः ॥१॥

तव व्रते सुभगासः स्याम स्वाध्यो वरुण तुष्टुवांसः ।

उपायन उषसां गोमतीनामग्नयो न जरमाणा अनु द्यून् ॥२॥

तव स्याम पुरुवीरस्य शर्मन्नुरुशंसस्य वरुण प्रणेतः ।

यूयं नः पुत्रा अदितेरदब्धा अभि क्षमध्वं युज्याय देवाः ॥३॥

प्र सीमादित्यो असृजद्विधर्ताँ ऋतं सिन्धवो वरुणस्य यन्ति ।

न श्राम्यन्ति न वि मुचन्त्येते वयो न पप्तू रघुया परिज्मन् ॥४॥

वि मच्छ्रथाय रशनामिवाग ऋध्याम ते वरुण खामृतस्य ।

मा तन्तुश्छेदि वयतो धियं मे मा मात्रा शार्यपसः पुर ऋतोः ॥५॥

अपो सु म्यक्ष वरुण भियसं मत्सम्राळृतावोऽनु मा गृभाय ।

दामेव वत्साद्वि मुमुग्ध्यंहो नहि त्वदारे निमिषश्चनेशे ॥६॥

मा नो वधैर्वरुण ये त इष्टावेनः कृण्वन्तमसुर भ्रीणन्ति ।

मा ज्योतिषः प्रवसथानि गन्म वि षू मृधः शिश्रथो जीवसे नः ॥७॥

नमः पुरा ते वरुणोत नूनमुतापरं तुविजात ब्रवाम ।

त्वे हि कं पर्वते न श्रितान्यप्रच्युतानि दूळभ व्रतानि ॥८॥

पर ऋणा सावीरध मत्कृतानि माहं राजन्नन्यकृतेन भोजम् ।

अव्युष्टा इन्नु भूयसीरुषास आ नो जीवान्वरुण तासु शाधि ॥९॥

यो मे राजन्युज्यो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह ।

स्तेनो वा यो दिप्सति नो वृको वा त्वं तस्माद्वरुण पाह्यस्मान् ॥१०॥

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।

मा रायो राजन्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥११॥

## सायणभाष्यम्

' इदम् ' इत्येकादशर्चं षष्ठं सूक्तम् । अत्रानुक्रम्यते-- इदमेकादश वारुणम् ' इति । पूर्वसूक्ते ' कूर्मो गार्त्समदो हि वा ' इत्युक्तत्वादस्योत्तरस्य च कूर्मो गृत्समदो वा ऋषिः । त्रिष्टुप् छन्दः । वरुणो देवता । विनियोगो लैङ्गिकः । अत्र केचिदाहुः - ' इदमेकादशर्चं तु वारुणं भयपापनुत् । ऋणदारिद्र्यदुःस्वप्ननाशनं चेति शुश्रुम ' इति ।।

इ॒दं क॒वेरा॑दि॒त्यस्य॑ स्व॒राजो॒ विश्वा॑नि॒ सान्त्य॒भ्य॑स्तु म॒ह्ना ।

अति॒ यो म॒न्द्रो य॒जथा॑य दे॒वः सु॑की॒र्तिं भि॑क्षे॒ वरु॑णस्य॒ भूरेः॑ ॥१

इ॒दम् । क॒वेः । आ॒दि॒त्यस्य॑ । स्व॒ऽराजः॑ । विश्वा॑नि । सन्ति॑ । अ॒भि । अ॒स्तु॒ । म॒ह्ना ।

अति॑ । यः । म॒न्द्रः । य॒जथा॑य । दे॒वः । सु॒ऽकी॒र्तिम् । भि॒क्षे॒ । वरु॑णस्य । भूरेः॑ ॥१

इदम् । कवेः । आदित्यस्य । स्वऽराजः । विश्वानि । सन्ति । अभि । अस्तु । मह्ना ।

अति । यः । मन्द्रः । यजथाय । देवः । सुऽकीर्तिम् । भिक्षे । वरुणस्य । भूरेः ॥१

कवेः क्रान्तदर्शिन आदित्यस्य अदितेः पुत्रस्य स्वराजः स्वयमेवराजमानस्येश्वरस्य वा वरुणस्येदं हविः स्तोत्रं वा यजमानः करोतीति शेषः स च विश्वानि सर्वाणि संति द्वितीयभावविकारभांजिभूतजातानि मह्ना महिम्ना वरुणप्रसादालब्धेन अभ्यस्तु अभिभवतु यो देवो

द्योतमानो वरुणः यजथाय यष्ट्रे पुरुषाय अति अतिशयेन मन्द्रः स्तुत्यो हर्षयिता वा भवति तस्य भूरेर्भर्तुर्वरुणस्य सुकीर्तिं शोभनां स्तुतिं भिक्षे प्रार्थये यद्वा वरुणस्येति तृतीयार्थे षष्ठी तेन वरुणेन दातव्यां शोभनां कीर्तिं अहं याचे ॥ १ ॥

तवं॑ व्र॒ते सु॒भगां॑सः स्याम स्वा॒ध्यों॑ वरुण तुष्टु॒वांसः॑ ।

उ॒पायं॑न उ॒षसा॒ं गोमं॑तीनाम॒ग्नयो॒ न जरं॑माणा॒ अनु॒ द्यून् ॥२

तवं॑ । व्र॒ते । सु॒ऽभगां॑सः । स्या॒म॒ । सु॒ऽआ॒ध्यं॑ः । व॒रु॒ण॒ । तु॒स्तु॒ऽवांसः॑ ।

उ॒प॒ऽअयं॑ने । उ॒षसां॑म् । गोऽमं॑तीनाम् । अ॒ग्नयं॑ः । न । जरं॑माणाः । अनुं॑ । द्यून् ॥२

तव । व्रते । सुऽभगासः । स्याम । सुऽआध्यः । वरुण । तुस्तुऽवांसः ।

उपऽअयने । उषसाम् । गोऽमतीनाम् । अग्नयः । न । जरमाणाः । अनु । द्यून् ॥२

हे वरुण स्वाध्यः शोभनाध्यानाः तुष्टुवांसः स्तुतवन्तो वयं तव व्रते त्वदीये परिचरणाख्ये कर्मणि वर्तमानाः सुभगासः स्याम शोभनधना भवेम अपि च गोमतीनां रश्मिभिर्युक्तानामुषसां उपायने उपागमने सति अग्नयो न यथा अग्नयोग्निहोत्रादिकर्मार्थं समिध्यन्ते एवमनुद्यून अनुदितं जरमाणास्त्वां स्तुवन्तो वयं दीप्यमाना भवेम।। २।।

तवं स्याम पुरु॒वीरंस्य॒ शर्मंन्नुरु॒शंसंस्य वरुण प्रणेतः ।

यू॒यं नः॑ पुत्रा अदितेरदब्धा अ॒भि क्ष॑मध्वं॒ युज्या॑य देवाः ॥३

तव॑ । स्या॒म॒ । पु॒रु॒ऽवीर॑स्य । शर्म॑न् । उ॒रु॒ऽशंस॑स्य । व॒रु॒ण॒ । प्र॒ने॒त॒रिति॑ प्रऽनेतः ।

यू॒यम् । नः॒ । पु॒त्राः॒ । अ॒दि॒तेः॒ । अ॒द॒ब्धाः॒ । अ॒भि । क्ष॒म॒ध्व॒म् । युज्या॑य । दे॒वाः॒ ॥३

तव । स्याम । पुरुऽवीरस्य । शर्मन् । उरुऽशंसस्य । वरुण । प्रनेतरिति प्रऽनेतः ।

यूयम् । नः । पुत्राः । अदितेः । अदब्धाः । अभि । क्षमध्वम् । युज्याय । देवाः ॥३

हे प्रणेतः सर्वस्य जगतः प्रकर्षेण नेतः वरुण पुरुवीरस्य पुरुभिर्बहुभिः वीरैरुपेतस्य यद्वा पुरूणां बहूनां शत्रूणां विशेषेण प्रेरकस्य उरुशंसस्य उरुभिर्बहुभिःस्तूयमानस्य तव शर्मन्शर्मणि सुखे गृहे वा स्याम अदितेः पुत्राः

मित्रादयः परमपिच्छन्द्सीति परस्य षष्ठ्यन्तस्यपूर्वामन्त्रिताङ्गवद्भावेनानुप्रवेशात् पदद्वयसमुदायस्याष्टमिकं सर्वानुदात्तत्वम् अदब्धा शत्रुभिरहिंसिताः एवंभूता हे देवाः यूयं नोस्मान्कृतापराधान् युज्याय सख्याय अभिक्षमध्वं अस्माभिः कृतमपराधं सहध्वम् ॥ ३ ॥

प्र सीं॑मादि॒त्यो अं॑सृजद्विध॒र्ताँ ऋ॒तं सिन्धं॑वो॒ वरुं॑णस्य यन्ति ।

न श्रां॑म्यन्ति॒ न वि मुं॑चन्त्ये॒ते वयो॒ न पं॑प्तू रघु॒या परिं॑ज्मन् ॥४

प्र । सी॒म् । आ॒दि॒त्यः । अ॒सृ॒ज॒त् । वि॒ऽध॒र्ता । ऋ॒तम् । सिन्धं॑वः । वरुं॑णस्य । य॒न्ति॒ ।

न । श्रा॒म्य॒न्ति॒ । न । वि । मु॒च॒न्ति॒ । ए॒ते । वयः॑ । न ।
प॒प्तुः॒ । र॒घु॒ऽया । परि॑ऽज्मन् ॥४

प्र । सीम् । आदित्यः । असृजत् । विऽधर्ता । ऋतम् ।
सिन्धवः । वरुणस्य । यन्ति ।

न । श्राम्यन्ति । न । वि । मुचन्ति । एते । वयः । न ।
पप्तुः । रघुऽया । परिऽज्मन् ॥४

विधर्ता सेतुरिव जलस्य विधारयिता आदित्यः अदितेः पुत्रो वरुणः ऋतं विधारणहेतुभूतं सत्यम् यद्वा नदीनामुपादानभूतमुदकम् सीं सर्वतः प्रासृजत् प्रकर्षेण सृष्टवान् अणोप्रगृह्यस्यानुनासिक इत्याकारः सानुनासिकः तेन वरुणस्यर्तेन सिन्धवः स्यन्दनशीला नद्यो यन्ति गच्छन्ति प्रवहन्ति एते सिन्धवः न श्राम्यन्ति न प्राप्नुवन्ति न विमुचन्ति उपरता न भवन्ति अनलसाः सर्वदैकरूपेण प्रवहन्तीत्यर्थः एतदेवोच्यते - वयो न वयः पक्षिण इव

रघुयाः लघुवर्गाः शीघ्रगामिनः परिज्मन् परिज्मनि भूम्यां पप्तुः पतंति गच्छन्ति पतृ गतौ लिट्युसितनिपत्योश्छन्दसीत्युपधालोपः स्थानिवद्भावात् द्विर्वचनादि रघुया इत्यत्र सुपांसुलुगिति जसोयाजादेशः ॥ ४ ॥

वि मच्छ्र्र्थाय रश॒नामि॒वाग॑ ऋ॒ध्याम॑ ते वरुण॒ खामृ॒तस्य॑ ।

मा तन्तु॑श्छेदि॒ वय॑तो॒ धियं॑ मे॒ मा मात्रा॑ शार्य॒पसः॑ पु॒र ऋ॒तोः ॥५

वि । मत् । श्र॒थ॒य॒ । र॒श॒नाम्ऽइ॑व । आगः॑ । ऋ॒ध्याम॑ । ते॒ । व॒रु॒ण॒ । खाम् । ऋ॒तस्य॑ ।

मा । तन्तुः॑ । छे॒दि॒ । वय॑तः । धिय॑म् । मे॒ । मा । मात्रा॑ । शा॒रि॒ । अ॒पसः॑ । पु॒रा । ऋ॒तोः ॥५

वि । मत् । श्रथय । रशनाम्ऽइव । आगः । ऋध्याम । ते । वरुण । खाम् । ऋतस्य ।

मा । तन्तुः । छेदि । वयतः । धियम् । मे । मा । मात्रा । शारि । अपसः । पुरा । ऋतोः ॥५

हे वरुण मत् मत्सकाशात् रशनामिव रज्जुमिव आगः विहितानानुष्ठानजनितं पापं विश्रथय शिथिलीकुरु विमोचयेत्यर्थः ते त्वत्संबन्धिन ऋतस्योदकस्य पूर्णा खां नदीं खा इति नदीनाम तां एवंभूता हे देवाः ऋध्याम लभेमहि अपि च धियं कर्म वयतः संतन्वतो मे मम तन्तुः कर्मसन्ततिः मा छेदि छिन्नो मा भूत् नैरन्तर्येणास्त्वित्यर्थः तथा ऋतोः समाप्तिकालात् पुरा पूर्वं अपसः कर्मणः मात्राशरीरं प्राच्योदीच्यांगलक्षणं मा शारि शीर्णं विकलं मा भूत् शॄ हिंसायां कर्मणिलुङ् पुरऋतोरित्यत्र ऋत्यक इतिप्रकृतिभावः ॥ ५ ॥

अपो॒ सु म्य॑क्ष वरुण भि॒यसं॒ मत्सम्रा॒ळृता॒वोऽनु॑ मा गृभाय ।

दामे॑व व॒त्साद्वि मु॑मु॒ग्ध्यंहो॑ न॒हि त्वदा॒रे नि॒मिषं॑श्च॒नेशे॑ ॥६

अपो॒ इति॑ । सु । म्य॒क्ष॒ । व॒रु॒ण॒ । भि॒यस॑म् । मत् । सम्ऽरा॑ट् । ऋत॑ऽवः । अनु॑ । मा॒ । गृ॒भा॒य॒ ।

दाम॑ऽइव । व॒त्सात् । वि । मु॒मु॒ग्धि॒ । अंहः॑ । न॒हि । त्वत् । आ॒रे । नि॒ऽमिषः॑ । च॒न । ईशे॑ ॥६

अपो इति । सु । म्यक्ष । वरुण । भियसम् । मत् । सम्ऽराट् । ऋतऽवः । अनु । मा । गृभाय ।

दामऽइव । वत्सात् । वि । मुमुग्धि । अंहः । नहि । त्वत् । आरे । निऽमिषः । चन । ईशे ॥६

हे वरुण भियसं भयं मत्मत्तः सु सुष्ठु अपोम्यक्ष अपगमय हे सम्राट्सम्यग्राजमान हे ऋतावः सत्यवन् यज्ञवन्वा वरुण मा मां अनुगृभाय अनुगृहाण छन्दसि शायजपीतिश्नः शायजादेशः हग्रहोर्भ इति भत्वम् अपि च दामेव वत्सात् यथा दोग्धा वत्ससकाशात् बन्धनीं रज्जुं विमुञ्चति तथा अंहः पापं मत्सकाशाद्विमुमुग्धि विमुञ्च छान्दसःशपःश्लुः पृथक्कुरु त्वदारे त्वत्तो दूरदेशे वर्तमानः त्वदन्य इत्यर्थः त्वतोन्यः कश्चित् निमिषश्चन निमेषस्यापि अक्षिपक्ष्मचलनस्यापि नहि ईशे नेष्टे त्वमेव ईश्वर इत्यर्थः लोपस्तअात्मनेपदेष्विति त लोपः ॥ ६ ॥

मा नों व॒धैर्व॑रुण॒ ये तं इ॒ष्टावेनः॑ कृ॒ण्वन्तं॑मसुर भ्री॒णन्तिं॑ ।

मा ज्योति॑षः प्रव॒सथा॑नि॒ गन्म॒ वि षू मृधः॑ शिश्रथो जी॒वसे॑ नः ॥७

मा । नः॒ । व॒धैः । व॒रु॒ण॒ । ये । ते॒ । इ॒ष्टौ । एनः॑ ।
कृ॒ण्वन्त॑म् । अ॒सु॒र॒ । भ्री॒णन्ति॑ ।

मा । ज्योति॑षः । प्र॒ऽव॒स॒थानि॑ । ग॒न्म॒ । वि । सु । मृधः॑ ।
शि॒श्र॒थ॒ः । जी॒वसे॑ । न॒ः ॥७

मा । नः । वधैः । वरुण । ये । ते । इष्टौ । एनः ।
कृण्वन्तम् । असुर । भ्रीणन्ति ।

मा । ज्योतिषः । प्रऽवसथानि । गन्म । वि । सु । मृधः ।
शिश्रथः । जीवसे । नः ॥७

हे वरुण नोस्मान्वधैः हननसाधनैरायुधैर्मा हिंसीरिति शेषः हे असुर पापकृतांनिरसितः ते त्वदीये इष्टौ यज्ञे एनः विहितानन्नुष्ठानेनजनितं पापं कृण्वन्तं कुर्वन्तं पुरुषं ये

वधा भ्रीणन्ति हिंसन्ति तैरिति पूर्वत्रसंबन्धः भ्रीष् हिंसायां कैयादिकः अपि च ज्योतिषः गृहे वर्तमानादग्नेः सौरप्रकाशाद्वा प्रवसथानि प्रवासान्मा गन्म मा गच्छाम सर्वदा गृहे वर्तमानः सूर्यं पश्यंश्चिरकालं जीवेयमित्यर्थः गमेर्लुङि मन्त्रेघसेति च्लेर्लुक् तथा नो स्माकं जीवसे जीवनाय मृधो हिंसकान् सु सुष्ठु विशिश्रथः विश्लेषय बाधस्वेत्यर्थः ॥ ७ ॥

नमः॑ पु॒रा ते॑ वरुणो॒त नू॒नमु॒ताप॒रं तु॑विजात ब्रवाम ।

त्वे हि कं॒ पर्व॑ते॒ न श्रि॒तान्यप्र॑च्च्युतानि दूळभ व्र॒तानि॑ ॥८

नमः॑ । पु॒रा । ते॒ । व॒रु॒ण॒ । उ॒त । नू॒नम् । उ॒त । अ॒प॒रम् । तु॒वि॒ऽजा॒त॒ । ब्र॒वा॒म॒ ।

त्वे इति॑ । हि । क॒म् । पर्व॑ते । न । श्रि॒तानि॑ ।
अप्र॑ऽच्युतानि । दु॒ःऽद॒भ॒ । व्र॒तानि॑ ॥८

नमः । पुरा । ते । वरुण । उत । नूनम् । उत । अपरम् ।
तुविऽजात । ब्रवाम ।

त्वे इति । हि । कम् । पर्वते । न । श्रितानि ।
अप्रऽच्युतानि । दुःऽदभ । व्रतानि ॥८

हे वरुण पुरा पूर्वस्मिन्काले ते तुभ्यं नमः
नमस्कारप्रतिपादकं नम इति शब्दमवादिष्म उत अपि च
नूनमद्यापि ब्रवाम उत अपि च हे तुविजात बहुप्रदेशेषु
प्रादुर्भूत वरुण अपरं आगामिन्यपि काले नमःशब्दं ब्रवाम
उचारयाम कस्मादिति चेदुच्यते-दूळभ दुर्दभ दंभितुं
हिंसितुमशक्य दुरोदाशनाशदभध्येष्विति
रेफस्योत्वमुत्तरपदादेष्टुत्वं च कमित्येतत्पदपूर्णम् हि
यस्मात् त्वे त्वयि पर्वतेन शिलोच्चये इव अच्युतानि अन्यैः

प्रच्यावयितुमशक्यानि व्रतानि कर्माणि विधरणानि श्रितानि अाश्रितानि तस्मादित्यर्थः ॥ ८ ॥

परं ऋ॒णा सांवी॒रध॒ मत्कृंतानि॒ माहं रांजन्न॒न्यकृंतेन भोजम् ।

अव्युंष्टा॒ इन्नु भूयंसीरु॒षास॒ आ नों जी॒वान्वंरुण॒ तासुं शाधि ॥९

परां । ऋ॒णा । सा॒वी॒ः । अधं । मत्ऽकृंतानि । मा । अ॒हम् । रा॒ज॒न् । अ॒न्यऽकृंतेन । भो॒ज॒म् ।

अविंऽउष्टाः । इत् । नु । भूयंसीः । उ॒षसः॑ । आ । न॒ः । जी॒वान् । व॒रु॒ण॒ । तासुं । शा॒धि॒ ॥९

परा । ऋणा । सावीः । अध । मत्ऽकृतानि । मा । अहम् । राजन् । अन्यऽकृतेन । भोजम् ।

अविऽउष्टाः । इत् । नु । भूयसीः । उषसः । आ । नः । जीवान् । वरुण । तासु । शाधि ॥९

हे वरुण ऋणा ऋणानि पित्रादिभिः कृतान्यस्माभिर्देयानि परासावीः परासुव पराचीनं प्रेरय प्रेरणे छान्दुसोलुङ् अध अधुना मत्कृतानि मया निष्पादितानि ऋणानि परासुव अपि च हे राजन् स्वामिन् वरुण अहं अन्यकृतेन अन्यैरर्जितेन धनेन मा भोजं भोगं मा लभेयम् किं कारणमिति चेदुच्यते - भूयसीः भूयस्यो बहुतराः उषसः अव्युष्टा इत्नु सत्यं अव्युष्टा एव अपररात्रेषूत्थाय ऋणानि चिन्तयतो जाग्रतो मम व्युष्टा अप्यव्युष्टकल्पा आसन् हे वरुण तासूषस्सु नोस्मान् जीवान् जीवनवतः आशाधि आसमन्तादनुशिष्टान्कुरु ऋणान्यपहत्य भोगपर्याप्तं धनं प्रयच्छेत्यर्थः॥९॥

यो मे॑ राज॒न्युज्यो॑ वा॒ सखा॑ वा॒ स्वप्ने॑ भ॒यं भी॒रवे॒ मह्य॒माह॑ ।

स्ते॒नो वा॒ यो दिप्स॑ति नो॒ वृको॑ वा॒ त्वं तस्मा॑द्वरुण
पाह्य॒स्मान् ॥१०

यः । मे॒ । रा॒ज॒न् । युज्यः॑ । वा॒ । सखा॑ । वा॒ । स्वप्ने॑ ।
भ॒यम् । भी॒रवे॑ । मह्य॑म् । आह॑ ।

स्ते॒नः । वा॒ । यः । दिप्स॑ति । न॒ः । वृकः॑ । वा॒ । त्वम् ।
तस्मा॑त् । व॒रु॒ण॒ । पा॒हि॒ । अ॒स्मान् ॥१०

यः । मे । राजन् । युज्यः । वा । सखा । वा । स्वप्ने ।
भयम् । भीरवे । मह्यम् । आह ।

स्तेनः । वा । यः । दिप्सति । नः । वृकः । वा । त्वम् ।
तस्मात् । वरुण । पाहि । अस्मान् ॥१०

हे राजन् वरुण मे मदीयो युज्यो योजनसमर्थः पित्रादिर्वा सखा समानख्यानो बान्धवो वा स्वप्ने दृष्टं त्वद्विषयं भयं भीरवे भयशीलाय मह्यं य आह ब्रूते तथा स्तेनश्चौरो वा वृकोरण्यश्वा वा यो नो स्मान्दिप्सति जिघाँसति सनीवंतर्धेति विकल्पनादिडभावः दम्भइच्चेतीत्वम् हे वरुण त्वं तस्मात्सर्वस्मादस्मान्पाहि रक्ष॥ १० ॥

माहं म॒घोनों वरुण प्रि॒यस्यं भूरि॒दाव्न॒ आ विंदं॒ शूनंमा॒पेः ।

मा रा॒यो रांजन्सु॒यमा॒दवं स्थां बृ॒हद्वंदेम वि॒दथें सु॒वीराः ॥ ११

मा । अ॒हम् । म॒घोनः । व॒रु॒ण॒ । प्रि॒यस्यं । भू॒रि॒ऽदाव्नः । आ । वि॒द॒म् । शूनंम् । आ॒पेः ।

मा । रा॒यः । रा॒ज॒न् । सु॒ऽयमा॑त् । अव॑ । स्था॒म् । बृ॒हत् ।
व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥११

मा । अहम् । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः ।
आ । विदम् । शूनम् । आपेः ।

मा । रायः । राजन् । सुऽयमात् । अव । स्थाम् । बृहत् ।
वदेम । विदथे । सुऽवीराः ॥११

हे वरुण प्रियस्य भूरिदाव्नः भूरेर्धनस्य दातुर्धनवत आद्यस्य पुरतः पुत्रादेर्दारिद्र्यं अहं मा अविदं मा आवेदयानि ज्ञापयानि हे राजन् सुष्ठुनियामकाद्धनात् अवयुत्य स्थितो मा भूवं शोभनपुत्राः यज्ञे गृहे वा वर्तमानाः प्रौढं स्तोत्रं उच्चारयामः॥ ११॥

आदित्यानामिमाः सूक्तम् इदं वारुणमुच्यते । वारुणी यो म इत्याद्या दुःस्वप्नाद्यप्रणाशिनी ।।बृहद्देवता ४.८३ ।।

वरुणोपरि पौराणिकाः संदर्भाः

वरुणोपरि टिप्पणी

२.२८.२

**टिप्पणी**

तव व्रते सुभगासः स्याम - वरुणस्य व्रतस्य उल्लेखाः ऋग्वेदे यत्रतत्र सन्ति (यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम्। मिनीमसि द्यविद्यवि(१.२५.१), त्वया ह्यग्ने वरुणो धृतव्रतो(१.१४१.९), सरस्वान् धीभिर्वरुणो धृतव्रतः(१०.६६.५), अदब्धानि वरुणस्य व्रतानि(१.२४.१०), राज्ञो नु ते वरुणस्य

व्रतानि(१.९१.३)आदि। वरुणस्य व्रतं किं भवति। अस्मिन् संदर्भे मत्स्यपुराणे १०१.७४ उल्लेखमस्ति -

निशि कृत्वा जले वासं प्रभाते गोप्रदो भवेत्।

वारुणं लोकमाप्नोति वरुणव्रतमुच्यते।। मत्स्यपुराणम् १०१.७४ ।।

अपि च -

व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्। दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते।। - वा.सं १९.३०

उपायने उषसां गोमतीनां - उषोपरि टिप्पणी पठनीयमस्ति। यद्यपि ऋग्वेदे अश्वावती गोमती उषासः इति उल्लेखाः सन्ति, किन्तु तयोः किमन्तरं

अस्ति, ज्ञातम् नास्ति। एकः कथनमस्ति - उषा वा अश्वस्य मेध्यस्य शिरः (शतपथब्राह्मणम् १०.६.४.१ )। अयं संकेतमस्ति यत् यत्र अश्वस्य मेध्यकरणस्य आवश्यकता अस्ति, तत्र अश्वावत्याः उषायाः आवश्यकता अस्ति। डा. फतहसिंह अनुसारेण, अश्वस्य प्रवृत्तिः प्रसरणे, सामाजिक जीवने अस्ति। वरुणस्य तादात्म्यं अश्वमेधयागेन सह नास्ति, अपितु राजसूययागेन सह अस्ति।

गोमतीनां उषसः रहस्यं शतपथब्राह्मण ४.४.५.१० एवं ५.३.४.१२ कथनानुसारेण अपि व्याख्यातुं शक्यन्ते। कर्मकाण्डे वरुणप्रकारस्य अपां संग्रहस्य आवश्यकता भवति। वरुणप्रकारस्य अपसः कः परिज्ञानमस्ति। उत्तरमस्ति यत् या आपः स्यन्दमानानां अपःसु स्थावराः सन्ति, येषां प्रवाहः नास्ति, ते वरुण्या प्रकाराः आपः भवन्ति। अयं

संकेतमस्ति यत् येषां अपसः प्रवृत्तिः स्यन्दशीला अस्ति, ते अश्वप्रकाराः आपः सन्ति। ये स्थावराः सन्ति, ते गोप्रकारस्य (अथवा वरुणस्य पाशेन बद्धा) आपः सन्ति। पद्मपुराणे १.३४.८२ कथनमस्ति यत् वरुणः रसानां अधिपतिरस्ति। यः प्रवाहः अस्ति, आनन्दस्य प्रवाहः, तत् अश्वमस्ति। प्रवाहस्य मध्ये यः स्थिरता अस्ति, तत् गोमत्यः उषासः सन्ति, अयं कथितुं शक्यन्ते। वैदिक साहित्ये रसस्य तात्पर्यं अव्यवस्था मध्ये व्यवस्थातः भवति। रसो वै सः - परमात्मा एव रसानां रसः अस्ति।

अस्माकं जाग्रतचेतना विभिन्न प्रकाराणां उषसः संघट्टनमस्ति। वरुणस्य कार्यं चेतनायाः धनात्मके पथे स्थापनं अस्ति। येषां उषसः आविर्भावं चेतनां ऋणात्मके पथे नयति, तेषां उषसः आविर्भावं

वरुणदेवः रोधितुं शक्नोति। आधुनिक चिकित्साशास्त्रे कैंसररोगस्य चिकित्सा हेतु नवीनकोशिकानां सृजनं रुद्धं कुर्वन्ति। या ऊर्जा नवीनकोशिकानां सर्जने व्ययी भवेत्, तस्याः संचयनं भवति, रोगस्य नाशं भवति।

अग्नयो न जरमाणा अनु द्यून् - गोमतीनां उषसां उपायनं द्युलोके प्रज्वलितानां अग्नीनां समानमस्ति। भविष्यपुराणे २.१.१७.१५ तोयाग्नेः संज्ञा एव वरुणः अस्ति। अग्नि अर्थात् रसः, उच्चतरायाः व्यवस्थायाः स्थितिः, न्यूनतरायाः एण्ट्रांपेः स्थितिः।

जल महाभूतोपरि टिप्पणी

**टिप्पणी**

ह्रीं बीजाक्षरस्य जलमहाभूतेन सह सम्बन्धं अस्ति। ओंकारस्य अयं उ मात्रा अस्ति। विष्णुः देवतास्ति। स्थितिकरणं, ब्रह्मणः सृष्ट्याः पालनं विष्णोः कृत्यं भवति। सृष्ट तन्त्रात् न केनापि प्रकारेण ऊर्जायाः क्षयं भवतु, अयं विष्णोः कृत्यम्। आधुनिक विज्ञानानुसारेण एकप्रकारस्य ऊर्जायाः अन्यप्रकारस्य ऊर्जायां रूपान्तरणं शतप्रतिशत दक्षतापूर्वकं संभवं नास्ति। ऊर्जायाः एकं अंशं रूपान्तरणकरणे व्यर्थं भविष्यति। व्यर्थ अंशस्य निष्कासनं आवश्यकं अस्ति। अयं तेज महाभूतस्य विषयः अस्ति।

पुराणानुसारेण ह्रीं बीजेन जले रसस्य उत्पादनं अपेक्षणीयः। आधुनिक विज्ञानानुसारेण, विभिन्न जीवेषु रसनायां विभिन्न एन्जाईमाः भवन्ति येषां कारणेन ते जड पदार्थेषु अपि रसानां अनुभवं

कुर्वन्ति। ह्रीं बीजस्य साहाय्येन किं अयं संभवमस्ति यत् गौः जिह्वोपरि ये एन्जाईमाः सन्ति, ते अस्माकं जिह्वोपरि अपि उत्पन्नाः भवेयुः। अमृत उत्पादनं, परितृप्तिः इत्यादि गुणाः ह्रीं बीजेन सह सम्बद्धाः सन्ति। केन प्रकारेण, अयं अज्ञातमेव। भौतिक जगतस्य मध्ये अयं धारणा अस्ति यत् यदा सूर्यस्य किरणानां ओषधीषु प्रवेशं भवति, तदा विषस्य उत्पत्तिः भवति। यदा चन्द्रस्य प्रवेशं भवति, तदा अमृतस्य उत्पत्तिः भवति। चन्द्रस्य षोडश्याः कलायाः ओषधीषु प्रवेशः अमावास्यां तिथ्यां भवति।

स्कन्द पुराणे महाभूतेभिः सह तीर्थानां सम्बन्धनं कृतं भवति। अनेनानुसारेण जल महाभूतेन सह हरिश्चन्द्र, मध्यम इत्यादीनां तीर्थानां सम्बन्धं अस्ति। मध्यमं तीर्थं किं भवति, अस्मिन् संदर्भे ब्रह्माण्ड

पुराणे ज्येष्ठ, मध्य एवं कनिष्ठ पुष्कराणां वर्णनं अस्ति। परशुरामः ज्येष्ठे पुष्करे तपः करोति, किन्तु सफलता न मिलति। मध्यमे पुष्करे सः मृगाणां वार्ता शृणोति यत् यदि अयं परशुरामः कनिष्ठपुष्करे गत्वा अगस्त्य मुनितः प्रेमामृतं स्तोत्रं गृह्णातु, तदा सफलता संभवमस्ति। अतएव, मध्यमा स्थितिः सा भवति यत्र सफलतायाः ये सूत्राः सन्ति, ते विभिन्नेभिः माध्यमेभिः साधकं प्रापयन्ति। भागवत पुराणानुसारेण –

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च।

प्रेम मैत्री कृपा – उपेक्षा यः करोति स मध्यमः।।

एवं मध्यम प्रकारस्य भक्त हेतु प्रेम, मैत्री, कृपा, उपेक्षा एते चत्वारः स्तराः भवन्ति। केवल प्रेम्णः स्थिति न भवति। ऊर्जायाः क्षयं द्वेष रूपे अपि

भवति। अपि च, ऊर्जायाः विरलीभवनं(बालिशं) अपि भवति। मन्त्रं अस्ति – अप नः शोशुचदघं। हे आपः अघस्य अपनयनं कुरु। अघ अर्थात् अ-घ, घ घनत्वे। अघ अर्थात् विरलीकरणम्। एतेः सर्वे घटकाः तेज महाभूतस्य, संहारस्य विषयाः भविष्यन्ति।

ह्रीं सह केदार तीर्थस्य अपि सम्बन्धं भवति। यथा केदार शब्दस्य टिप्पण्यां कथितं अस्ति, कोपि घटना यदा अस्माकं निम्नतरं चेतनां दारयति, आकाशीय विद्युद् भांति कर्तितं करोति – यथा कोपि आश्चर्यं, तदा केदार तीर्थस्य जन्म भवति। वयं किमपि कार्यं कुर्यामः, यदि अयं कार्यं केदारं न भवति, तदा ऊर्जायाः क्षयं भविष्यति।

जल महाभूतेन सह प्रतिष्ठागुणस्य सम्बन्धमस्ति। लोके देवमूर्त्तेः प्राणप्रतिष्ठा प्रसिद्धमस्ति। पुराणेषु पुरूरवा प्रतिष्ठानपुरस्य राजा अस्ति। सः उर्वश्याः कामनां करोति। प्रतिष्ठा अर्थात् दैनिके जीवने क्षुधा-तृषा आदि उच्चावचानि जीवनस्य भयदायकाः न भविष्यन्ति। जीवस्य परितः अरिष्टा स्थितिः भविष्यति।

जलस्य एकं गुणं प्रवाहं एवं परस्परमिश्रणं अस्ति। कथनं अस्ति यत् वृत्रस्य हननोपरि एव अयं सम्भवमस्ति। स्पष्टरूपेण, अयं चेतनायाः परस्परमिश्रणेन सह सम्बद्धं अस्ति।

जल महाभूतस्य एकं गुणमयमस्ति यत् यत्र जलस्य उपलब्धिः भविष्यति, तत्रैव ओषधि-वनस्पतीनां प्रादुर्भावं भविष्यति। वैदिक साहित्ये जलस्य वर्षणं

साधारणा घटना नास्ति। यदा पुरोवातस्य, गर्जनस्य, विद्युतस्य आदीनां संयोगं भविष्यति, तदैव वर्षणं भविष्यति।

# ऋग्वेदः सूक्तं २.२९

← सूक्तं २.२८

**ऋग्वेदः - मण्डल २**

सूक्तं २.२९

कूर्मो गार्त्समदो, गृत्समदो वा।

सूक्तं २.३० →

## दे. विश्वेदेवाः। त्रिष्टुप्

धृतव्रता आदित्या इषिरा आरे मत्कर्त रहसूरिवागः ।

शृण्वतो वो वरुण मित्र देवा भद्रस्य विद्वाँ अवसे हुवे वः ॥१॥

यूयं देवाः प्रमतिर्यूयमोजो यूयं द्वेषांसि सनुतर्युयोत ।

अभिक्षत्तारो अभि च क्षमध्वमद्या च नो मृळयतापरं च ॥२॥

किमू नु वः कृणवामापरेण किं सनेन वसव आप्येन ।

यूयं नो मित्रावरुणादिते च स्वस्तिमिन्द्रामरुतो दधात ॥३॥

हये देवा यूयमिदापय स्थ ते मृळत नाधमानाय मह्यम् ।

मा वो रथो मध्यमवाळृते भून्मा युष्मावत्स्वापिषु श्रमिष्म ॥४॥

प्र व एको मिमय भूर्यागो यन्मा पितेव कितवं शशास ।

आरे पाशा आरे अघानि देवा मा माधि पुत्रे विमिव ग्रभीष्ट ॥५॥

अर्वाञ्चो अद्या भवता यजत्रा आ वो हार्दि भयमानो व्ययेयम् ।

त्राध्वं नो देवा निजुरो वृकस्य त्राध्वं कर्तादवपदो यजत्राः ॥६॥

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।

मा रायो राजन्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥७॥

## सायणभाष्यम्

' धृतव्रताः ' इति सप्तर्चं सप्तमं सूक्तं गार्त्समदस्य कूर्मस्य गृत्समदस्य वा आर्षं त्रैष्टुभं वैश्वदेवम् । तथा चानुक्रान्तं-

धृतव्रताः सप्त वैश्वदेवम्' इति । गतो विनियोगः ।।

धृतव्रता आदित्या इषिरा आरे मत्कर्त रहसूरिवागः ।

शृण्वतो वो वरुण मित्र देवा भद्रस्य विद्वाँ अवसे हुवे वः ॥
१

धृतऽव्रताः । आदित्याः । इषिराः । आरे । मत् । कर्त ।
रहसूःऽइव । आगः ।

शृण्वतः । वः । वरुण । मित्र । देवाः । भद्रस्य । विद्वान् ।
अवसे । हुवे । वः ॥१

धृतऽव्रताः । आदित्याः । इषिराः । आरे । मत् । कर्त ।
रहसूःऽइव । आगः ।

शृण्वतः । वः । वरुण । मित्र । देवाः । भद्रस्य । विद्वान् । अवसे । हुवे । वः ॥१

हे धृतव्रताः धृतकर्माणः आदित्याः अदितेः पुत्राः इषिराः गमनशीलाः सर्वैरभ्येषणीयाः प्रार्थनीया वा हे विश्वेदेवाः मदारे मत्तो दूरदेशे आगः विहितानुष्ठानादिजनितं पापं कर्त कुरुत करोतेश्छान्दसो विकरणस्य लुक् तप्तनप्तनथनाश्चेति तवादेशः तत्र दृष्टान्तः- रहसूरिव रहसि अन्यैरज्ञाते प्रदेशे सूयत इति रहसूः व्यभिचारिणी सा यथा गर्भं पातयित्वा दूरदेशे परित्यजति तद्वत् हे वरुण मित्र देवाः वो युष्मदीयस्य भद्रस्य युष्माभिः करणीयं श्रेयो विद्वान् जानन्नहं शृण्वतः मत्कृतानि स्तोत्राणि श्रोत्रेण जानतो वो युष्मान् अवसे रक्षणार्थं हुवे आह्वयामि ॥ १ ॥

यू॒यं दे॑वा॒ः प्रम॑तिर्यू॒यमोजो॑ यू॒यं द्वेषां॑सि सनु॒तर्यु॑योत ।

अ॒भि॒क्ष॒त्तारो॑ अ॒भि च॒ क्षमं॑ध्वम॒द्या च॑ नो मृ॒ळयं॑ताप॒रं च॑ ॥
२

यू॒यम् । दे॒वा॒ः । प्रऽमं॑तिः । यू॒यम् । ओजः॑ । यू॒यम् ।
द्वेषां॑सि । स॒नु॒तः । यु॒यो॒त॒ ।

अ॒भि॒ऽक्ष॒त्तारः॑ । अ॒भि । च॒ । क्षमं॑ध्वम् । अ॒द्य । च॒ । न॒ः ।
मृ॒ळयं॑त । अ॒प॒रम् । च॒ ॥२

यूयम् । देवाः । प्रऽमतिः । यूयम् । ओजः । यूयम् ।
द्वेषांसि । सनुतः । युयोत ।

अभिऽक्षत्तारः । अभि । च । क्षमध्वम् । अद्य । च । नः ।
मृळयत । अपरम् । च ॥२

हे देवाः प्रमतिः प्रकृष्टा मतिर्यस्य पित्रादेस्तादृशोपि
यूयमेव तथा ओजो बलमपि यूयमेव अपि च यूयं द्वेषांसि
द्वेष्टृणि रक्षःपिशाचादीनि सनुतरित्यव्ययम्

अन्तर्हितनामैतत् अन्तर्हिते प्रदेशे युयोत पृथकुरुत् यु मिश्रणामिश्रणयोः छान्दसःशपःश्लुः पूर्ववत्तस्यतबादेशः अभिक्षत्तारः अभितः शत्रूणां हिंसितारो यूयं अभिचक्षमध्वं अभिभवत च शत्रून् अद्यास्मिन्दिने च नोस्मान्मृळयत सुखयत अपरं च अपरमपि कालं आगामिन्यपिकाले अस्मान्मृळयत ॥२॥

कि॒मू नु वः॑ कृणवा॒माप॑रेण॒ किं सने॑न वसव॒ आप्ये॑न ।

यू॒यं नो॑ मित्रावरुणादिते च स्व॒स्तिमिं॑न्द्रामरुतो दधात ॥३

किम् । ऊ॒ इति॑ । नु । व॒ः । कृ॒ण॒वा॒म॒ । अप॑रेण । किम् । सने॑न । व॒स॒व॒ः । आप्ये॑न ।

यू॒यम् । न॒ः । मि॒त्रा॒व॒रु॒णा॒ । अ॒दि॒ते॒ । च॒ । स्व॒स्तिम् । इ॒न्द्रा॒म॒रु॒त॒ः । द॒धा॒त॒ ॥३

किम् । ऊं इति । नु । वः । कृणवाम । अपरेण । किम् । सनेन । वसवः । आप्येन ।

यूयम् । नः । मित्रावरुणा । अदिते । च । स्वस्तिम् । इन्द्रामरुतः । दधात ॥३

हे देवा: वो युष्माकं नु अद्येदानीं किमु कृणवाम किं खलु कर्तुं शक्नवाम न किमपीत्यर्थ: तथा अपरेण अपरकालभाविना कर्मणा किं कर्तुं शक्ताः तथा हे वसवो वासयितारो देवाः सनेन सनातनेन आप्येन आप्तव्येन कर्मणा युष्माकं किं कर्तुं शक्ताः सर्वदापि युष्मदनुगुणं परिचरणं कर्तुं न शक्ता इत्यर्थ: हे मित्रावरुणौ हे अदिते हे इन्दामरुतः देवताद्वन्द्वे चेति पूर्वपदस्यानङ् ते च सर्वे यूयं स्वस्ति अविनाशं नोस्मभ्यं दधात धत्त प्रयच्छत लोटितस्यतबादेशेङित्त्वाभावेनातोलोपाभावः ॥ ३ ॥

ह॒ये दे॑वा यू॒यमि॑दा॒पयः॑ स्थ॒ ते मृ॑ळत॒ नाध॑मानाय॒ मह्य॑म् ।

मा वो॒ रथो॑ मध्य॒मवाळृ॒ते भू॒न्मा यु॒ष्माव॑त्स्वा॒पिषु॑ श्रमिष्म ॥४

ह॒ये । दे॒वा॒ः । यू॒यम् । इत् । आ॒पयः॑ । स्थ॒ । ते । मृ॒ळ॒त॒ । नाध॑मानाय । मह्य॑म् ।

मा । व॒ः । रथः॑ । म॒ध्य॒म॒ऽवाट् । ऋ॒ते । भू॒त् । मा । यु॒ष्माव॑त्ऽसु । आ॒पिषु॑ । श्र॒मि॒ष्म॒ ॥४

हये । देवाः । यूयम् । इत् । आपयः । स्थ । ते । मृळत । नाधमानाय । मह्यम् ।

मा । वः । रथः । मध्यमऽवाट् । ऋते । भूत् । मा । युष्मावत्ऽसु । आपिषु । श्रमिष्म ॥४

हये देवाः छान्द्सोवर्णोपजनः हे देवाः यूयमित् यूयमेव आापयः धनस्य प्रापयितारो बन्धवः स्थ भवथ ते यूयं नाधमानाय अभिमतं फलं याचमानाय मह्यं स्तोत्रे मृळत सुखयत तथा वो युष्माकं रथः ऋतेस्मदीये यज्ञे निमित्तभूते मध्यमवाट्मा भूत् मध्यमेन मन्दगमनेन वाहको मा भूत् शीघ्रं युष्मान्वहत्वित्यर्थः वयं युष्मावत्सु युष्मत्सदृशेष्वापिषु बन्धुषु सत्सु मा श्रमिष्म श्रान्ता मा भूम वतुप्प्रकरणेयुष्मद्स्मद्भ्यां छन्दसि सादृश्यउपसंख्यानमिति वतुप् आसर्वनाम्न इत्यात्वम॥ ४ ॥

प्र व॒ एकों मिमय॒ भूर्यागो॒ यन्मां पि॒तेवं कित॒वं शंशा॒स ।

आ॒रे पाशां आ॒रे अ॒घानिं देवा॒ मा माधिं पु॒त्रे विमिंव ग्रभीष्ट ॥५

प्र । व॒ः । एकः॑ । मि॒म॒य॒ । भूरिं॑ । आगः॑ । यत् । मा॒ ।
पि॒ताऽइं॑व । कि॒त॒वम् । श॒शा॒स ।

आ॒रे । पाशाः॑ । आ॒रे । अ॒घानिं॑ । दे॒वा॒ः । मा । मा॒ । अधिं॑
। पु॒त्रे । विम्ऽइं॑व । ग्र॒भी॒ष्ट॒ ॥५

प्र । वः । एकः । मिमय । भूरि । आगः । यत् । मा ।
पिताऽइव । कितवम् । शशास ।

आरे । पाशाः । आरे । अघानि । देवाः । मा । मा । अधि
। पुत्रे । विम्ऽइव । ग्रभीष्ट ॥५

हे देवाः वो युष्माकं मध्ये अहमेकः सन् भूरि बहुलं आगः पापं प्रमिमय अहं प्रकर्षेण हिंसिषं कथमस्माकं मध्ये त्वमेव इति चेदुच्यते-यद्यस्मात् मा मां पितेव कितवं यथा अपथप्रवृत्तं पुत्रं पितानुशास्ति तथा शशास अनुशिष्टं च कृढ्वे शासु अनुशिष्टावित्यस्माल्लिटि मध्यमस्य रूपम्

अपि च हे देवाः युष्मदीयाः पाशा: आरे अस्मत्तो दूरदेशे सन्तु अघानि पापानि च आरे सन्तु मा मा अधिपुत्रे अधि:सप्तम्यर्थानुवादी पुत्रे पश्यति सति पितरं संतं विमिव पक्षिणमिव व्याधः मा ग्रभीष्ट मा गृह्णीध्वम् माङिलुङि हग्रहोर्भ इति भत्वम् ॥ ५ ॥

अ॒र्वाञ्चो॑ अ॒द्या भ॑वता यजत्रा॒ आ वो॒ हार्दि॒ भय॑मानो व्ययेयम् ।

त्राध्वं॑ नो देवा नि॒जुरो॒ वृक॑स्य॒ त्राध्वं॑ क॒र्तादं॑व॒पदो॑ यजत्राः ॥६

अ॒र्वाञ्चः॑ । अ॒द्य । भ॒व॒त॒ । य॒ज॒त्रा॒ः । आ । व॒ः । हार्दि॑ । भय॑मानः । व्य॒ये॒य॒म् ।

त्राध्वंम् । न॒ः । दे॒वा॒ः । नि॒ऽजुर॑ः । वृक॑स्य । त्राध्वंम् ।
क॒र्तात् । अ॒व॒ऽपद॑ः । य॒ज॒त्रा॒ः ॥६

अर्वाञ्चः । अद्य । भवत । यजत्राः । आ । वः । हार्दि ।
भयमानः । व्ययेयम् ।

त्राध्वम् । नः । देवाः । निऽजुरः । वृकस्य । त्राध्वम् ।
कर्तात् । अवऽपदः । यजत्राः ॥६

हे यजत्राः यष्टव्या देवाः अद्येदानीमर्वाञ्चोस्मदभिमुखा भवत वो युष्माकं हार्दि हृद्यवस्थितं रक्षणं भयमानो बिभ्यदहं आव्ययेयं आभिमुख्येन प्राप्नुयाम् व्ययगतौ भौवादिकः हे देवाः वृकस्य तस्करस्य आरण्यशुनो वा संबन्धिनः निजुरो निहननात् जूरीहिंसार्थः अस्मात्संपदादिलक्षणो भावे क्विप् छान्दसो ह्रस्वः नोस्मान् त्राध्वं त्रायध्वम् तथा हे यजत्राः अवपदः आपदः कर्तात्कर्तुः सकाशात्त्राध्वं त्रायध्वम् ॥ ६ ॥

माहं म॒घोनों वरुण प्रि॒यस्यं भूरि॒दाव्न॒ आ विंद॒ं शूनंमा॒पेः ।

मा रा॒यो रांजन्सु॒यमा॒दवं स्थां बृ॒हद्वंदेम वि॒दथें सु॒वीराः॑ ॥७

मा । अ॒हम् । म॒घोनः॑ । व॒रु॒ण॒ । प्रि॒यस्यं । भू॒रि॒ऽदाव्नः॑ ।
आ । वि॒द॒म् । शूनंम् । आ॒पेः ।

मा । रा॒यः । रा॒ज॒न् । सु॒ऽयमांत् । अवं । स्था॒म् । बृ॒हत् ।
व॒दे॒म॒ । वि॒दथें । सु॒ऽवीराः॑ ॥७

मा । अहम् । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः ।
आ । विदम् । शूनम् । आपेः ।

मा । रायः । राजन् । सुऽयमात् । अव । स्थाम् । बृहत् ।
वदेम । विदथे । सुऽवीराः ॥७

हे वरुण मघोनो धनवतः प्रियस्यानुकूलस्य भूरिदावः भूरेर्बहुलस्य दातुरहं मा आविदं मा आवेद्यानि अविद्नं विज्ञापनं मा करवाणि किंतदनावेद्यं आपेर्ज्ञातेः शूनं शून्यं दारिद्र्यम् वर्णलोपश्छान्दसः यद्वा शूनं गतं प्राप्तं दारिद्र्यम् टुओश्विगतिवृद्ध्योः श्वीदितोनिष्ठायामितीट्प्रतिषेधः यजादित्वात्संप्रसारणम् ओदितश्चेति नकारः वृषादित्वादाद्युदात्तत्वम् एतदुक्तं भवति अस्मदीयाः पुत्राद्यः क्षुधिता इति प्रभुसमीपेभिधाय याचमानो मा भूवमिति हे राजन्सुयमात् सुष्ठु नियम्यतेनेन पुरुषो गृह इति सुयमः ईषद्दुःसुष्वितिखल् तादृशाद्रायो धनान्मावस्थां अवयुत्य स्थितो मा भूवं वयं सुवीराः शोभनपुत्रा विदथे यज्ञे गृहे वा वर्तमानाः सन्तो बृहत् प्रौढं स्तोत्रं वदेम उच्चारयाम॥१७॥

विश्वेदेवाः उपरि पौराणिकाः संदर्भाः

विश्वेदेवाः उपरि वैदिकाः संदर्भाः

**टिप्पणी**



*कर्णाटकप्रदेशे प्राचीनमन्दिरोपरि ओम् चिह्नम्*

सूक्तस्य देवतारूपेण विश्वेदेवानां उल्लेखमस्ति। सोमयागे सुत्यादिवसे त्रयाणां सवनानां सम्पादनं भवति - प्रातःसवनम्, माध्यन्दिनसवनम् एवं

तृतीयसवनम्। प्रातःसवनस्य अधिपतिः वसवः/ ब्रह्मा भवन्ति, माध्यन्दिनस्य रुद्राः/इन्द्रः एवं तृतीयस्य आदित्याः/विश्वेदेवाः(शतपथब्राह्मणम् १४.१.१.१५)। वर्तमाने संदर्भे, कूर्मस्य ऋषेः त्रयाः सूक्ताः सन्ति - २.२७ सूक्तं आदित्यदेवताकम्, २.२८ सूक्तं वरुणदेवताकं एवं २.२९ विश्वेदेवाः देवताकम्। यदि २.२९ सूक्तस्य देवता विश्वेदेवाः सन्ति, तर्हि किं अयं सम्भवमस्ति यत् अयं सूक्तं तृतीयसवनस्य प्रतीकमस्ति (यदि अयं तृतीयसवनस्य प्रतीकं भवेत्, तर्हि पूर्वौ सूक्तौ प्रातः एवं माध्यन्दिनस्य प्रतीकौ भवेताम्)। तृतीयसवनस्य किं वैशिष्ट्यम् अस्ति। एकः सुझावमस्ति यत् प्रातःसवनस्य सम्बन्धं ओंकारस्य अ मात्रातः अस्ति, माध्यन्दिनस्य उ मात्रातः एवं तृतीयस्य म मात्रातः। अ मात्रायाः अधिपतिः ब्रह्मा अस्ति। तस्य कार्यं सृष्टिकरणं, सृष्ट्यां यत्र - यत्र न्यूनता अस्ति, तस्य

पूरणं( कुम्भकप्राणायामे श्वासस्य पूरणम्)। उ मात्रायाः अधिपतिः विष्णुरस्ति। तस्य कार्यं जगतः प्रतिष्ठाकरणं अस्ति। यत्र - यत्र ऊर्जायाः क्षयं अस्ति, तस्य निरोधम्। कुम्भकप्राणायामस्य शब्दे - श्वासस्य धारणम्। म मात्रायाः अधिपतिः रुद्रः अस्ति। तस्य कार्यं अवशिष्ट, अपशिष्ट ऊर्जायाः बहिः क्षेपणं विसर्जनमस्ति। कुम्भकस्य शब्दानुसारेण अयं रेचकमस्ति। प्रस्तुते सूक्ते एते वैशिष्ट्याः केषां रूपेषु प्रकटीभवन्ति, अयं अन्वेषणीयः।

अस्य सूक्तस्य ऋषिः कूर्मः अस्ति। कूर्मोपरि मन्दराचलं स्थापयित्वा ततः समुद्रमन्थनस्य आख्यानं विस्मर्तव्यं नास्ति। किं अयं संभवमस्ति यत् अयं सूक्तं असुरेषु मध्ये सुधायाः वितरणस्य प्रतीकमस्ति।

कर्मकाण्डे तृतीयसवनं ऋभुदेवताकं भवति। ऋभूणां (ऋभु, विभु, वाजः) उत्पत्तिः आसुरी अस्ति। अनेन प्रकारेण, तृतीयसवने आसुरी तत्त्वे देवत्वस्य स्थापना भवति। अन्यशब्देषु, आचारे देवत्वस्य प्रतिष्ठा भवति। अस्मिन् सूक्ते अस्य बहवः प्रमाणाः सन्ति। उदाहरणार्थं - यन्मा पितेव कितवं शशास। विश्वेदेवाः कितवस्य शासनं पितैव कुर्वन्ति।

मैत्रायणी संहितायां उल्लेखमस्ति - द्यावापृथिव्योर्दक्षिणं पार्श्वं विश्वेषां देवानामुत्तरम्- मै.सं. ३.१५.५। अयं संकेतमस्ति यत् यदा साधना ऊर्ध्वमुखी अस्ति, यदा ऊर्जायाः रोहणं पृथिवीतः द्युलोकपर्यन्तं ऋजुमार्गेण भवति, तत् दक्षिणं पक्षमस्ति। यदा ऊर्जायाः रोहणं दिशानां अनुदिशं भवति, तदा अयं विकासं विश्वे देवाः संज्ञकं भवति।

नारद पुराणे १.११९.५० पौष शुक्ल दशम्यां तिथ्यां विश्वेदेवानां पूजाकरणस्य निर्देशमस्ति। अयं संकेतमस्ति यत् यः वैशिष्ट्यम् दशम्याः तिथ्याः अस्ति, तदैव विश्वे देवानां अप्यस्ति। एकादश्याः दशम्यातः घोरविरोधमस्ति। कारणं। एकादश्यां देवानां स्थितिः दैशिकप्रकारा भवति। दशम्यां अदैशिकप्रकारा। विश्वेदेवाः देवानां समूहः अस्ति। किन्तु तस्य समूहस्य अनेकता अद्यापि वर्तते। अनेन कारणेन विश्वेदेवाः दैशिकाः(vector) न सन्ति।

# ऋग्वेदः सूक्तं २.३०

ऋग्वेदः - मण्डल २

← सूक्तं २.२९ | सूक्तं २.३० | सूक्तं २.३१ →

गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः

दे. इन्द्रः, ६ इन्द्रासोमौ,८ (पूर्वाऽर्धर्चस्य) सरस्वती, ९ बृहस्पतिः, ११ मरुतः। त्रिष्टुप्, ११ जगती

---

ऋतं देवाय कृण्वते सवित्र इन्द्रायाहिघ्ने न रमन्त आपः ।

अहरहर्यात्यक्तुरपां कियात्या प्रथमः सर्ग आसाम् ॥१॥

यो वृत्राय सिनमत्राभरिष्यत्प्र तं जनित्री विदुष उवाच ।

पथो रदन्तीरनु जोषमस्मै दिवेदिवे धुनयो यन्त्यर्थम् ॥२॥

ऊर्ध्वो ह्यस्थादध्यन्तरिक्षेऽधा वृत्राय प्र वधं जभार ।

मिहं वसान उप हीमदुद्रोत्तिग्मायुधो अजयच्छत्रुमिन्द्रः ॥३॥

बृहस्पते तपुषाश्नेव विध्य वृकद्वरसो असुरस्य वीरान् ।

यथा जघन्थ धृषता पुरा चिदेवा जहि शत्रुमस्माकमिन्द्र ॥४॥

अव क्षिप दिवो अश्मानमुच्चा येन शत्रुं मन्दसानो निजूर्वाः ।

तोकस्य सातौ तनयस्य भूरेरस्माँ अर्धं कृणुतादिन्द्र गोनाम् ॥५॥

प्र हि क्रतुं वृहथो यं वनुथो रध्रस्य स्थो यजमानस्य चोदौ ।

इन्द्रासोमा युवमस्माँ अविष्टमस्मिन्भयस्थे कृणुतमु लोकम् ॥६॥

न मा तमन्न श्रमन्नोत तन्द्रन्न वोचाम मा सुनोतेति सोमम् ।

यो मे पृणाद्यो ददद्यो निबोधाद्यो मा सुन्वन्तमुप गोभिरायत् ॥७॥

सरस्वति त्वमस्माँ अविड्ढि मरुत्वती धृषती जेषि शत्रून् ।

त्यं चिच्छर्धन्तं तविषीयमाणमिन्द्रो हन्ति वृषभं शण्डिकानाम् ॥८॥

यो नः सनुत्य उत वा जिघत्नुरभिख्याय तं तिगितेन विध्य ।

बृहस्पत आयुधैर्जेषि शत्रून्द्रुहे रीषन्तं परि धेहि राजन् ॥९॥

अस्माकेभिः सत्वभिः शूर शूरैर्वीर्या कृधि यानि ते कर्त्वानि ।

ज्योगभूवन्ननुधूपितासो हत्वी तेषामा भरा नो वसूनि ॥१०॥

तं वः शर्धं मारुतं सुम्नयुर्गिरोप ब्रुवे नमसा दैव्यं जनम् ।

यथा रयिं सर्ववीरं नशामहा अपत्यसाचं श्रुत्यं दिवेदिवे ॥११॥

## सायणभाष्यम्

' ऋतं देवाय ' इत्येकादशर्चमष्टमं सूक्तं गार्त्समदम् । अन्त्या जगती शिष्टास्त्रिष्टुभः । ' प्र हि क्रतुम् ' इत्येषा इन्द्रासोमदेवताका । ' सरस्वति त्वमस्मान् ' इत्यर्धर्चः सारस्वतः । ' यो नः सनुत्यः ' इत्येषा बार्हस्पत्या । अन्त्या मारुती । शिष्टा ऐन्द्र्यः । तथा चानुक्रान्तम्-' ऋतमेकादश जगत्यन्तं षष्ठ्यैन्द्रासोमी सरस्वति त्वमिति

सारस्वतोऽर्धर्चो यो नो बृहस्पतिस्तं वोऽन्त्या मारुती ' इति । गतो विनियोगः।।

ऋ॒तं दे॒वाय॑ कृण्व॒ते स॑वि॒त्र इन्द्रा॑याहि॒घ्ने न र॑मन्त॒ आपः॑ ।

अह॑रहर्यात्य॒क्तुर॒पां किया॒त्या प्र॑थ॒मः सर्ग॑ आसाम् ॥१

ऋ॒तम् । दे॒वाय॑ । कृ॒ण्व॒ते । स॒वि॒त्रे । इन्द्रा॑य । अ॒हि॒ऽघ्ने । न । र॒म॒न्ते॒ । आपः॑ ।

अहः॑ऽअहः । या॒ति॒ । अ॒क्तुः । अ॒पाम् । किय॑ति । आ । प्र॒थ॒मः । सर्गः॑ । आ॒सा॒म् ॥१

ऋतं । देवाय। कृण्वते । सवित्रे। इंद्राय । अहिऽघ्ने। न। रमंते । आपः । ।

अहःऽअहः । याति । अक्तुः । अपां। कियति । आ।
प्रथमः । सर्गः । आसां ॥१॥

ऋतमुदकं वृष्टिलक्षणं कृण्वते कुर्वते देवाय द्योतमानाय सवित्रे सर्वस्य प्रेरकायाहिघ्नेऽहिं वृत्रं हतवत इंद्राय यागार्थमापो न रमंते । तस्माद्धेतोर्भीत्या नोपरता भवंति । तस्माद्व्यत्ययेन चतुर्थी । अपि तु तासामपामक्तुः सेचक स्रोतो ऽहरहः प्रत्यहं याति । गच्छति । आसां प्रथमः सर्गः प्राथमिकं जन्म कियात्या । कियति काले निष्पन्नं । आकारः प्रश्ने । किंशब्द आक्षेपे । यावति काले ता अजायंत स कालः कियान् । किं परिमाणं तस्य कालस्य । न किमपि । नित्या एव हि ता इत्यर्थः ।

यो वृ॒त्राय॒ सिन॒मत्राभंरिष्य॒त्प्र तं जनिंत्री वि॒दुषं उवाच ।

प॒थो रदंन्ती॒रनु॒ जोषंमस्मै दि॒वेदिंवे॒ धुनंयो य॒न्त्यर्थंम् ॥२

यः । वृ॒त्राय॑ । सिन॑म् । अत्र॑ । अभ॑रिष्यत् । प्र । तम् ।
जनि॑त्री । वि॒दुषे॑ । उ॒वा॒च॒ ।

प॒थः । रद॑न्तीः । अनु॑ । जोष॑म् । अ॒स्मै॒ । दि॒वेऽदि॑वे ।
धुन॑यः । य॒न्ति॒ । अर्थ॑म् ॥२

यः । वृत्रायं । सिनं । अत्र । अभरिष्यत् । प्र। तं । जनित्री।
विदुषे । उवाच ।।

पथः । रदंतीः । अनु। जोषं । अस्मै। दिवेऽदिवे। धुनयः ।
यंति। अर्थं ॥२॥

यः पुरुषो वृत्रायासुराय सिनमन्नमत्र पाकस्थान
आहर्तुमभरिष्यत् संपादितवान् तं पुरुषं जनित्री
जनयित्रींद्रस्य मातादितिर्विदुषेऽभिज्ञायेंद्राय प्रोवाच ।
प्रोक्तवती । प्रवचनस्य हननार्थत्वात् तं वृत्रं हतवानिति
शेषः । अपि चास्मा

अस्येंद्रस्यानुजोषमनुकाममिच्छामनुसृत्य पथो मार्गान्
रदंतीर्विलिखंत्यो धुनयो नद्यो दिवेदिवे
प्रतिदिवसमर्थमर्तव्यं गंतव्यं समुद्रं प्रति यंति। गच्छंति ॥

ऊ॒र्ध्वो ह्यस्था॒दध्य॒न्तरि॒क्षेऽधां वृ॒त्राय॒ प्र व॒धं जंभार ।

मिहं॒ वसां॑न॒ उप॒ हीमदुं॑द्रोत्ति॒ग्मायुं॑धो अजय॒च्छत्रु॒मिन्द्रः॑ ॥३

ऊ॒र्ध्वः । हि । अस्थां॑त् । अधिं । अ॒न्तरिं॑क्षे । अधं । वृ॒त्रायं
। प्र । व॒धम् । ज॒भा॒र॒ ।

मिहं॑म् । वसां॑नः । उपं । हि । ई॒म् । अदुं॑द्रोत् ।
ति॒ग्मऽआं॑युधः । अ॒ज॒य॒त् । शत्रुं॑म् । इन्द्रः॑ ॥३

ऊर्ध्वः । हि। अस्थात् । अधि। अंतरिक्षे । अध । वृत्राय ।
प्र। वधं । जभार ।

मिहं। वसीनः । उप। हि। ईं। अदुद्रोत्। तिग्मऽआयुधः । अजयत्। शत्रुं। इंद्रः ॥३॥

हिर्हेतौ । यस्मादयं वृत्रोंऽतरिक्ष ऊर्ध्वः सन् सर्वमावृत्याध्यस्थात् । अधिष्ठितोऽभूत् । अध अतः कारणात् वृत्राय वृत्रं प्रति वधं हननसाधनं वज्रमिंद्रः प्रजभार । प्रचिक्षेप ॥ हृग्रहोर्भः ॥ स हि स खलु वृत्रो मिहं वृष्टेः सेक्तारं मेघं वसान आच्छादयन् ईमेनमिंद्रमुपादुद्रोत्। उपागमत् ॥ दु द्रु गतौ । लङि छांदसः शपः श्लुः ॥ तिग्मायुधस्तीक्ष्णायुध इंद्रः शत्रु शातयितारं तं वृत्रमजयत् । जितवान् । बृहस्पते तपुषानेव विध्य वृकंड्रसो असुरस्य वीरान् ।। य जघंर्थ धृषता पुरा चिदेवा जहि शत्रुमस्माकमिंद्र ॥४॥

बृहंस्पते तपुषाश्नेंव विध्य वृकंद्वरसो असुंरस्य वीरान् ।

यथा॑ ज॒घन्थ॑ धृष॒ता पु॒रा चिं॑दे॒वा जं॑हि॒ शत्रुं॑म॒स्माकं॑मिन्द्र ॥
४

बृहं॑स्पते । तपुं॑षा । अश्ना॑ऽइव । वि॒ध्य॒ । वृकं॑ऽद्वरसः ।
असुं॑रस्य । वी॒रान् ।

यथा॑ । ज॒घन्थ॑ । धृ॒ष॒ता । पु॒रा । चि॒त् । ए॒व । ज॒हि॒ ।
शत्रुं॑म् । अ॒स्माकं॑म् । इ॒न्द्र॒ ॥४

बृहस्पते । तपुषा । अश्नाऽइव । विध्य। वृकऽद्वरसः ।
असुरस्य । वीरान्।।

यथा जघंथ । धृषता। पुरा। चित् । एव। जहि। शत्रुं।
अस्माकं । इंद्र ॥४॥

हे बृहस्पते बृहतां परिवृढानां पालयितरिंद्र तपुषा तापकेन
दीप्तेन वज्रेणाश्नेव अशन्येव वृकद्वरसः
संवृतद्वारस्यासुरस्य वीरान् पुत्रान् । यदा

संवृतद्वारानसुरस्य वीरान् विध्य । ताडय ॥ वृणोतेः सृवृभूशुषिमुषिभ्यः किदिति कर्मणि कन्प्रत्ययः । द्रु गतौ । अस्मादौणादिकोऽसन्प्रत्ययः । वृकाणि संवृतानि द्वरांसि द्वाराणि येषां । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥ हे इंद्र पुरा चित् पुरापि धृषता धर्षकेण बलेन यथा जघंथ त्वं हतवान् एवैवमेवास्माकं शत्रुं जहि । नाशय ॥ हंतेर्ज इति हो जादेशः ।

अवं क्षिप दि॒वो अश्मांनमु॒च्चा येन॒ शत्रुं मन्दसा॒नो नि॒जूर्वाः ।

तो॒कस्यं सा॒तौ तनंयस्य॒ भूरें॒रस्माँ अ॒र्धं कृंणुतादिन्द्र॒ गोनांम् ॥५

अवं । क्षि॒प॒ । दि॒वः । अश्मांनम् । उ॒च्चा । येनं । शत्रुंम् । म॒न्द॒सा॒नः । नि॒ऽजूर्वाः ।

तो॒कस्यं । सा॒तौ । तनंयस्य । भूरेः॑ । अ॒स्मान् । अ॒र्धम् । कृ॒ण्वु॒ता॒त् । इ॒न्द्र॒ । गोनां॑म् ॥५

अव। क्षिप। दिवः । अश्मानं। उच्चा। येन। शत्रुं। मंदसानः । निऽजूर्वाः ।।

तोकस्य । सातौ। तनयस्य । भूरेः। अस्मान्। अर्धं। कृणुतात्। इंद्र। गोनां ॥५॥

हे इंद्र दिवो नभसः सकाशादश्मानमश्मवत्कठिनं वज्रमुच्चा उच्चैर्वर्तमानस्त्वमवक्षिप । अस्मदीयान् शत्रूनुद्दिश्यावस्तात्क्षिप । येन वज्रेण मंदसानः स्तोतृभिः स्तूयमानः सन् शत्रुं निजूर्वाः । न्यहिंसीः ॥ जुर्वी हिंसार्थः । लेट्यडागमः । तथा तोकस्य भूरेर्भर्तव्यस्य तनयस्य पौत्रस्य सातौ संभजने ॥ निमित्ते सप्तम्येषा ॥ संभजनार्थं । तथा हे इंद्र गोनां गवां संभजनार्थं चास्मान् अस्माकं ।

विभक्तिव्यत्ययः ॥ अर्धं समृद्धिं कृणुतात् । कुरु ॥ गोः पादांत इति गोशब्दस्यामो नुडागमः ॥ ॥१२॥

प्र हि क्रतुं वृहथो यं वंनुथो रध्रस्यं स्थो यजंमानस्य चोदौ ।

इन्द्रांसोमा युवमस्माँ अंविष्टमस्मिन्भयस्थें कृणुतमु लोकम् ॥६

प्र । हि । क्रतुंम् । वृहथः । यम् । वनुथः । रध्रस्यं । स्थः । यजंमानस्य । चोदौ ।

इन्द्रांसोमा । युवम् । अस्मान् । अविष्टम् । अस्मिन् । भयऽस्थें । कृणुतम् । ऊं इतिं । लोकम् ॥६

प्र। हि। क्रतुं । वृहथः । यं । वनुथः । रध्रस्य । स्थः । यजमानस्य। चोदौ।।

इंद्रासोमा। युवं । अस्मान्। अविष्टं । अस्मिन्।भयऽस्थे।
कृणुतं।ऊं इति। लोकं ॥६॥

हे इंद्रासोमौ यं वैरिणं वनुथो हिंसथः ॥
वनुष्यतिर्हंतिकर्मेति यास्कः ॥ तं क्रतुं द्वेषस्य कर्तारं प्र हि वृहथः । प्रकर्षेणोद्यच्छथः खलु । उन्मूलयथ इत्यर्थः । वृह्व उद्यमने तौदादिकः । तथा रध्रस्य राधकस्य यजमानस्य चोदौ शत्रूणां प्रेरकौ स्थः । भवथः । तथा हे इंद्रासोमौ युवं युवामस्मानविष्टं । अवतं । अस्मिन्भयस्थे भयस्थाने युद्धे ॥ घञर्थे कविधानमित्यधिकरणे कप्रत्ययः । मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं । तस्मिन्युद्धे लोकं भयरहितं स्थानं कृणुतं । कुरुतं । उ इति पादपूरणः ॥

न मां तम॒न्न श्रं॒म॒न्नोत तं॒न्द्र॒न्न वोंचाम॒ मा सुं॒नो॒तेति॒ सोमं॒म् ।

यो मे॑ पृ॒णाद्यो दद॒द्यो नि॒बोधा॒द्यो मां सु॒न्वन्त॒मुप॒ गोभि॒राय॑त् ॥७

न । मा॒ । त॒म॒त् । न । श्र॒म॒त् । न । उ॒त । त॒न्द्र॒त् । न । वो॒चा॒म॒ । मा । सु॒नो॒त॒ । इति॑ । सोम॑म् ।

यः । मे॒ । पृ॒णात् । यः । दद॑त् । यः । नि॒ऽबोधा॑त् । यः । मा॒ । सु॒न्वन्त॑म् । उप॑ । गोभिः॑ । आ । अय॑त् ॥७

न। मा। तमत्। न। श्रमत्। न। उत। तंद्रत्। न। वोचाम्। मा। सुनोत्। इति । सोमं ।

यः । मे। पृणात् । यः । ददत्। यः । निऽबोधात् । यः । मा। सुन्वंतं। उप। गीर्भिः । आ । अयत् ॥७॥

स इंद्रो मां न तमत् । न तमयतु । न ग्लपयतु । तथा न श्रमत् । श्रांतं मा करोतु । तमु ग्लानौ श्रमु तपसि खेदे च । अनयोहेतुमण्यंतयोर्लेट्यडागमः । छंदस्युभयथेति शप

आर्धधातुकत्वास्मेरनिटोति णिलोपः ॥ उत अपि च मां न तंद्रत् । न तंद्रयेत् । तंद्र्यालस्येन युक्तं मा करोतु ॥ तंद्रीशब्दात्तत्करोतीति णिच्। णाविष्ठवत्प्रातिपदिकस्येति टिलोपः । अन्यत् पूर्ववत् ॥ इंद्रयागाय सोमं मा सुनोत माभिषुणुतेत्यन्यान्यजमानान् प्रति न वोचाम । न ब्रवाम ॥ वक्तेश्छांदसो लुङ् । सुनोतेत्यत्र तप्तनप्तनथनाश्चेति तस्य तबादेशः । तस्य पित्त्वेन ङित्त्वाभावाद्गुणः ॥ य इंद्रो मे मम पृणात् कामान् पूरयेत् यश्च ददत् अभीष्टं फलं दद्यात् यश्च निबोधात् अस्मदीयं स्तोत्रं यागं वावगच्छेत् य इंद्रः सुन्वंतं सोममभिषुण्वंतं मामस्मभ्यं दातव्यैर्गोभिः सहोपायत् उपागच्छेत् । स इंद्र इति पूर्वत्रान्वयः ॥ पृणादित्यादिषु लेटयडागमः ॥

सरं॑स्वति॒ त्वम॒स्माँ अं॑विड्ढि म॒रुत्वं॑ती धृष॒ती जें॑षि॒ शत्रूं॑न् ।

त्यं चि॒च्छर्धं॑न्तं तविषी॒यमा॑ण॒मिन्द्रो॑ हन्ति वृष॒भं शण्डिं॑कानाम् ॥८

सरं॑स्वति । त्वम् । अ॒स्मान् । अ॒वि॒ड्ढि॒ । म॒रुत्वं॑ती । धृ॒ष॒ती । जे॒षि॒ । शत्रूं॑न् ।

त्यम् । चि॒त् । शर्धं॑न्तम् । त॒वि॒षी॒ऽयमा॑णम् । इन्द्रः॑ । ह॒न्ति॒ । वृ॒ष॒भम् । शण्डिं॑कानाम् ॥८

सरस्वति । त्वं । अस्मान् । अविड्ढि। मरुत्वती । धृषती । जेषि । शत्रून्।

त्यं । चित् । शर्धंतं । तविषीऽयमाणं । इंद्रः । हंति । वृषभं । शंडिकानां ॥८॥

हे सरस्वति सरणवति देवि त्वमस्मान् स्तोतृन् अविड्ढि। रक्ष ॥ रक्षार्थस्यावतेर्लेट्येतद्रूपं ॥ तथा मरुत्वती मरुद्भिर्युक्ता । मध्यमस्थाना हि वाक् सरस्वती मरुतश्च

मध्यमस्थानस्थाः । अतस्तद्वती सती धृषती धर्षयंती शत्रून् शातयितॄन् वैरिणो जेषि । जय ॥ जयतेश्छांदसः शपः श्लुः ॥ किंचायमिंद्रस्त्यं चित् तमप्यसुरं हंति । हतवान् । व्यत्ययेन भूतार्थे लट् । कीदृशं । शर्धंतं । प्रसहनशीलं ॥ शृधु प्रसहने ॥ तविषीयमाणं । तविषी बलमिवाचरंतं सर्वस्य भंजने शक्तं । शंडिकानां । शंडामर्कावसुरपुरोहितौ । तै० सं०६. ४. १०.१.। शंडवंश्यानां मध्ये वृषभं प्रधानं ॥

यो न॒ः सनुं॑त्य उ॒त वां॑ जिघ॒त्नुरं॑भि॒ख्याय॒ तं तिं॑गि॒तेनं॑ विध्य ।

बृहं॑स्पत॒ आयुं॑धैर्जेषि॒ शत्रूं॑न्द्रु॒हे रीषं॑न्त॒ं परिं॑ धेहि राजन् ॥९

यः । न॒ः । सनुं॑त्यः । उ॒त । वा॒ । जि॒घ॒त्नुः । अ॒भि॒ऽख्यायं॑ । तम् । ति॒गि॒तेनं॑ । वि॒ध्य॒ ।

बृहंस्पते । आयुंधैः । जे॒षि॒ । शत्रूंन् । द्रु॒हे । रिषंन्तम् । परिं । धे॒हि॒ । रा॒ज॒न् ॥९

यः । नः । सनुत्यः । उत । वा। जिघत्नुः । अभिऽख्याय । तं । तिगितेन । विध्य।

बृहस्पते । आयुधैः । जेषि । शत्रून्। द्रुहे। रिषंतं । परि। धेहि। राजन् ॥९॥

हे बृहस्पते यो नोऽस्माकं सनुत्यः । सनुतरित्यंतर्हितनाम । अंतर्हिते देशे भवश्चोरः ॥ सगर्भसयूथसनुताद्यत् ॥ उत वा अपि वा यो जिघत्नुर्जिघांसुर्भवति । तमभिख्याय संवीक्ष्य तिगितेन तीक्ष्णेनायुधेन विध्य । ताडय । तथास्मदीयान् शत्रून् आयुधैरायोधनसाधनैरिष्वादिभिर्जेषि। जय । तथा हे राजन् राजमान बृहस्पते द्रुहे द्रोग्ध्रे शत्रवे रिषंतं हिंसंतं वज्रं परिधेहि । परितो धारय । प्रक्षिपेत्यर्थः ।।

अ॒स्माके॑भि॒ः सत्व॑भिः शूर॒ शूरै᳚र्वी॒र्या᳚ कृधि॒ यानि॑ ते॒ कर्त्वा᳚नि ।

ज्योग॑भूव॒न्ननु॑धूपितासो ह॒त्वी तेषा॒मा भ॑रा नो॒ वसू॑नि ॥१०

अ॒स्माके॑भिः । सत्व॑ऽभिः । शू॒र॒ । शूरै᳚ः । वी॒र्या᳚ । कृ॒धि॒ । यानि॑ । ते॒ । कर्त्वा᳚नि ।

ज्योक् । अ॒भू॒व॒न् । अनु॑ऽधूपितासः । ह॒त्वी । तेषा॑म् । आ । भ॒र॒ । न॒ः । वसू॑नि ॥१०

अस्माकेभिः । सत्वऽभिः । शूर। शूरैः। वीर्या। कृधि। यानि । ते । कर्त्वानि।

ज्योक्। अभूवन्। अनुऽधूपितासः । हत्वी। तेषां । आ। भर। नः । वसूनि ॥१०॥

हे शूर शौर्यवन्निंद्र अस्माकेभिरास्माकीनैः सत्वभिः परेषां सादकैः शूरैः शीर्योपेतैर्भटैस्तानि वीर्या वीरकर्माणि कृधि कुरु यानि ते त्वया कर्त्वानि करणीयानि । कृत्यार्थे तवैकेनिति करोतेस्त्वन्प्रत्ययः । ज्योक् चिरकालमनुधूपितासो धूपायमानहृदया मदीयाः शत्रवोऽभूवन् । आसन्। हत्वी तान् हत्वा ॥ स्नात्व्यादयश्चेतीकारः । तेषां शत्रूणां वसुनि धनानि नोऽस्मभ्यमाभर । आहर॥

तं व॒ः शर्ध॒ं मारु॑तं सुम्न॒युर्गि॒रोप॑ ब्रुव॒े नम॑सा॒ दैव्य॒ं जन॑म् ।

यथा॑ र॒यिं सर्व॑वीर॒ं नशा॑महा अपत्य॒साच॒ं श्रुत्य॑ं दि॒वेदि॑वे ॥ ११

तम् । व॒ः । शर्ध॑म् । मारु॑तम् । सु॒म्न॒ऽयुः । गि॒रा । उप॑ । ब्रु॒वे॒ । नम॑सा । दैव्य॑म् । जन॑म् ।

यथा॑ । र॒यिम् । सर्व॑ऽवीरम् । नशा॑महै । अ॒प॒त्य॒ऽसाचं॑म् । श्रुत्यं॑म् । दि॒वेऽदिं॑वे ॥११

तं ।वः । शंर्धं । मारुतं । सुम्नऽयुः । गिरा। उप। ब्रुवे। नर्मसा। दैव्यं। जनं ।

यथा। रयिं । सर्वऽवीरं। नशामहै। अपत्यऽसाचं । श्रुत्यं । दिवेऽदिवे ॥११॥

हे मरुतो वो युष्माकं शर्धं बलं मारुतं मरुत्समूहरूपं दैव्यं देवेनेंद्रेण संबद्धं जनं प्रादुर्भूतं एवंगुणविशिष्टं बलं नमसा नमस्कारेण हविषा वा गिरा स्तोत्रेणोपब्रुवे । स्तौमि । यथा येन प्रकारेण वयं सर्ववीरं सर्वैर्वीरैर्विशेषेण शत्रूणां प्रेरकैर्भटैरुपेतमपत्यसाचमपत्यैरपतनहेतुभूतैः पुत्रादिभिरुपेतं श्रुत्यं श्रवणीयं प्रशस्यभूतं रयिं दिवेदिवे प्रतिदिवसं नशामहै । व्याप्नवाम ॥ नशतिर्व्याप्तिकर्मा । लेट्यडागमः । वैतोऽन्यत्रेत्यैकारः ॥ ॥ १३॥

२.३०.९ यो नः इति

धृतव्रता वैश्वदेवम् शतमैन्द्रं परं तु यत् ।

प्र हि क्रतुमिति त्वस्याम् इन्द्रासोमौ सह स्तुतौ ।।८४।।

सरस्वती त्वमित्यस्मिन्न् अर्धर्चं मध्यमा तु वाक् ।

बृहस्पतिस्तुतिर्यो नस् तं व ऋङ् मरुतां स्तुतिः ।।बृहद्देवता ४.८५।।

# ऋग्वेदः सूक्तं २.३१

ऋग्वेदः - मण्डल २
← सूक्तं २.३० | सूक्तं २.३१ | सूक्तं २.३२ →

गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः

## दे. विश्वे देवाः। जगती, ७ त्रिष्टुप्

अस्माकं मित्रावरुणावतं रथमादित्यै रुद्रैर्वसुभिः सचाभुवा ।

प्र यद्वयो न पप्तन्वस्मनस्परि श्रवस्यवो हृषीवन्तो वनर्षदः ॥१॥

अध स्मा न उदवता सजोषसो रथं देवासो अभि विक्षु वाजयुम् ।

यदाशवः पद्याभिस्तित्रतो रजः पृथिव्याः सानौ जङ्घनन्त पाणिभिः ॥२॥

उत स्य न इन्द्रो विश्वचर्षणिर्दिवः शर्धेन मारुतेन सुक्रतुः ।

अनु नु स्थात्यवृकाभिरूतिभी रथं महे सनये वाजसातये ॥३॥

उत स्य देवो भुवनस्य सक्षणिस्त्वष्टा ग्नाभिः सजोषा जूजुवद्रथम् ।

इळा भगो बृहद्दिवोत रोदसी पूषा पुरंधिरश्विनावधा पती ॥४॥

उत त्ये देवी सुभगे मिथूदृशोषासानक्ता जगतामपीजुवा ।

स्तुषे यद्वां पृथिवि नव्यसा वच स्थातुश्च वयस्त्रिवया उपस्तिरे ॥५॥

उत वः शंसमुशिजामिव श्मस्यहिर्बुध्न्योऽज एकपादुत ।

त्रित ऋभुक्षाः सविता चनो दधेऽपां नपादाशुहेमा धिया शमि ॥६॥

एता वो वश्म्युद्यता यजत्रा अतक्षन्नायवो नव्यसे सम् ।

श्रवस्यवो वाजं चकानाः सप्तिर्न रथ्यो अह धीतिमश्याः ॥७॥

## सायणभाष्यम्

' अस्माकम् ' इति सप्तर्चं नवमं सूक्तं गृत्समदस्यार्षं वैश्वदेवम् । अन्त्या त्रिष्टुप् शिष्टा जगत्यः । तथा चानुक्रान्तम्-' अस्माकं सप्त वैश्वदेवं त्रिष्टुबन्तम् ' इति । विनियोगो लैङ्गिकः ।।

अ॒स्माकं॑ मित्रावरुणावतं॒ रथ॑मादि॒त्यै रु॒द्रैर्वसु॑भिः सचा॒भुवा॑ ।

प्र यद्वयो॒ न पप्त॒न्वस्म॑न॒स्परि॑ श्रव॒स्यवो॒ हृषी॑वन्तो वन॒र्षदः॑ ॥१

अ॒स्माक॑म् । मि॒त्रा॒व॒रु॒णा॒ । अ॒व॒त॒म् । रथ॑म् । आ॒दि॒त्यैः । रु॒द्रैः । वसु॑ऽभिः । स॒चा॒ऽभुवा॑ ।

प्र । यत् । वयः॑ । न । पप्त॑न् । वस्म॑नः । परि॑ । श्र॒व॒स्यवः॑ । हृषी॑ऽवन्तः । व॒न॒ऽसदः॑ ॥१

अस्माकं । मित्रावरुणा । अवतं । रथं। आदित्यैः। रुद्रैः।
वसुऽभिः । सचाऽभुवा।

प्र। यत्। वयः। न । पप्तन्। वस्मनः। परि। श्रवस्यवः ।
हृषीऽवंतः। वनऽसदः ॥१॥

मित्रावरुणा हे मित्रावरुणौ
आदित्यैर्धात्रर्यमादिभिर्द्वादशभिः रुद्रैरेकादशसंख्याकैः
वसुभिर्धरो ध्रुव इत्यादिभिरष्टसंख्याकैः एवं त्रिभिर्देवगणैः
सचाभुवा सह भवंतौ सह वर्तमानौ युवामस्माकं
रथमन्नलाभाय प्रवृत्तमवतं । यद्यदास्मदीया रथा
वस्मनस्परि ॥ वसंत्यस्मिन्निति वस निवासस्थानं ।
औणादिको मनिन् ॥ तस्मात्स्थानात्परि उपरि देशांतरे ॥
पंचम्याः परावध्यर्थ इति सत्वं । अध्यर्थ उपर्यर्थ इति वृत्तिः
॥ वयो न पक्षिण इव प्रपप्तन् । प्रपतंति । प्रकर्षेण
गच्छंति ॥ पतेश्छांदसे लुङि लृदित्वात् च्लेरङादेशः ।

पतः पुमिति पुमागमः । कीदृशा वयः। श्रवस्यवो ऽन्नकामाः । हृषीवंतः प्राप्तहर्षाः । वनर्षदो वने वृक्षादौ निषण्णाः ॥ सांहितिकश्छांदसो रेफोपजनः ॥

अधं स्मा न॒ उदंवता सजोषसो॒ रथं देवासो अ॒भि वि॒क्षु वांज॒युम् ।

यदा॒शव॒ः पद्यांभि॒स्तित्रंतो॒ रजः पृथि॒व्याः सानौ॒ जङ्घंनन्त पा॒णिभिः ॥२

अधं । स्म॒ । न॒ः । उत् । अ॒व॒त॒ । स॒ऽजो॒ष॒स॒ः । रथंम् । दे॒वा॒स॒ः । अ॒भि । वि॒क्षु । वा॒ज॒ऽयुम् ।

यत् । आ॒शवः । पद्यांभिः । तित्रंतः । रजः । पृथि॒व्याः । सानौं । जङ्घंनन्त । पा॒णिऽभिः ॥२

अध। स्म। नः। उत्। अवत। सजोषसः। रथं । देवासः ।
अभि। विक्षु। वाजऽयुं ।

यत्। आशवः। पद्याभिः। तित्रतः। रजः। पृथिव्याः। सानौ।
जंघनंत। पाणिऽभिः ॥२॥

हे सजोषसः समानं प्रीयमाणा देवासो देवा अध अधुना नोऽस्माकं वाजयुं वाजमन्नं कामयमानं गतिविशेषयुक्तं वा रथं विक्षु प्रजासु जनपदेष्वभिमुखमुदवत् । उदगमयत ॥ अवतिरत्र गत्यर्थः । यद्यदास्मिन्न्रथे युक्ता आशवो व्यापनशीला अश्वाः पद्याभिः पादसाध्याभिर्गतिभी रजो रंजकं मार्गं तित्रतस्तरंतः ॥ तरतेः शतरि बहुलं छंदसीति शपः श्लुः । बहुलं छंदसीत्यभ्यासस्येत्वं । अभ्यस्तानामादिरित्याद्युदात्तत्वं ॥ पृथिव्याः प्रथिताया भूमेः सानौ समुच्छ्रिते प्रदेशे पाणिभिः पाण्युपलक्षितैः पादैर्जंघनंत । अत्यर्थं गच्छंति ॥ हंतेर्यङ्लुगंताच्छांदसो

लङ् । व्यत्ययेनात्मनेपदं । बहुलं छंदसीति शपो लुगभावः ॥

उ॒त स्य न॒ इन्द्रो॑ वि॒श्वच॑र्षणिर्दि॒वः शर्धे॑न॒ मारु॑तेन सु॒क्रतुः॑ ।

अनु॒ नु स्थां॑त्यवृ॒काभि॑रू॒तिभी॒ रथं॑ म॒हे स॒नये॒ वाजं॑सातये ॥३

उ॒त । स्यः । न॒ः । इन्द्रः॑ । वि॒श्वऽच॑र्षणिः । दि॒वः । शर्धे॑न । मारु॑तेन । सु॒ऽक्रतुः॑ ।

अनु॑ । नु । स्था॒ति॒ । अ॒वृ॒काभिः॑ । ऊ॒तिऽभिः॑ । रथ॑म् । म॒हे । स॒नये॑ । वाजं॑ऽसातये ॥३

उत । स्यः । नः । इंद्रः । विश्वऽचर्षणिः । दिवः । शर्धेन । मारुतेन । सुऽक्रतुः ।

अनु । नु। स्थाति। अवृकाभिः। ऊतिऽभिः। रथं। महे। सनये। वाजऽसातये ॥३॥

उत अपि च विश्वचर्षणिर्विश्वस्य सर्वस्य द्रष्टा यद्वा विश्वे चर्षणयो मनुष्या यस्य परिचारकाः । अथवा विश्वे सर्वे लोकाश्चर्षणयो द्रष्टव्या येन । बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं ॥ मारुतेन मरुत्समूहरूपेण शर्धेन बलेन सह सुक्रतुः शोभनकर्मा शोभनप्रज्ञो वा स्य स इंद्रोऽवृकाभिर्हिंसकरहिताभिरूतिभी रक्षाभिः सहितः सन् दिवो द्युलोकादागत्य नु अद्य नोऽस्माकं रथमनुस्थाति । आनुगुण्येनाधितिष्ठतु ॥ छांदसः शपो लुक् । किमर्थं । महे सनये महते धनाय । तथा वाजसातये वाजस्यान्नस्य सातये संभजनार्थं ॥

उ॒त स्य दे॒वो भुव॑नस्य स॒क्षणि॒स्त्वष्टा॒ ग्नाभिः॑ स॒जोषां

त्रि॒तो न यान्पञ्च॒ होतॄ॑न॒भिष्ट॑य आव॒वर्त॒दव॑राञ्च॒क्रियाव॑से ॥१४

तान् । इ॒या॒नः । महि॑ । वरू॑थम् । ऊ॒तये॑ । उप॑ । घ॒ । इत् । ए॒ना । नम॑सा । गृ॒णी॒म॒सि॒ ।

त्रि॒तः । न । यान् । पञ्च॑ । होतॄ॑न् । अ॒भिष्ट॑ये । आ॒ऽव॒वर्त॑त् । अव॑रान् । च॒क्रिया॑ । अव॑से ॥१४

तान्। इयानः। महि। वरूथं। ऊतये। उप। घ। इत्। एना। नमसा। गृणीमसि।

त्रितः।न।यान्।पंच होतॄन्।अभिष्टये।आऽववर्तत्।अवरान्। चक्रिया।अवसे ॥१४॥

तान् मरुतो महि महद्वरूथं वरणीयं प्रशस्तं धनं तन्मरुत ऊतये रक्षणार्थमियान इयाना याचमाना वयं ॥ सुपां सुलुगिति जसः सुः ॥ एनानेन नमसा नमस्कारेण स्तोत्रेण

वोपेत् उपेत्य गृणीमसि । स्तुमः ॥ घेति पादपूरणः । एनेत्यत्र सुपां सुलुगिति तृतीयाया आजादेशः । नशब्दः समुच्चये ॥ त्रित ऋषिश्च यानेतान् मरुतः पंच होतॄन् अध्यात्मप्राणापानादिपंचवृत्त्यात्मना वर्तमानान् अत एव होमनिष्पादकान् अवरान् मुख्यानभिष्टये ऽभिलषितसिद्ध्यर्थं चक्रिया नाभिचक्रेणावसेऽवितुं संगंतुमाववर्तत् । स्वस्मान्निर्जिगमिषन्प्राणान् स्वात्माभिमुखमावर्तयत् । यद्वा चक्रियः ऋष्ट्याख्येनायुधेन युक्तान् अवसे स्तुत्यादिभिस्तर्पयितुमावर्तयत् । तान् स्तुम इति संबंधः ॥ ववर्तदिति वृतेर्ण्यंताल्लुङि चङि रूपं ॥

यया॑ र॒ध्रं पा॒रय॒थात्यंहो॒ यया॑ नि॒दो मु॒ञ्चथ॑ वन्दि॒तार॑म् ।

अ॒र्वाची॒ सा मं॑रुतो॒ या वं ऊ॒तिरो षु वा॒श्रेवं सुम॒तिर्जिंगातु ॥१५

ययां । र॒ध्रम् । पा॒रयंथ । अतिं । अंहः॑ । ययां । नि॒दः । मु॒ञ्चथं । व॒न्दि॒तारंम् ।

अ॒र्वाचीं । सा । म॒रु॒तः॒ । या । व॒ः । ऊ॒तिः । ओ इतिं । सु । वा॒श्राऽइंव । सु॒ऽम॒तिः । जि॒गा॒तु॒ ॥१५

यया। रध्रं। पारयथ । अति । अंहः । यया। निदः । मुंचथ। वंदितारं।

अर्वाची। सा। मरुतः । या। वः । ऊतिः । ओ इति । सु। वाश्राऽइव । सुऽमतिः । जिगातु ॥१५॥

हे मरुतो ययोत्या रध्रमाराधकं यजमानमंहः पापमति पारयथ । अतिक्रमयथ । ययोत्या वंदितारं स्तोतारं निदो निंदितुः शत्रोः सकाशोन्मुंचथ । मोचयथ । हे मरुतो वो

युष्मदीया योतिः सार्वाच्यस्मदभिमुखा भवतु । तथा सुमतिर्युष्मदीया शोभना मतिरनुग्रहात्मिका बुद्धिश्च वाश्रेव हंभांरवं कुर्वती धेनुरिव वत्सं सुष्ठु ओ जिगातु । एवं गच्छतु । अस्मान् प्रति सर्वथागच्छत्वित्यर्थः ॥ ॥ २१॥

# ऋग्वेदः सूक्तं २.३५

**ऋग्वेदः - मण्डल २**

← सूक्तं २.३४ | सूक्तं २.३५ | सूक्तं २.३६ →

गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः

## दे. अपांनपात्। त्रिष्टुप्।

उपेमसृक्षि वाजयुर्वचस्यां चनो दधीत नाद्यो गिरो मे ।

अपां नपादाशुहेमा कुवित्स सुपेशसस्करति जोषिषद्धि ॥१॥

इमं स्वस्मै हृद आ सुतष्टं मन्त्रं वोचेम कुविदस्य वेदत् ।

अपां नपादसुर्यस्य मह्ना विश्वान्यर्यो भुवना जजान ॥२॥

समन्या यन्त्युप यन्त्यन्याः समानमूर्वं नद्यः पृणन्ति ।

तमू शुचिं शुचयो दीदिवांसमपां नपातं परि तस्थुरापः ॥३॥

तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परि यन्त्यापः ।

स शुक्रेभिः शिक्वभी रेवदस्मे दीदायानिध्मो घृतनिर्णिगप्सु ॥४॥

अस्मै तिस्रो अव्यथ्याय नारीर्देवाय देवीर्दिधिषन्त्यन्नम् ।

कृता इवोप हि प्रसर्स्रे अप्सु स पीयूषं धयति पूर्वसूनाम् ॥५॥

अश्वस्यात्र जनिमास्य च स्वर्द्रुहो रिषः सम्पृचः पाहि सूरीन् ।

आमासु पूर्षु परो अप्रमृष्यं नारातयो वि नशन्नानृतानि ॥६॥

स्व आ दमे सुदुघा यस्य धेनुः स्वधां पीपाय सुभ्वन्नमत्ति ।

सो अपां नपादूर्जयन्नप्स्वन्तर्वसुदेयाय विधते वि भाति ॥७॥

यो अप्स्वा शुचिना दैव्येन ऋतावाजस्र उर्विया विभाति ।

वया इदन्या भुवनान्यस्य प्र जायन्ते वीरुधश्च प्रजाभिः ॥८॥

अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वो विद्युतं वसानः ।

तस्य ज्येष्ठं महिमानं वहन्तीर्हिरण्यवर्णाः परि यन्ति यह्वीः ॥९॥

हिरण्यरूपः स हिरण्यसंदृगपां नपात्सेदु हिरण्यवर्णः ।

हिरण्ययात्परि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै ॥१०॥

तदस्यानीकमुत चारु नामापीच्यं वर्धते नप्तुरपाम् ।

यमिन्धते युवतयः समित्था हिरण्यवर्णं घृतमन्नमस्य ॥११॥

अस्मै बहूनामवमाय सख्ये यज्ञैर्विधेम नमसा हविर्भिः ।

सं सानु मार्ज्मि दिधिषामि बिल्मैर्दधाम्यन्नैः परि वन्द ऋग्भिः ॥१२॥

स ईं वृषाजनयत्तासु गर्भं स ईं शिशुर्धयति तं रिहन्ति ।

सो अपां नपादनभिम्लातवर्णोऽन्यस्येवेह तन्वा विवेष ॥१३॥

अस्मिन्पदे परमे तस्थिवांसमध्वस्मभिर्विश्वहा दीदिवांसम् ।

आपो नप्त्रे घृतमन्नं वहन्तीः स्वयमत्कैः परि दीयन्ति यह्वीः ॥१४॥

अयांसमग्ने सुक्षितिं जनायायांसमु मघवद्भ्यः सुवृक्तिम् ।

विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥१५॥

# सायणभाष्यम्

' उपेम् ' इति पञ्चदशर्चं तृतीयं सूक्तं गार्त्समदं त्रैष्टुभम् अपांनपाद्देवताकम् । तथा चानुक्रान्तम्- ' उपेमपोनप्त्रीयम् ' इति । सूक्तविनियोगो लैङ्गिकः ।।

उपेंमसृक्षि वाज॒युर्व॑च॒स्यां चनों दधीत ना॒द्यो गिरों मे ।

अ॒पां नपा॑दाशु॒हेमा॑ कु॒वित्स सु॒पेश॑सस्करति॒ जोषिं॑ष॒द्धि ॥ १

उप॑ । ई॒म् । अ॒सृ॒क्षि॒ । वा॒ज॒ऽयुः । व॒च॒स्याम् । चनः॑ । द॒धी॒त॒ । ना॒द्यः । गिरः॑ । मे॒ ।

अ॒पाम् । नपा॑त् । आ॒शु॒ऽहेमा॑ । कु॒वित् । सः । सु॒ऽपेश॑सः । क॒र॒ति॒ । जोषि॑षत् । हि ॥१

उप। ईं। असृक्षि। वाजऽयुः । वचस्यां । चनः। दधीत। नाद्यः । गिरः। मे।

अपां। नपात्। आशुऽहेमा। कुवित्। सः। सुऽपेशसः। करति । जोषिषत्। हि ॥१॥

वाजयुर्वाजमन्नमात्मन इच्छन्नहमीमेनां वचस्यां वचसः स्तोत्रस्येच्छामुपासृक्षि । उपासृजामि । उत्पादयामि। अपां नपातं स्तोतुं प्रवृत्तोऽस्मीत्यर्थः ॥ सृजेश्छांदसो लुङ । लिङ्सिचावात्मनेपदेष्विति सिचः कित्त्वाद्गुणाभावः ॥ स च नाद्यो नदीनां शब्दकारिणीनां मेघस्थानामपां संबंधी आशुहेमा आशु शीघ्रं गंता ॥ हि गतावित्यस्मादन्येभ्योऽपि दृश्यंत इति मनिन् ॥ एवंभूतोऽपां नपात् अपां पौत्रस्थानीयः । अद्भ्य ओषधिवनस्पतयो जायंते ओषधिवनस्पतिभ्य एषोऽग्निर्जायत इति तत्पौत्रत्वं । एतत्संज्ञको देवो गिरः । गृणातीति गीः स्तोता । तस्य मे मम कुवित् । बहुनामैतत् । बहुलं चनोऽन्नं दधीत । दधातु । विदधातु । प्रयच्छत्वित्यर्थः । अपि चास्मान् सुपेशसः शोभनरूपान् शोभनालंकारान्वा करति । करोतु ॥

करोतेर्व्यत्ययेन शप् । कःकरत्करतिकृधिकृतेष्वनदितेः । पा० ८. ३.५०.। इति विसर्जनीयस्य सत्वं ॥ हि यस्मादयं देवो जोषिषत्। स्तोत्राणि सेवते तस्मादस्मानेवमनुगृह्णात्वित्यर्थः ॥ जुषी प्रीतिसेवनयोः । लेट्यडागमः । विकरणः सिए । इडागमश्च । हि चेति निघातप्रतिषेधः ॥

इ॒मं स्व॑स्मै हृ॒द आ सुत॑ष्टं॒ मन्त्रं॑ वोचेम कु॒विद॑स्य॒ वेद॑त् ।

अ॒पां नपा॑दसु॒र्य॑स्य म॒ह्ना विश्वा॑न्य॒र्यो भुव॑ना जजान ॥२

इ॒मम् । सु । अ॒स्मै॒ । हृ॒दः । आ । सुऽत॑ष्टम् । मन्त्र॑म् । वो॒चे॒म॒ । कु॒वित् । अ॒स्य॒ । वेद॑त् ।

अ॒पाम् । नपा॑त् । अ॒सु॒र्य॑स्य । म॒ह्ना । विश्वा॑नि । अ॒र्यः । भुव॑ना । ज॒जा॒न॒ ॥२

इमं । सु। अस्मै । हृदः । आ । सुऽतष्टं। मंत्रं। वोचेम । कुवित् । अस्य। वेदत् ।।

अपां। नपात् । असुर्यस्य । मह्ना। विश्वानि । अर्यः । भुवना। जजान ॥२॥

अस्मा अपांनपात्संज्ञकाय देवाय हृदो हृदयात् सुतष्टं सुष्टु निर्मितमिमं मंत्रं सुष्ठु आभिमुख्येन वोचेम । ब्रवाम । अस्यास्माभिरुक्तमिमं मंत्रं कुविद्वेदत्। बहुलं जानातु ॥ वेत्तेर्लेट्यडागमः । निपातैर्यद्यदिहंतेति निघातप्रतिषेधः ॥ किं स्तोत्रमिति चेदुच्यते । अर्यः स्वाम्यपांनपात्संज्ञको वैद्युतोऽग्निरसुर्यस्य । असुरः शत्रून् क्षेप्ता। तस्य स्वभूतस्य बलस्य मह्ना महिना महत्त्वेन विश्वानि सर्वाणि भुवना भुवनानि वृष्ट्युदकानि वृष्ट्युत्पादनेन भूतजातानि वा जजान । जनयामास ॥

अपोनप्त्रीये वसतीवरीसमीप एकधनासु प्राप्तासु समन्या यंतीत्येषानुवक्तव्या । सूचितं च । समन्या यंत्युप यंत्यन्या इति तीर्थदेशे । आ° ५.१.। इति ॥ सारस्वते च शस्त्रे यद्यप्सु शम्या निपतेत् तदानीमपोनप्त्रीयश्चरुः कार्यः । तत्रैषैव याज्या । सूचितं च । समन्या यंत्युपयंत्यन्या इत्यातः समानं सर्वेषां । आ° १२. ६.। इति ।

सम॒न्या यन्त्युपं यन्त्य॒न्याः संमा॒नमू॒र्वं न॒द्यः॑ पृणन्ति ।

तमू॒ शुचि॒ं शुचंयो दीदि॒वांसंम॒पां नपां॒तं परिं तस्थु॒रापः॑ ॥३

सम् । अ॒न्याः । यन्तिं । उपं । य॒न्ति॒ । अ॒न्याः । स॒मा॒नम् । ऊ॒र्वम् । न॒द्यः॑ । पृ॒ण॒न्ति॒ ।

तम् । ऊ॒ं इतिं । शुचिंम् । शुचंयः । दी॒दि॒ऽवांसंम् । अ॒पाम् । नपांतम् । परिं । त॒स्थु॒ः । आपः॑ ॥३

सं। अन्याः । यंति । उप। यंति। अन्याः । समानं । ऊर्वं । नद्यः । पृणंति।

तं । ऊं इति। शुचिं। शुचयः। दीदिऽवांसं। अपां। नपातं। परि।तस्थुः। आपः ॥३॥

अन्या व आपो सं यंति । भूम्या संगच्छंते। अन्याश्च पूर्वं तत्रावस्थिता उपयंति। उपगच्छंति । ताः सर्वा आपः समानं सह नद्यो नदीभूता ऊर्वं समुद्रमध्ये वर्तमानं वडवानलं पृणंति ॥ पृण प्रीणने तौदादिकः ॥ तमु तमेवापां नपातं शुचिं निर्मलं दीदिवांसं दीप्यमानं ॥ दीदेतिश्छांदसो दीप्तिकर्मा । लिटः क्वसुः । वस्वेकाजाद्धसामिति नियमादिडभावः । छंदसि वेति वक्तव्यमिति वचनाद्द्विर्वचनाभावः ॥ एवंभूतं शुचयः शुद्धा आपः परितस्थुः । परिवृत्य तिष्ठंति । एष हि वैद्युताग्निरूपेण मेघे वर्तमानोऽस्मानजीजनदिति बुद्ध्या

वडवानलरूपेण वर्तमानं तं पर्युपासत इत्यर्थः । यद्वा अन्या एकधनाख्या आपः संयंति । चात्वालोत्करयोर्मध्ये वसतीवरीभिः संगच्छंते । अन्या वसतीवर्याख्या आपश्चोपयंति । उपगच्छंति । ऐकमत्यं प्राप्ता भवंति । एताश्च मिलित्वा यज्ञं साधयंत्यस्तत्साध्यवृष्टिद्वारा नद्यो भूत्वोर्वं पृणंतीत्यादि समानं । एवं हि आपो वा अस्पर्धंत वयं पूर्वं यज्ञं वक्ष्यामः । ऐ° ब्रा० २. २०.। इत्यादिकं ब्राह्मणविनियोगश्चानुगृह्यते ॥

तमस्मेॅरा युवतयो युवाॅनं मर्मृज्यमाॅनाः परिॅ यन्त्यापः॑ ।

स शुक्रेभिः शिक्वॅभी रेवदस्मे दीदायाॅनिध्मो घृतनिॅर्णिगप्सु ॥४

तम् । अस्मेॅराः । युवतयः॑ । युवाॅनम् । मर्मृज्यमाॅनाः । परिॅ । यन्ति । आपः॑ ।

सः । शु॒क्रेभिः॑ । शिक्वं॑ऽभिः । रे॒वत् । अ॒स्मे इतिं । दी॒दायं । अ॒नि॒ध्मः । घृ॒तऽनिंर्निंक् । अ॒प्ऽसु ॥४

तं । अस्मेराः। युवतयः । युवानं । मर्मृज्यमानाः। परि। यंति । आपः ।।

सः । शुक्रेभिः। शिक्वऽभिः। रेवत् । अस्मे इति। दीदाय। अनिध्मः। घृतऽर्निर्निक् । अप्ऽसु ॥४॥

तमपां नपातमग्निमस्मेरा अस्मयमाना दर्परहिता युवतयो युवानं युवराजमिव मर्मज्यमाना अत्यर्थमलंकुर्वाणा आपः ॥ मृजू शौचालंकारयोः ॥ परि यंति । परितो गच्छंति प्राप्नुवंति । घृतनिर्निक क्षरणशीलोदकनिर्नेजनः । यद्वा निर्निगिति रूपनाम । दीप्तरूपः सोऽपां नपादग्निरप्सु मेघांतर्गतासु समुद्रगतासु वा मध्येऽनिध्म इंधनरहित एव सन् अस्मे अस्माकं रेवद्धनयुक्तमन्नं यथा भवति तथा शुक्रेभिः शुभैर्निर्मलैः शिक्वभिस्तेजोभिर्दीदाय । दीप्यते ॥

अ॒स्मै ति॒स्रो अ॑व्य॒थ्याय॒ नारी॑र्दे॒वाय॑ दे॒वीर्दि॑धिष॒न्त्यन्न॑म् ।

कृता॑ इ॒वोप॒ हि प्र॑स॒र्स्रे अ॒प्सु स पी॒यूषं॑ धयति पूर्व॒सूना॑म् ॥ ५

अ॒स्मै । ति॒स्रः । अ॒व्य॒थ्याय॑ । नारीः॑ । दे॒वाय॑ । दे॒वीः ।
दि॒धि॒ष॒न्ति॒ । अन्न॑म् ।

कृताः॑ऽइव । उप॑ । हि । प्र॒ऽस॒स्रे । अ॒प्ऽसु । सः । पी॒यूष॑म्
। ध॒य॒ति॒ । पू॒र्व॒ऽसूना॑म् ॥५

अस्मै। तिस्रः । अव्यथ्याय। नारीः । देवाय । देवीः ।
दिधिषंति । अन्नं ।

कृताःऽइव। उप। हि। प्रऽसस्रे। अप्ऽसु । सः। पीयूषं।
धयति । पूर्वऽसूनां ॥५॥

नारीर्नेत्र्यस्तिस्रो देवीर्देव्य इळासरस्वतीभारत्याख्या अव्यथ्यायाव्यथनायास्मै देवायापां नपातेऽन्न सोमाख्यं दिधिषंति । धारयंति ॥ धिष शब्दे जौहोत्यादिकः । व्यत्ययेनांत्यादेशः । धातूनामनेकार्थत्वादत्र धारणार्थः ॥ अप्सूदकेषु कृता इवोपप्रसर्स्रे । प्रसरंति ॥ सृ गतौ । लिटीरयो रे इति रेआदेशः । छांदसो हलादिशेषाभावः ॥ यस्मादेवं तस्मात्पूर्वसूनां पूर्वं ब्रह्मणः सकाशादुत्पन्नानामपां पीयूषं सारभूतं सोमाख्यममृतं सोऽपांनपादग्निर्धयति । पिबति ॥ ॥ २२॥

अश्व॒स्यात्र॒ जनिं॑मा॒स्य च॒ स्वं॑र्द्रु॒हो रि॒षः स॒म्पृचः॑ पाहि सू॒रीन्
।

आ॒मासुं॑ पू॒र्षु प॒रो अं॑प्रमृ॒ष्यं नारां॑तयो॒ वि नं॑श॒न्नानृं॑तानि ॥६

अश्वंस्य । अत्रं । जनिंम । अ॒स्य । च॒ । स्वः॑ । द्रु॒हः । रि॒षः । स॒म्ऽपृचः॑ । पा॒हि॒ । सू॒रीन् ।

आ॒मासुं । पू॒र्षु । प॒रः । अ॒प्र॒ऽमृ॒ष्यम् । न । अरांतयः । वि । न॒श॒न् । न । अनृंतानि ॥६

अश्वस्य। अत्र। जनिम। अस्य। च। स्वः। द्रुहः। रिषः। संऽपृचः। पाहि। सूरीन्।

आमासु । पूर्षु। परः। अप्रऽमृष्यं । न। अरातयः। वि। नशन्।न। अनृतानि ॥६॥

अत्रास्मिन्नपांनपात्संज्ञके देवेऽश्वस्य जनिम जन्म भवति । अपांननप्त्रधिष्ठितात्समुद्रादुच्चैःश्रवसो जातत्वात् । किं बहुना । अस्य च स्वः सुष्ठ्वरणीयस्य सर्वस्य जगतो जन्मास्मिन्नेव भवति । अयं हि मेघमध्ये वर्तमानो वृष्टिद्वारेण सर्वं जगज्जनयति । तादृशोऽपांनपात्त्वं द्रुहो

द्रोग्धुरपहर्तू रिषो हिंसकस्य च संपृचः संपर्कात्सूरीन स्तोतॄनस्मान्पाहि । रक्ष । आमास्वपरिपक्वासु पूर्षु पूरयितव्यास्वप्सु परः परस्ताद्वर्तमानमप्रमृष्यमप्रधृष्यमाणं देवमरातयोऽदातारः पुरुषा न विनशन्। न प्राप्नुवंति ॥ नशतिर्व्याप्तिकर्मा । लेट्यडागमः ॥ अनृतानि मायाविनो रक्षांसि च न प्राप्नुवंति ॥

स्व आ दमें सु॒दुघा॒ यस्यं धे॒नुः स्व॒धां पींपाय सु॒भ्वन्नंमत्ति ।

सो अ॒पां नपांदू॒र्जयंन्न॒प्स्व१॒॑न्तर्वंसु॒देयांय विध॒ते वि भांति ॥ ७

स्वे । आ । दमें । सु॒ऽदुघां । यस्यं । धे॒नुः । स्व॒धाम् । पी॒पा॒य॒ । सु॒ऽभु । अन्नंम् । अ॒त्ति॒ ।

सः । अ॒पाम् । नपा॑त् । ऊ॒र्जय॑न् । अ॒प्ऽसु । अ॒न्तः ।
व॒सु॒ऽदेया॑य । वि॒ध॒ते । वि । भा॒ति॒ ॥७

स्वे । आ । दमे । सुऽदुघा। यस्य । धेनुः। स्वधां। पीपाय।
सुऽभु । अन्नं । अत्ति ।

सः । अपां। नपात्।ऊर्जयन्।अप्ऽसु। अंतः। वसुऽदेयाय।
विधते। वि। भाति ॥७॥

योऽपांनपात् स्वे दमे स्वकीये गृहेंऽतरिक्षलक्षण आसीदति । यस्य च धेनुर्माध्यमिका वाक् सुदुघा सुखेन दोग्धव्या भवति । स देवः स्वधां वृष्ट्युदकं पीपाय । वर्धयति ॥ प्यायी वृद्धौ । लिड्यङ्गोश्चेति पीभावः ॥ सुभु सुष्ठु भूतं वृष्टेः सकाशादुत्पन्नं हविर्लक्षणमन्नं चात्ति । भक्षयति । सोऽपांनपात्संज्ञको देवः ऊर्जयन् बलं कुर्वन् अप्स्वंतर्मेघस्थास्वप्सु मध्ये विधते परिचरते यजमानाय वसुदेयाय धनदानार्थं विभाति । विशेषेण दीप्यते ॥

यो अ॒प्स्वा शुचि॑ना॒ दैव्ये॑न ऋ॒तावाज॑स्र उर्वि॒या वि॒भाति॑ ।

व॒या इद॒न्या भुव॑नान्यस्य॒ प्र जा॑यन्ते वी॒रुध॑श्च प्र॒जाभिः᳚ ॥८

यः । अ॒प्ऽसु । आ । शुचि॑ना । दैव्ये॑न । ऋ॒तऽवा॑ ।
अज॑स्रः । उ॒र्वि॒या । वि॒ऽभाति॑ ।

व॒याः । इत् । अ॒न्या । भुव॑नानि । अ॒स्य॒ । प्र । जा॒य॒न्ते॒ ।
वी॒रुधः᳚ । च॒ । प्र॒ऽजाभिः᳚ ॥८

यः । अप्ऽसु। आ। शुचिना। देव्यैन। ऋतऽवा। अजस्रः।
उर्विया। विऽभाति ।

वयाः । इत् । अन्या। भुवनानि । अस्य। प्र। जायते ।
वीरुधः। च । प्रऽजाभिः ॥ ८॥

योऽपांनपादृतावा । ऋतमित्युदकनाम । तद्वान्
सत्यवान्वा अजस्रो नित्यः एकरूपेण सदा वर्तमानः
उर्विया उरुर्विस्तीर्णोऽप्सु मेघस्थासु मध्ये शुचिना शोचकेन
दैव्येन देवसंबंधिना तेजसा आ समंताद्विभाति ।।
विशेषेण प्रकाशते । अस्यापांनपातोऽन्या अन्यानि
भुवनानि सर्वाणि भूतजातानि वया इत शाखा इव ।
वीरुध ओषधयः प्रजाभिः स्वकीयाभिः पुष्पफलादिभिः
सहास्मादेव प्रजायंते ॥

पूर्वोक्ते सारस्वतसवस्यापोनप्त्रीये चरावपां नपादा
हीत्येषानुवाक्या । सूत्रितं च । अपां नप्त्रे चरुमपां नपादा
ह्यस्थादुपस्थं । आ° १२. ६.। इति ॥

अपां नपादा ह्यस्थांदुपस्थं जिह्मानांमूर्ध्वो विद्युतं वसांनः ।

तस्य॒ ज्येष्ठं॑ महि॒मानं॒ वह॑न्ती॒र्हिर॑ण्यवर्णा॒◌ः परि॑ यन्ति य॒ह्वीः ॥९

अ॒पाम् । नपा॑त् । आ । हि । अस्था॑त् । उ॒पऽस्थ॑म् । जि॒ह्मानां॑म् । ऊ॒र्ध्वः । वि॒ऽद्युत॑म् । वसा॑नः ।

तस्य॑ । ज्येष्ठ॑म् । म॒हि॒मान॑म् । वह॑न्तीः । हिर॑ण्यऽवर्णाः । परि॑ । य॒न्ति॒ । य॒ह्वीः ॥९

अपां। नपात्। आ। हि। अस्थात्। उपऽस्थं। जिह्मानां। ऊर्ध्वः। विद्युतं । वसानः।

तस्य । ज्येष्ठं । महिमानं । वहंतीः । हिरण्यऽवर्णाः । परि । यंति । यह्वीः ॥९॥

अपांनपात्संज्ञकोऽग्निरुपस्थमपामुपस्थानमंतरिक्षमा ह्यस्थात् । आस्थितवान् आरूढवान् खलु । किं कुर्वन् । जिह्मानां कुटिलगतीनामपां मध्य ऊर्ध्वः स्वयमूर्ध्वं ज्वलन्

विद्युतं विद्योतमानं मेघं वसान आच्छादयन् । अंतरिक्षमास्थाय वर्षणं कृतवान् । तस्य वर्षितुरपांनपातो ज्येष्ठं प्रशस्यतमं महिमानं माहात्म्यं वहंतीर्वहंत्यः सर्वत्र प्रापयंत्यो यह्वीर्यह्व्यो महत्यो हिरण्यवर्णाः । नदीनामैतत् । हिरण्यवन्निर्मलरूपा नद्यः परियंति । परितो गच्छंति । अपांनप्त्रा महती वृष्टिरस्माकं प्रवाहनायोत्पादितेति कृतज्ञतया तदीयं माहात्म्यं सर्वत्र प्रकटयंत्य इव नद्यः प्रवहंतीत्यर्थः ।।

हिरंण्यरूपः स हिरंण्यसंदृगपां नपात्सेदु हिरंण्यवर्णः ।

हिरण्ययात्परि योनेंर्निषद्यां हिरण्यदा दंदत्यन्नंमस्मै ॥१०

हिरंण्यऽरूपः । सः । हिरंण्यऽसन्दृक् । अपाम् । नपांत् । सः । इत् । ऊं इतिं । हिरंण्यऽवर्णः ।

हि॒र॒ण्ययां॑त् । परिं । योनेः॑ । नि॒ऽसद्यं । हि॒र॒ण्य॒ऽदाः ।
द॒द॒ति॒ । अन्नं॑म् । अ॒स्मै॒ ॥१०

हिरण्यऽरूपः।सः। हिरण्यऽसंदृक्। अपां। नपात्। सः इत्
।ऊं इति। हिरण्यऽवर्णः।

हिरण्ययात्। परि। योनेः । निऽसद्य। हिरण्यऽदाः। ददति ।
अन्नं । अस्मै॥१०॥

सोऽपांनपात् हिरण्यरूपः । रूप्यत इति रूपं शरीरं ।
सुवर्णमयशरीरो हितरमणीयशरीरो वा। तथा हिरण्यसंदृक्
। सम्यक् पश्यंतीति संदृश इंद्रियाणि । सुवर्णमयेंद्रियो
हितरमणीयेंद्रियो वा । सेदु स एवापांनपात् हिरण्यवर्णो
हिरण्यसदृशकांतियुक्तः । एवंभूतः सन्
हिरण्ययात्सुवर्णमयाद्योनेः स्थानात् पर्युपरि
निषद्योपविश्य राजत इति शेषः । अस्मा ईदृग्विधायापां

नपाते हिरण्यदा दक्षिणारूपस्य सुवर्णस्य दातारो यजमाना अन्नं हविर्लक्षणं ददति । प्रयच्छंति ॥ ॥ २३॥

तद॒स्यानीं॑कमु॒त चारु॒ नामां॑पी॒च्यं॑ वर्धते॒ नप्तुं॑र॒पाम् ।

यमि॒न्धतें॑ युव॒तय॒ः सम॒त्था हिरं॑ण्यवर्णं घृ॒तमन्नं॑मस्य ॥ ११

तत् । अ॒स्य॒ । अनीं॑कम् । उ॒त । चारुं॑ । नामं॑ । अ॒पी॒च्यं॑म् । व॒र्ध॒ते॒ । नप्तुः॑ । अ॒पाम् ।

यम् । इ॒न्धतें॑ । यु॒व॒तयः॑ । सम् । इ॒त्था । हिरं॑ण्यऽवर्णम् । घृ॒तम् । अन्नं॑म् । अ॒स्य॒ ॥११

तत् । अस्य । अनीकं । उत। चारु। नाम। अपीच्यं। वर्धते । नप्तुः । अपां।

यं। इंधते । युवतयः । सं। इत्था। हिरण्यवर्णं । घृतं । अन्नं । अस्य ॥११॥

अस्यापांनप्तुर्देवस्यानीकं रश्मिसमूहरूपं शरीरं चारु शोभनं । उत अपि च अस्य नाम संज्ञा च चारु शोभनं न पातयति न विनाशयतीति नपादिति तद्व्युत्पत्तेः । तदुभयमपीच्यं । अंतर्हितनामैतत् । मेघांतर्हितं सद्वर्धते । युवतयः संगमनस्वभावा आपो हिरण्यवर्णं हिरण्यसमानतेजसं यमपांनपातमित्यामुत्रांतरिक्षे समिंधते । सम्यक् दीपयंति । अस्य च देवस्य घृतं क्षरणशीलमुदकमन्नं भक्ष्यं । अबिंधनो ह्यसौ वैद्युतोऽग्निः ।

अ॒स्मै बंहू॒नामंव॒माय॒ सख्यें य॒ज्ञैर्विंधेम॒ नमंसा ह॒विर्भिः ।

सं सा॒नु मा॑र्ज्मि॒ दिधि॑षामि॒ बिल्मै॒र्दधा॒म्यन्नै॒ः परिं वन्द ऋ॒ग्भिः ॥१२

अ॒स्मै । ब॒हू॒नाम् । अ॒व॒माय॑ । सख्ये॑ । य॒ज्ञैः । वि॒धे॒म॒ । नम॑सा । ह॒विःऽभिः॑ ।

सम् । सानु॑ । मार्ज्मि॑ । दिधि॑षामि । बिल्मैः॑ । दधा॑मि । अन्नैः॑ । परि॑ । व॒न्दे॒ । ऋ॒क्ऽभिः ॥१२

अस्मै । बहूनां । अवमाय । सख्ये । यज्ञैः । विधेम । नमसा। हविःऽभिः ।

सं।सानु । मार्ज्मि।दिधिषामि।बिल्मैः। दधामि।अन्नैः। परि। वंदे। ऋक्ऽभिः॥१२॥

अस्मे पुरोवर्तिने बहूनां देवानामवमायाद्याय सख्येऽस्माभिः समानख्यानायापां नपाते यज्ञैर्यागसाधनैर्हविर्भिश्चरुपुरोडाशादिभिर्नमसा

नमस्कारेण च विधेम । परिचरेम । अस्यापांनपातः सानु समुच्छ्रितप्रदेशं संमार्ज्मि । सम्यक् शोधयामि अलंकरोमि वा ॥ मृजू शौचालंकारयोः । चादिलोपे विभाषेत्यस्य निघातप्रतिषेधः ॥ दिधिषामि धारयामि च बिल्मैर्भासनैः काष्ठैरेनं ॥ धिष शब्दे । अयं धारणार्थोऽपि । जुहोत्यादित्वात् शपः श्लुः । मिपो व्यत्ययेनाडागमः । अभ्यस्तानामादिरित्याद्युदात्तत्वं ॥ दधामि धारयामि चैनं गार्हपत्यादिरूपेणाग्निर्हविर्लक्षणैः । तथा ऋग्भिर्मंत्रैः परिवंदे । परितः स्तौमि ॥

स ई॒ं वृषांजनय॒त्तासु॒ गर्भ॒ं स ई॒ं शिशुंर्धयति॒ तं रिंहन्ति ।

सो अ॒पां नपा॒दनंभिम्लातवर्णो॒ऽन्यस्येंवे॒ह त॒न्वां विवेष ॥
१३

सः । ई॒म् । वृषां । अ॒ज॒न॒य॒त् । तासुं । गर्भंम् । सः । ई॒म् । शिशुः॑ । ध॒य॒ति॒ । तम् । रि॒ह॒न्ति॒ ।

सः । अ॒पाम् । नपा॑त् । अनं॑भिम्लातऽवर्णः । अ॒न्यस्यं॑ऽइव । इ॒ह । त॒न्वा॑ । वि॒वे॒ष॒ ॥१३

सः । ईं। वृषा । अजनयत् । तासु । गर्भं। सः। ईं। शिशुः। धयति । तं । रिहंति।

सः । अपां। नपात् । अनभिम्लातऽवर्णः। अन्यस्यऽइव। इह। तन्वा। विवेष ॥१३॥

स ईं सोऽयमपानपात्संज्ञको देवो वृषा सेक्ता भूत्वा तासु मेघस्थास्वप्सु गर्भमजनयत् । स्वात्मानमेव गर्भरूपेण वर्षणार्थं कृतवानित्यर्थः । गर्भो भूत्वा च स ईं सोऽयं माध्यमिको वैद्युतोऽग्निस्तासां शिशुः पुत्रः सन् धयति । मेघस्थास्ताः पिबति । अबिंधनो ह्यसौ । तं

पुत्रस्थानीयमद्भिरापश्च रिहंति । लिहंति ॥ लिह आस्वादने । कपिलकादित्वाल्लत्वविकल्पः ॥ सोऽयमपांनपात् वृष्ट्या सह भूमौ निपतितोऽनभिम्लातवर्णः । अभितो म्लातो स्नानः क्षीणो वर्णो यस्य तद्विपरीतोऽत्यर्थं दीप्यमानः सन् इहास्मिन लोकेऽन्यस्येव । इवशब्दो ऽवधारणे । अन्यस्य पार्थिवस्यैवाग्नेस्तन्वा शरीरेण काष्ठेंधनलक्षणेन विवेष । व्याप्तो बभूव ॥ विष्लृ व्याप्तौ ॥

अ॒स्मिन्प॒दे प॑र॒मे त॑स्थि॒वांस॑मध्व॒स्मभि॑र्वि॒श्वहा॑ दीदि॒वांस॑म् ।

आपो॒ नप्त्रे॑ घृ॒तमन्नं॒ वह॑न्तीः स्व॒यमत्कै॒ः परि॑ दीयन्ति य॒ह्वीः ॥१४

अ॒स्मिन् । प॒दे । प॒र॒मे । त॒स्थि॒ऽवांस॑म् । अ॒ध्व॒स्मऽभिः॑ ।
वि॒श्वहा॑ । दी॒दि॒ऽवांस॑म् ।

आपः॑ । नप्त्रे॑ । घृ॒तम् । अन्न॑म् । वह॑न्तीः । स्व॒यम् । अत्कैः॑
। परि॑ । दी॒य॒न्ति॒ । य॒ह्वीः ॥१४

अस्मिन् । पदे। परमे। तस्थिऽवांसं । अध्वस्मऽभिः ।
विश्वहा। दीदिऽवांसं।।

आपः। नप्त्रे । घृतं । अन्नं । वहंतीः । स्वयं । अत्कैः ।
परि। दीयंति। यह्वीः ॥१४॥

परम उत्कृष्टेऽस्मिन्पदेंऽतरिक्षलक्षणे स्थाने तस्थिवांसं स्थितवंतमध्वस्मभिर्ध्वसनरहितैस्तेजोभिर्विश्वहा सर्वाण्यहानि दीदिवांसं दीप्यमानमपां नपातं यह्वीर्यह्व्यो महत्य आपः स्वयमात्मनैवात्कैरतनशीलैः सततगंतृभिः स्वकीयैः रूपैः परिदीयंति । परिगच्छंति ॥

दीयतिर्गतिकर्मा । दीङ् क्षये । व्यत्ययेन परस्मैपदं ॥ किं कुर्वत्यः ।। नप्त्रे ऽपां नपाते घृतं क्षरणशीलोदकात्मकमन्नं वहंतीर्वहंत्यः ॥

अयांसमग्ने सुक्षितिं जनायायांसमु मघवंद्भ्यः सुवृक्तिम् ।

विश्वं तद्भद्रं यदवंन्ति देवा बृहद्वंदेम विदथें सुवीराः ॥१५

अयांसम् । अग्ने । सुऽक्षितिम् । जनाय । अयांसम् । ऊं इतिं । मघवंत्ऽभ्यः । सुऽवृक्तिम् ।

विश्वंम् । तत् । भद्रम् । यत् । अवंन्ति । देवाः । बृहत् । वदेम । विदथें । सुऽवीराः ॥१५

अयांसं । अग्ने। सुऽक्षितिं । जनाय। अयांसं । ऊं इति । मघवत्ऽभ्यः । सुऽवृक्तिं ।

विश्वं । तत् । भद्रं । यत् । अवंति । देवाः। बृहत् । वदेम।
विदथे। सुऽवीराः ॥१५॥

हे अग्ने सुक्षितिं शोभननिवासं त्वामयांसं । उपागच्छं।
किमर्थं । जनाय । अस्मदीयपुत्रादिजननार्थं । तथा
मघवद्भ्यो हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यश्च सुवृक्तिं
शोभनावर्जकं त्वद्विषयं स्तोत्रमयांसं । उपागच्छ ॥ यम
उपरमे ॥ अतः कारणाद्यद्भद्रं सर्वे देवा अवंति रक्षंति विश्वं
सर्वं तद्भद्रमस्माकं भवतु । सुवीराः सुपुत्रा वयं विदथे यज्ञे
गृहे वा बृहत् प्रौढं स्तोत्रं वदेम । उच्चारयाम ॥ ॥ २४॥

**टिप्पणी**

निदाघमासातिगमे जन्म मध्ये भवत्यपाम् ।

नप्तारमाह तेनैनम् ऋषिर्गृत्समद स्तुवन् ।।बृहद्देवता २.५५ ।।

द्र. ऋ. १०.३०

# ऋग्वेदः सूक्तं २.३६

| | | |
|---|---|---|
| **ऋग्वेदः - मण्डल २** | | |
| ← सूक्तं २.३५ | सूक्तं २.३६<br>गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः | सूक्तं २.३७ → |

दे. ऋतुदेवताः - १ इन्द्रो मधुश्च, २ मरुतो माधवश्च, ३ त्वष्टा शुक्रश्च, ४ अग्निः शुचिश्च, ५ इन्द्रो नभश्च, ६ मित्रावरुणौ नभस्यश्च। जगती

---

तुभ्यं हिन्वानो वसिष्ट गा अपोऽधुक्षन्सीमविभिरद्रिभिर्नरः ।

पिबेन्द्र स्वाहा प्रहुतं वषट्कृतं होत्रादा सोमं प्रथमो य ईशिषे ॥१॥

यज्ञैः सम्मिश्लाः पृषतीभिरृष्टिभिर्यामञ्छुभ्रासो अञ्जिषु प्रिया उत ।

आसद्या बर्हिर्भरतस्य सूनवः पोत्रादा सोमं पिबता दिवो नरः ॥२॥

अमेव नः सुहवा आ हि गन्तन नि बर्हिषि सदतना रणिष्टन ।

अथा मन्दस्व जुजुषाणो अन्धसस्त्वष्टर्देवेभिर्जनिभिः सुमद्गणः ॥३॥

आ वक्षि देवाँ इह विप्र यक्षि चोशन्होतर्नि षदा योनिषु त्रिषु ।

प्रति वीहि प्रस्थितं सोम्यं मधु पिबाग्नीध्रात्तव भागस्य तृप्णुहि ॥४॥

एष स्य ते तन्वो नृम्णवर्धनः सह ओजः प्रदिवि बाह्वोर्हितः ।

तुभ्यं सुतो मघवन्तुभ्यमाभृतस्त्वमस्य ब्राह्मणादा तृपत्पिब ॥५॥

जुषेथां यज्ञं बोधतं हवस्य मे सत्तो होता निविदः पूर्व्या अनु ।

अच्छा राजाना नम एत्यावृतं प्रशास्त्रादा पिबतं सोम्यं मधु ॥६॥

# सायणभाष्यम्

' तुभ्यम् ' इति षड्टचं चतुर्थं सूक्तं गार्त्समदं जागतम् । प्रथमाया इन्द्रो मधुश्च देवता । द्वितीयाया मरुतो माधवश्च । तृतीयायास्त्वष्टा शुक्रश्च । चतुर्थ्या अग्निः शुचिश्च । पञ्चम्या इन्द्रो नभश्च । षष्ठ्या मित्रावरुणौ नभस्यश्च । तथा चानुक्रान्तं- तुभ्यं षड्टतव्यं तु जागतं तु ' इति । दशरात्रे षष्ठेऽहनि ऋतुयाजेषु ऋक्शिरस्कैः प्रैषैः प्रेषितव्यं यष्टव्यं च । तत्राद्यानां षण्णां प्रैषाणामुपरिष्टाद्देवताः षड्टचोऽहोरात्रादिभिः क्रमेणावपनीयाः । तथा च सूत्रितम्- ' उपरिष्टात्त्वृच ऋतुयाजानाम् ' इत्युपक्रम्य ' तुभ्यं हिन्वानो वसिष्ट गा अप इति द्वादश ' ( आश्व. श्रौ. ८.१) इत्यन्तेन ।।

तुभ्यं हिन्वा॒नो व॑सिष्ट॒ गा अ॒पोऽधु॑क्षन्सी॒मवि॑भि॒रद्रि॑भि॒र्नरः॑ ।

पिबेंन्द्र स्वाहा प्रहुंतं वषंट्कृतं होत्रादा सोमं प्रथमो य ईशिंषे ॥१

तुभ्यंम् । हिन्वानः । वसिष्ट । गाः । अपः । अधुंक्षन् । सीम् । अविंऽभिः । अद्रिंऽभिः । नरः ।

पिबं । इन्द्र । स्वाहां । प्रऽहुंतम् । वषंट्ऽकृतम् । होत्रात् । आ । सोमंम् । प्रथमः । यः । ईशिंषे ॥१

तुभ्यं । हिन्वानः । वसिष्ट। गाः। अपः। अधुक्षन्। सीं। अविऽभिः । अद्रिऽभिः । नरः।

पिब। इंद्रः। स्वाहा। प्रऽहुतं। वषट्ऽकृतं । होत्रात्।आ। सोमं। प्रथमः। यः । ईशिषे॥१॥

हे इंद्र तुभ्यं त्वदर्थं हिन्वानः प्रेर्यमाणः सोमो गा गोविकाराणि दधिपयःप्रभृतीनि श्रपणद्रव्याणि वसतीवर्याख्या अपश्च वसिष्ट । वस्ते । आच्छादयति । तैः

संयुज्यत इत्यर्थः । नरो यज्ञस्य नेतारोऽध्वर्यवश्च सीमेनं सोममविभिरवेर्वालमयैर्दशापवित्रैरद्रिभिर्ग्रावभिश्चाधुक्षन्। अक्षारयन्। ग्रावभिरभिषुत्य दशापवित्रेण पुनंतीत्यर्थः । हे इंद्र यस्त्वमीशिषे । सर्वस्य जगत ईश्वरो भवसि त्वं प्रथमोऽन्येभ्यो देवेभ्यः पूर्वभावी सन् स्वाहा स्वाहाकारेण प्रहुतं प्रकर्षेणाग्नौ क्षिप्तं वषट्कृतं वषट्कारेण च त्यक्तं तं सोमं होत्राद्धोतुर्यागादा समंतात्पिब ।

य॒ज्ञैः सम्मिं॑श्ला॒ः पृषं॑तीभिॠ॒ष्टिभि॒र्यामं॒ञ्छु॒भ्रासों अ॒ञ्जिषुं प्रि॒या उ॒त ।

आ॒सद्यां ब॒र्हिर्भरतस्य सूनवः पो॒त्रादा सोमं पिबता दिवो नरः ॥२

य॒ज्ञैः । सम्ऽमिं॑श्लाः । पृषं॑तीभिः । ॠ॒ष्टिऽभिः॑ । यामं॑न् । शु॒भ्रास॑ः । अ॒ञ्जिषुं । प्रि॒याः । उ॒त ।

आ॒ऽसद्यं । ब॒र्हिः । भ॒र॒त॒स्य॒ । सू॒न॒वः॒ । पो॒त्रात् । आ ।
सोमंम् । पि॒ब॒त॒ । दि॒वः॒ । न॒रः॒ ॥२

यज्ञैः।संऽमिश्लाः। पृषतीभिः। ऋष्टिऽभिः। यामंन्।
शुभ्रासः। अंजिषु । प्रियाः।उत।

आऽसद्य । बर्हिः। भरतस्य । सूनवः। पोत्रात्। आ। सोमं।
पिबत। दिवः। नरः ॥२॥

हे मरुतो यज्ञैर्यागैः संमिश्लाः संयुक्ताः पृषतीभिः स्ववाहनभूताभिः पृषद्वतीभिर्वडवाभिर्युक्ते यामन् यामनि गमनसाधने रथेऽवस्थिता ऋष्टिभिः स्वकीयैरायुधैः शुभ्रासः शुभ्राः शोभमानाः । उतशब्दश्चार्थे।
अंजिष्वाभरणेषु प्रियाश्च हे भरतस्य सूनवः सर्वस्य जगतो भर्तू रुद्रस्य पुत्रा दिवो नरो दिवोंऽतरिक्षस्य नेतारः एवंभूता हे मरुतः ते यूयं बर्हिरास्तीर्णे बर्हिष्यासद्योपविश्य पोत्रात् पोतुर्यागात् सोममापिबत ॥

तृतीयसवनेऽमेव न इत्येषा नेष्टुः प्रस्थितयाज्या च । तथा च सूत्रितं । अमेव नः सुहवा आ हि गंतनें33द्राविष्णू पिबतं मध्वो अस्य । आ° ५. ५.। इति ॥

अ॒मेवं नः सुहवा॒ आ हि गन्तंन॒ नि ब॒र्हिषिं सदतना॒ रणिंष्टन ।

अथां मन्दस्व जुजुषा॒णो अन्धंस॒स्त्वष्टंर्दे॒वेभि॒र्जनिंभिः सु॒मद्गंणः ॥३

अ॒माऽइंव । न॒ः । सु॒ऽह॒वा॒ः । आ । हि । गन्तंन । नि । ब॒र्हिषिं । स॒द॒त॒न॒ । रणिंष्टन ।

अथं । म॒न्द॒स्व॒ । जु॒जु॒षा॒णः । अन्धंसः । त्वष्टः । दे॒वेभिः । जनिंऽभिः । सु॒मत्ऽगंणः ॥३

अमाऽइव। नः। सुऽहवाः । आ । हि। गंतन। नि। बर्हिषि । सदतन। रणिष्टन।।

अथ। मंदस्व। जुजुषाणः । अंधसः। त्वष्टः। देवेभिः । जनिऽभिः। सुमत्ऽगणः ॥३॥

इवशब्दोऽवधारणे । हे सुहवाः शोभनाह्वानास्त्वष्टृप्रभृतयो नोऽस्मान् अमेव सहैवागंतन । आगच्छत ॥ गमेश्छांदसः शपो लुक् । तप्तनप्तनथनाश्चेति तनबादेशः । हिशब्दः पूरणः ॥ आगत्य च बर्हिषि वेद्यामास्तीर्णे निषदतन । निषण्णा भवत ॥ सदेश्छांदसः सीदादेशाभावः ॥ उपविश्य च रणिष्टन। रमध्वं ॥ रण शब्दार्थः । अत्र क्रीडायां वर्तते धातूनामनेकार्थत्वात् । अस्माच्छांदसो लुङ् । पूर्ववत्तनबादेशः ॥ अथानंतरं हे त्वष्टः देवेभिरन्यैर्देवैर्जनिभिर्देवपत्नीभिश्च सुमद्गणः शोभनगणस्त्वमंधसः सोमलक्षणस्यान्नस्य ॥ द्वितीयार्थे

षष्ठी ॥ सोमलक्षणमन्नं जुजुषाणः सेवमानो मंदस्व । तृप्तो भव ॥

आ वंक्षि दे॒वाँ इ॒ह विंप्र॒ यक्षिं चो॒शन्होंत॒र्नि षंदा॒ योनिंषु त्रि॒षु ।

प्रतिं वीहि॒ प्रस्थिंतं सो॒म्यं मधु॒ पिबाग्नींध्रा॒त्तवं भा॒गस्यं तृप्णुहि ॥४

आ । व॒क्षि॒ । दे॒वान् । इ॒ह । वि॒प्र॒ । यक्षिं । च॒ । उ॒शन् । हो॒तः॒ । नि । स॒द॒ । योनिंषु । त्रि॒षु ।

प्रतिं । वी॒हि॒ । प्रऽस्थिंतम् । सो॒म्यम् । मधुं । पिबं । आग्नींध्रात् । तवं । भा॒गस्यं । तृ॒प्णु॒हि॒ ॥४

आ। वक्षि। देवान्। इह। विप्र। यक्षि। च । उशन्। होतः। नि। सद। योनिषु। त्रिषु ।

प्रति। वीहि। प्रऽस्थितं। सोम्यं। मधु।पिब। आग्नीध्रात्। तव।भागस्य। तृप्णुहि ॥४॥

हे विप्र मेधाविन्नग्ने देवान् यष्टव्यानिंद्रादीनावक्षि । आवह । यक्षि च । तान्यज च । हे होतर्देवानामाह्वातस्त्वं चोशन्नस्मदीयं कामयमानः सन् त्रिषु योनिषु स्थानेषु गार्हपत्यादिलक्षणेषु निषद । उपविश । उपविश्य च प्रस्थितं होमार्थमुत्तरवेदिं प्रत्यानीतं सोम्यं सोममयं मधु प्रतिवीहि । प्रतिकामयस्व । कामयित्वा चाग्नीध्रादग्नीध्रयागात्सोमं पिब । पीत्वा च तव भागस्य त्वदीयेन भागेन तृप्णुहि । तृप्तो भव ॥

ए॒ष स्य ते॑ त॒न्वो॑ नृम्ण॒वर्ध॑न॒ः सह॒ ओज॑ः प्र॒दिवि॑ बा॒ह्वोर्हि॒तः ।

तुभ्यं सुतो मंघवन्तुभ्यमाभृंतस्त्वमंस्य ब्राह्मंणादा तृपत्पिंब ॥५

एषः । स्यः । ते । तन्वः । नृम्णऽवर्धनः । सहः । ओजः । प्रऽदिविं । बाह्वोः । हितः ।

तुभ्यंम् । सुतः । मघऽवन् । तुभ्यंम् । आऽभृंतः । त्वम् । अस्य । ब्राह्मंणात् । आ । तृपत् । पिब ॥५

एषः । स्यः । ते। तन्वः । नृम्णऽवर्धनः । सहः। ओजः । प्रऽदिवि। बाह्वोः । हितः।

तुभ्यं । सुतः।मघवन् । तुभ्यं। आऽभृतः। त्वं । अस्य। ब्राह्मणात्।आ। तृपत्।पिब ॥५॥

हे इंद्र स्यः स एष सोमस्ते तव तन्वः शरीरस्य नृम्णवर्धनः । बलस्य वर्धकः । तुभ्यं सुत इत्युत्तरत्र संबन्धः । येन सोमेन प्रदिवि पुराणे त्वयि बाह्वोर्हस्तयोः सहः

परेषामभिभवनलक्षणं सामर्थ्यमोजस्तत्कारणभूतं बलं च हितः । निहितं भवति ॥ लिंगव्यत्ययः ॥ हे मघवन् धनवन्निंद्र तुभ्यं त्वदर्थं तादृशः सोमः सुतोऽध्वर्युभिरभिषुतः । तुभ्यं होतुमाभृतः । उत्तरवेद्यां प्रत्याहृतश्च । अस्येमं सोमं ब्राह्मणात् ब्राह्मणाच्छंसिनो यागात्तृपत् तृप्यंस्त्वमापिब । आभिमुख्येन पिब ॥ क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वादस्येति चतुर्थ्यर्थे षष्ठी ॥

जुषेथां यज्ञं बोधतं हवस्य मे सत्तो होतां निविदः पूर्व्या अनुं ।

अच्छा राजाना नमं एत्यावृतं प्रशास्त्रादा पिंबतं सोम्यं मधुं ॥६

जुषेथांम् । यज्ञम् । बोधंतम् । हवंस्य । मे । सत्तः । होतां । निऽविदः । पूर्व्याः । अनुं ।

अच्छं । राजांना । नमः । एति । आऽवृतंम् । प्रऽशास्त्रात् । आ । पिबतम् । सोम्यम् । मधुं ॥६

जुषेथां। यज्ञं। बोधतं । हवंस्य । मे। सत्तः । होता। निऽविदः। पूर्व्याः । अनु ।

अच्छ। राजाना। नमः। एति। आऽवृतं । प्रऽशास्त्रात्। आ। पिबतं। सोम्यं मधु ॥६॥

हे मित्रावरुणौ मदीयमिमं यज्ञं जुषेथां । सेवेथां । मे मम हवस्य हवमाह्वानम् ॥ पूर्ववत्कर्मणि षष्ठी ॥ बोधतं । अवगच्छतं । तथा सत्तो निषण्णोऽस्मदीयो होता पूर्व्याश्चिरंतनीर्निविदः ॥ वाङ्नामैतत् ॥ शस्त्रलक्षणा वाचोऽनु शंसतीति शेषः । उद्गातृभिः कृतस्य

स्तोत्रस्यानुगुण्येनाज्यादीनि शस्त्राणि शंसतीत्यर्थः । अपि च नमः सोमलक्षणमन्नमावृतमृत्विग्भिर्वेष्टितं राजाना राजमानौ युवामच्छाभिमुख्येनैति । गच्छति प्राप्नोति । तादृशं सोम्यं सोममयं मधु मादकं हविः प्रशास्त्रात् प्रशास्तुर्यागादापिबतं । आभिमुख्येन पिबतं ॥ ॥२५॥

**टिप्पणी**

<u>ऋतुशब्दोपरि पौराणिकसंदर्भाः</u>

<u>ऋतुशब्दोपरि टिप्पणी</u>

अस्मिन् सूक्ते षड्भ्यः ऋतुभ्यः केवलं प्रथमानां त्रीणामेव उल्लेखमस्ति। एकस्मिन् ऋतौ द्वौ मासौ भवतः। कथनमस्ति यत् एकः मासः कारणं अस्ति,

द्वितीयः कार्यं। एवंरूपेण मधुमासेन येषां बीजानां रोपणं माधवमासे भवति, तदनुसारेण क्रिया भवति। ये मासाः क्रियारूपाः सन्ति, तेषु षट्पदीरूपाणां बीजानां अन्वेषणं कर्तुं शक्यन्ते। कथनमस्ति - विष्णुरेकादशी गीता तुलसी विप्र धेनवः॥ असारे दुर्गसंसारे षट्पदी मुक्तिदायिनी। - गरुड २.२.२२-२४। माधवमासे तुलस्याः महत्त्वं पद्मपुराणे ५.९८ कथितमस्ति। कथनमस्ति यत् ये सूर्यस्य रश्मयः सन्ति, ते सूर्यस्य पदाः सन्ति, तेभ्यः सर्वे प्राणिनः पादं लभन्ते। व्यवहारे, या घटना अस्मान् स्थायीरूपेण छादयति, रूपान्तरितं करोति, तत् तस्याः पदमस्ति - साधुजनस्य कोपि उपदेशः पदं भवितुं शक्यते। षट्पदानां सकृदालंभनं संभवं नास्ति। एकैकानां पदानां अवगमनं संभवं अस्ति।

प्रवर्ग्य-उपसदइष्टीनां मध्ये अग्निचयनकृत्यसम्पादनं भवति। प्रथमा चितिः वसन्तः भवति, तदोपरि ग्रीष्मादि। सर्वोपरि पञ्चमी चितिः हेमन्तः भवति। प्रथमायां चित्यां उख्याग्नेः स्थापना भवति। या विकसितरूपे उषा अस्ति, तस्याः अविकसितरूपं उखा भवति। उषा ऋतूनां पत्नी भवति। उख्याग्नेः स्थापनात्पूर्वं तस्याः शोधनाय
आरुणकेतुकाग्निचयनं भवति।

२.३६.१

वषट्कारोपरि वैदिकसंदर्भाः

षट्पदी उपरि टिप्पणी

होता उपरि टिप्पणी

वसन्तर्तोः कार्यं स्थूलद्रव्येषु प्राणानां प्रतिष्ठा अस्ति। सोमयागे सुत्यादिवसे होता ऋत्विक् प्रातरनुवाकसंज्ञकस्य कृत्यस्य कर्ता भवति। अस्मिन् कृत्ये रात्रेः चतुर्थप्रहरे, यस्मिन् काले कोपि पक्षीरपि कलरवं न करोति, तस्मिन् काले वाचं शृणोति। अस्याः वाचः उद्गमं अत्यन्तसूक्ष्मस्तरेषु अस्ति। होतुः किं कार्यमस्ति। स्थूलद्रव्यानां या अत्यन्तसूक्ष्मा वाक् अस्ति, तस्याः देवेभ्यः साकं सम्बन्धनम्। संगीतशास्त्रे स्थूलस्तराणां तालसंज्ञका या वाक् अस्ति, तस्याः जननं अवनद्धवाद्योभिः क्रियन्ते, अयं श्रीमती विमला मुसलगाँवकरस्य मतमस्ति।

पुराणेषु वसन्तर्तुः गुह्यतमा अस्ति। व्रजक्षेत्रे सर्वदैव वसन्तर्तोः वासं भवति। ब्राह्मणग्रन्थेषु उल्लेखमस्ति यत् सूर्यस्य उदयः वसन्तर्तोः प्रतीकमस्ति। अनुमानं

अस्ति यत् कृष्णस्य बाललीलावर्णने कालियनागदमनस्य पूर्वं या लीला अस्ति, उदाहरणार्थं - शकटासुरवधः, पूतनावधः, गर्दभासुर एवं प्रलम्बासुरवधादि, तत्सर्वं वसन्तर्तुना सह सम्बद्धमस्ति।

२.३६.२

पोताशब्दोपरि वैदिकसंदर्भाः

वसन्तोपरि संक्षिप्तटिप्पणी

प्रथमायां ऋचि होताऋत्विजस्य उल्लेखमस्ति, द्वितीयायां पोतुः। होता ऋत्विक् आज्यशस्त्रस्य शंसनं करोति, पोता? प्रउगशस्त्रस्य। आत्मा आज्यं भवति, प्राणः प्रउगम्। पोताऋत्विजस्य कार्यं

पापानां अपचितिकरणं अस्ति। द्र. प्रउग उपरि संदर्भाः ।

२.३६.३



*त्वष्टा*

## त्वष्टा उपरि टिप्पणी

अय प्रतीयते यत् पृष्ठ्यषडहसंज्ञकसोमयागे यः वैरूपसंज्ञकः तृतीयमहः अस्ति, तदत्र उपलक्षितं भवति। त्वष्टुः कार्यं या ऊर्जा विरूपा अस्ति, तां

रूपप्रदानमस्ति। पुराणेषु त्वष्ट्रा सूर्यस्य रूपस्य तक्षणस्य कथा प्रसिद्धमस्ति। स्थूलस्तरे काम-क्रोधादीनां उर्जा विरूपा भवति।

शतपथब्राह्मण ८.१.१.८ अनुसारेण वसन्तर्तुः प्राणेन सम्बद्धमस्ति, ग्रीष्मः मनसा, वर्षा चक्षुषा।

२.३६.४

आग्नीध्रोपरि टिप्पणी



*Dr. Fatah Singh*

अस्यां ऋचि देवानां वक्षणस्य - यक्षणस्य उल्लेखमस्ति। डा. फतहसिंहः कथयति स्म यत् वक्षणशब्दस्य सम्यक् व्याख्या आंग्लभाषायाः वैक्सिंग - वेनिंग शब्दाभ्यां भवितुं शक्यते। आग्नीध्रऋत्विजस्य प्रकृतिरपि वक्षण-यक्षणप्रकारस्य अस्ति।

शतपथब्राह्मणस्य ११.२.७.[३२] अयं कथनं महत्त्वपूर्णमस्ति - वसन्त आग्नीध्रस्तस्माद्वसन्ते दावाश्चरन्ति तद्ध्यग्निरूपं ग्रीष्मोऽध्वर्युस्तप्त इव वै ग्रीष्मस्तप्तमिवाध्वर्युर्निष्क्रामति वर्षा उद्गाता तस्माद्यदा बलवद्वर्षति साम्न इवोपब्दिः क्रियते....। अस्य कथनस्य संगतिः वर्तमान संदर्भेण सह अन्वेषणीयमस्ति।

वर्तमानसंदर्भे आग्नीध्रस्य उल्लेखं ग्रीष्मस्य शुचिसंज्ञके मासे अस्ति। वायुपुराणे २.२.१३ आग्नीध्रस्य पाठान्तरं ग्रीष्मः उपलब्धं भवति।

२.३६.५

ब्राह्मणाच्छंसी ऋत्विजोपरि टिप्पणी

अस्यां ऋचि सह - ओजः लक्षणं पृष्ठ्यषडहसंज्ञके सोमयागे वैराजसंज्ञकस्य चतुर्थअह्नः लक्षणं भवति। ब्राह्मणाच्छंसी ऋत्विजस्य संदर्भे अपि ओजः, ओ - तः, ओंकारतः जननस्य उल्लेखं भवति। वैराजअह्नःपूर्व तृतीयाह्नः संज्ञा वैरूपमस्ति - विरूपं, विकृतरूपम्। अयं प्रतीयते यत् चतुर्थे अह्नि सह शब्देन सममित्याः नवीनं उदयमस्ति। ब्राह्मणाच्छंसी ऋत्विक् ऋषभरूपे वीर्यस्य सेकं

करोति। कस्मिन्। या प्रकृति वीर्यतः रिक्ता, विरला अस्ति।

२.३६.६

<u>मैत्रावरुणोपरि संक्षिप्त टिप्पणी एवं संदर्भाः</u>

भागवतपुराणे कथनमस्ति - ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च । प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥<u>११.२. ४६</u> । एतेभ्यः यः बालिशः-कृपा लक्षणमस्ति, तस्य सम्बन्धः ब्राह्मणाच्छंसी ऋत्विजेन सह अस्ति। यः द्विषत्सु - उपेक्षा लक्षणमस्ति, तस्य सम्बन्धः मैत्रावरुणऋत्विजेन सह अस्ति, अयं प्रतीयते। ब्राह्मणाच्छंसी ऋत्विजस्य कृपा तदैव भविष्यति, वर्षा तदैव भविष्यति यदा वर्षणहेतु मण्डूकसदृशा अभीप्सा भविष्यति। किन्तु ये अज्ञानी जनाः सन्ति, ते वृष्टिं न

जानन्ति। यदि केनापि कारणेन वृष्टिः भवति, तदा तेषु जनेषु वृष्टिं प्रति द्वेषः अस्ति। अस्यां स्थित्यां मैत्रावरुणः केन प्रकारेण सहायकः भवितुं शक्यते। अगस्त्यः मैत्रावरुणस्य अवतारः अस्ति। यत्र जलस्य अनावश्यकं संचयं अस्ति, तस्य शोषणस्य विद्या अगस्त्यः जानाति। वरुणः दुरिष्टस्य क्षयं करोति।

मैत्रावरुणऋत्विजाय वशा गवाः  आलभनं भवति। वशा अर्थात् कामानां या वृष्टिः अथवा वीर्यसेचनं भवति, तत् वशा गौः स्वयोन्यां न धारयति, तस्य पोषणं न करोति। गौतमबुद्ध विषये प्रसिद्धमस्ति यत् यस्यां रात्रौ स्वप्नाः अपि प्रकटिताः नाभूवन्, सा रात्रिः मोक्षस्य रात्रिः आसीत्।

प्रशास्ता शब्दस्य प्रयोगः सामान्य रूपेण मैत्रावरुणऋत्विजोः आह्वानाय भवति। प्रशास्ता

अर्थात् विशिष्टरूपेण ज्ञानदाता। सामान्यरूपेण द्वेषस्य सह अच्छावाक् ऋत्विजस्य सम्बद्धता भवति, अयं अनुमानं अस्ति।

# ऋग्वेदः सूक्तं २.३७

ऋग्वेदः - मण्डल २
← सूक्तं २.३६
सूक्तं २.३७
गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः
सूक्तं २.३८ →

दे. ऋतुदेवताः १-४ द्रविणोदा ऋतवश्च, ५ अश्विनौ ऋतवश्च, ६ अग्निः ऋतुश्च। जगती

---

मन्दस्व होत्रादनु जोषमन्धसोऽध्वर्यवः स पूर्णां वष्ट्यासिचम् ।

तस्मा एतं भरत तद्वशो ददिर्होत्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥१॥

यमु पूर्वमहुवे तमिदं हुवे सेदु हव्यो ददिर्यो नाम पत्यते ।

अध्वर्युभिः प्रस्थितं सोम्यं मधु पोत्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥२॥

मेद्यन्तु ते वह्नयो येभिरीयसेऽरिषण्यन्वीळयस्वा वनस्पते ।

आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥३॥

अपाद्धोत्रादुत पोत्रादमत्तोत नेष्ट्रादजुषत प्रयो हितम् ।

तुरीयं पात्रममृक्तममर्त्यं द्रविणोदाः पिबतु द्राविणोदसः ॥४॥

अर्वाञ्चमद्य यय्यं नृवाहणं रथं युञ्जाथामिह वां विमोचनम् ।

पृङ्क्तं हवींषि मधुना हि कं गतमथा सोमं पिबतं वाजिनीवसू ॥५॥

जोष्यग्ने समिधं जोष्याहुतिं जोषि ब्रह्म जन्यं जोषि सुष्टुतिम् ।

विश्वेभिर्विश्वाँ ऋतुना वसो मह उशन्देवाँ उशतः पायया हविः ॥६॥

# सायणभाष्यम्

## ।। श्रीगणेशाय नमः ।।

## यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ।।

अथ द्वितीयाष्टकस्याष्टमोऽध्याय आरभ्यते ।

द्वितीयमण्डलस्य चतुर्थानुवाके ' मन्दस्व ' इति षडृचं पञ्चमं सूक्तं गार्त्समदम् । ' मन्दस्व ' इत्यनुक्रान्तम् । पूर्वत्र ' ऋतव्यं तु जागतं तु ' इति तुशब्दप्रयोगादिदमपि जागतमृतव्यम् । तत्राद्याश्चतस्त्र ऋचो द्रविणोदोदेवताकाः पञ्चम्याश्विनी षष्ठ्याग्नेयी । दशरात्रे षष्ठेऽहनि ऋतुयाजेषु प्रैषानृक्शिरस्कान् कृत्वा तैः प्रैषैः प्रेषितव्यं यष्टव्यं च । तत्र सप्तमादीनां प्रैषाणामुपरिष्टात् ' मन्दस्व ' इत्याद्याः षडृचः क्रमेण प्रक्षेपणीयाः । सूत्रं तु पूर्वमेवोदाहृतम् ।।

मन्द॑स्व हो॒त्राद॑नु॒ जोष॒मन्ध॒सोऽध्व॑र्यव॒ः स पू॒र्णां व॑ष्ट्या॒सिच॑म् ।

तस्मा॑ ए॒तं भ॑रत तद्व॒शो द॒दिर्हो॒त्रात्सोमं॑ द्रविणोद॒ः पिब॑ ऋ॒तुभि॑ः ॥१

मन्दं॑स्व । हो॒त्रात् । अनु॑ । जोषं॑म् । अन्धं॑सः । अध्वं॑र्यवः । सः । पू॒र्णाम् । व॒ष्टि॒ । आ॒ऽसिचं॑म् ।

तस्मै॑ । ए॒तम् । भ॒र॒त॒ । त॒त्ऽव॒शः । द॒दिः । हो॒त्रात् । सोमं॑म् । द्र॒वि॒णः॒ऽद॒ः । पिब॑ । ऋ॒तुऽभि॑ः ॥१

मंदस्व । होत्रात् । अनु। जोषं। अंधसः। अध्वर्यवः। सः। पूर्णां । वष्टि । आऽसिचं।

तस्मै। एतं।भरत। तत्ऽवशः। ददिः।होत्रात्। सोमं। द्रविणःऽदः। पिब। ऋतुऽभिः॥१॥

हे द्रविणोदो द्रविणसो धनस्य दातरेतन्नामक देव अंधसो देवानामन्नरूपस्य सोमस्य सोमेन होत्रात् होतृकर्तृकाद्यागादनु जोषं प्रीतिमनु मंदस्व । हे अध्वर्यवः

स द्रविणोदाः पूर्णां संपूर्णामासिचं सिच्यमानामाहुतिं वष्टि । कामयते । अतस्तस्मै द्रविणोदसेऽग्नये एतं सोमं भरत । प्रापयत । तद्वशस्तत्कामो द्रविणोदा ददिर्दाता युष्माकमभीष्टफलस्य दाता भवतीति शेषः। किंच हे द्रविणोदो होत्रात् होतुर्यागात् ऋतुभिरिषमासाभिमानिभिर्ऋतुदेवैः सह सोमं पिब ॥

यमु॒ पूर्व॒महु॑वे॒ तमि॒दं हु॑वे॒ सेदु॒ हव्यो॑ द॒दिर्यो नाम॒ पत्य॑ते ।

अ॒ध्व॒र्युभि॒ः प्रस्थि॑तं सो॒म्यं मधु॑ पो॒त्रात्सोमं॑ द्रविणोद॒ः पिब॑ ऋ॒तुभिः॑ ॥२

यम् । ऊ॒ इति॑ । पूर्व॑म् । अहु॑वे । तम् । इ॒दम् । हु॒वे॒ । सः । इत् । ऊ॒ इति॑ । हव्यः॑ । द॒दिः । यः । नाम॑ । पत्य॑ते ।

अ॒ध्व॒र्युऽभिः॑ । प्रऽस्थि॑तम् । सो॒म्यम् । मधु॑ । पो॒त्रात् । सोम॑म् । द्र॒वि॒ण॒ःऽद॒ः । पिब॑ । ऋ॒तुऽभिः॑ ॥२

यं।ऊं इति। पूर्वं।अहुवे। तं। इदं। हुवे। सः । इत्। ऊं इति। हव्यः। ददिः। यः। नाम। पत्यते।

अध्वर्युऽभिः। प्रऽस्थितं। सोम्यं मधु।पोत्रात्।सोम। द्रविणःऽदः।पिब।ऋतुऽभिः॥२॥

हे द्रविणोदो यमु यं त्वामेव पूर्वं होतृकर्तृके सोमयागेऽहुवे । आहूतवानस्मि इदं संप्रति तं तमेव पोतृकर्तृके सोमयागे हुवे । आह्वयामि। सेत् स एव द्रविणोदा हव्यो ह्वातव्यः ॥ उ इति पूरणे ॥ ददिरभीष्टफलस्य दाता यो नाम यः खलु पत्यते देवतात्वेनेष्टे तस्मै द्रविणोदसे सोम्यं सोमात्मकं मध्वध्वर्युभिः प्रस्थितं प्रणीतमासीत् । हे द्रविणोदः पोत्रात् पोतुर्यागादृतुभिरूर्जसंज्ञकैः सह सोमं पिब ।।

मेद्यंन्तु ते वह्नंयो येभिरीयसेऽरिंषण्यन्वीळयस्वा वनस्पते ।

आयूयां धृष्णो अभिगूर्या त्वं नेष्ट्रात्सोमं द्रविणोदः पिबं ऋतुभिः ॥३

मेद्यंन्तु । ते । वह्नंयः । येभिः । ईयंसे । अरिंषण्यन् । वीळयस्व । वनस्पते ।

आऽयूयं । धृष्णो इतिं । अभिऽगूर्य । त्वम् । नेष्ट्रात् । सोमंम् । द्रविणःऽदः । पिबं । ऋतुऽभिः ॥३

मेद्यंतु । ते। वह्नयः। येभिः । ईयसे । अरिषण्यन्। वीळयस्व । वनस्पते ।

आऽयूय ।धृष्णो इति। अभिऽगूर्य। त्वं ।नेष्ट्रात्। सोमं। द्रविणःऽदः।पिब। ऋतुऽभिः॥३॥

हे द्रविणोदो येभिर्यैर्वाहैरीयसे प्राप्नोषि ॥ ते तव वह्नयो वोढार इति यास्केनोक्तत्वात् । नि० ८. ३. ॥ ते मेद्यंतु । तृप्यंतु । हे वनस्पते वनानां पते अरिषण्यन् अहिंसन वीळयस्व । दृढीभव। हे धृष्णो धर्षक त्वमायूयागत्य अभिगूर्योद्यम्य नेष्ट्रात् नेष्टुर्यागादृतुभिः सहःसंज्ञकैः सह सोमं पिब ॥

अपांद्धो॒त्रादु॒त पो॒त्रादंमत्तो॒त ने॒ष्ट्रादंजुषत॒ प्रयों हि॒तम् ।

तु॒रीय॒ं पात्र॒ममृंक्त॒ममंर्त्यं द्रविणो॒दाः पिंबतु द्राविणोद॒सः ॥ ४

अपांत् । हो॒त्रात् । उ॒त । पो॒त्रात् । अ॒म॒त्त॒ । उ॒त । ने॒ष्ट्रात् । अ॒जु॒ष॒त॒ । प्रयः॑ । हि॒तम् ।

तु॒रीयं॑म् । पात्रं॑म् । अमृं॑क्तम् । अमं॑र्त्यम् । द्र॒वि॒ण॒ःऽदाः ।
पि॒ब॒तु॒ । द्रा॒वि॒ण॒ःऽद॒सः ॥४

अपात् । होत्रात् । उत। पोत्रात् । अमत्त। उत। नेष्ट्रात् ।
अजुषत। प्रयः । हितं ।

तुरीयं । पात्रं। अमृक्तं। अमर्त्यं । द्रविणःऽदाः । पिबतु ।
द्राविणःऽदसः ॥४॥

अच्छावाकस्येयं । यो द्रविणोदा होत्राद्धोतुयागात्
सोममपात् पीतवान् उत किंच पोत्रात्पोतुर्यागादमत्त सोमं
पीत्वामाद्यत् । उत अपि च नेष्ट्रात नेष्टुर्यागाद्धितं दत्तं प्रयो
देवानामन्नरूपं सोममजुषत् । असेविष्ट । स द्राविणोदसो
हवीरूपद्रविणस्य प्रदातृभ्य ऋत्विग्भ्यो हितः ॥
ऋत्विजोऽत्र द्रविणोदस उच्यंते हविषो दातारस्ते चैनं
जनयंति । नि०८.२.। इति यास्केनोक्तत्वात् ॥ तादृशो

द्रविणोदा अमृक्तं दशापवित्रेणामृष्टममर्त्यममरणसाधनं तुरीयं पात्रं चतुर्थपात्रस्थं सोमं पिबतु ॥

अ॒र्वाञ्चं॑म॒द्य य॒य्यं॑ नृ॒वाहं॑णं॒ रथं॑ युञ्जाथामि॒ह वां॑ वि॒मोचं॑नम् ।

पृ॒ङ्क्तं ह॒वींषि॒ मधु॒ना हि कं॑ ग॒तमथा॒ सोमं॑ पिबतं वाजिनीवसू ॥५

अ॒र्वाञ्चं॑म् । अ॒द्य । य॒य्यं॑म् । नृ॒ऽवाहं॑नम् । रथं॑म् । युञ्जा॒था॒म् । इ॒ह । वा॒म् । वि॒ऽमोचं॑नम् ।

पृ॒ङ्क्तम् । ह॒वींषिं॑ । मधुं॑ना । आ । हि । क॒म् । ग॒तम् । अथं॑ । सोमं॑म् । पि॒ब॒त॒म् । वा॒जि॒नी॒व॒सू॒ इतिं॑ वाजिनीऽवसू ॥५

अर्वांचं । अद्य । यय्यं। नृऽवाहनं। रथे। युंजाथां। इह । वां। विऽमोचनं ।

पृंक्तं । हवींषि। मधुना। आ । हि। कं । गतं। अथ । सोमं। पिबतं । वाजिनीवसू इति वाजिनीवसू ॥५॥

हे अश्विनौ अद्यास्मिन्नहनि यय्यं ययिं गंतारं नृवाहणं नेत्रोर्युवयोर्वोढारमिह यज्ञे वां युवयोर्विमोचनं विमोचयितारं रथमर्वांचं यथार्वाग्भवति तथा युंजाथां। किंच मधुना स्वादुरसेन हवींषि पृंक्तं । संयोजयतं । अथ चा गतं । आगच्छतं ॥ हि कमिति पूरणे ॥ अथानंतरं हे वाजिनीवसू । वाज एव वाजिनी । अनेन वासयितारौ बलवर्धनौ वा सोमं पिबतं ॥

जोष्यंग्ने स॒मिधं॒ जोष्याहुंतिं॒ जोषि॒ ब्रह्म॒ जन्यं॒ जोषिं सुष्टु॒तिम् ।

विश्वे॑भि॒र्विश्वाँ॑ ऋ॒तुना॑ वसो म॒ह उ॒शन्दे॒वाँ उ॑श॒तः पा॑यया ह॒विः ॥६

जोषि॑ । अ॒ग्ने॒ । स॒म्ऽइधं॑म् । जोषि॑ । आऽहुं॑तिम् । जोषि॑ । ब्रह्म॑ । जन्यं॑म् । जोषि॑ । सु॒ऽस्तु॒तिम् ।

विश्वे॑भिः । विश्वा॑न् । ऋ॒तुना॑ । व॒सो॒ इति॑ । म॒हः । उ॒शन् । दे॒वान् । उ॒श॒तः । पा॒य॒य॒ । ह॒विः ॥६

जोषि। अग्ने। संऽइधं। जोषि। आऽहुतिं । जोषि। ब्रह्म। जन्यं । जोषि। सुऽस्तुतिं ।

विश्वेभिः । विश्वान । ऋतुना । वसो इति । महः । उशन् । देवान् । उशतः । पायय । हविः ॥६॥

हे अग्ने समिधं जोषि । जुषस्व । आहुतिं जोषि । जुषस्व । ब्रह्म शस्त्रं जन्यं जनेभ्यो हितं जोषि । जुषस्व । सुष्टुतिं शोभनस्तोत्रं जोषि । जुषस्व । किंच वसो

सर्वेषामावासभूत हे अग्ने उशतः कामयमानान् महो महतो विश्वान् सर्वान्देवान् उशन् कामयमानस्त्वमृतुना तपस्यसंज्ञकेन सह तथा विश्वेभिः सर्वैर्देवैः सह हविर्हवीरूपं सोमं पायय ॥ ॥१॥

# ऋग्वेदः सूक्तं २.३८

ऋग्वेदः - मण्डल २

← सूक्तं २.३७

सूक्तं २.३८

गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः

सूक्तं २.३९ →

## दे. सविता। त्रिष्टुप्।

उदु ष्य देवः सविता सवाय शश्वत्तमं तदपा वह्निरस्थात् ।

नूनं देवेभ्यो वि हि धाति रत्नमथाभजद्वीतिहोत्रं स्वस्तौ ॥१॥

विश्वस्य हि श्रुष्टये देव ऊर्ध्वः प्र बाहवा पृथुपाणिः सिसर्ति ।

आपश्चिदस्य व्रत आ निमृग्रा अयं चिद्वातो रमते परिज्मन् ॥२॥

आशुभिश्चिद्यान्वि मुचाति नूनमरीरमदतमानं चिदेतोः ।

अह्यर्षूणां चिन्न्ययाँ अविष्यामनु व्रतं सवितुर्मोक्यागात् ॥३॥

पुनः समव्यद्विततं वयन्ती मध्या कर्तोर्न्यधाच्छक्म धीरः ।

उत्संहायास्थाद्व्यृतूँरदर्धररमतिः सविता देव आगात् ॥४॥

नानौकांसि दुर्यो विश्वमायुर्वि तिष्ठते प्रभवः शोको अग्नेः ।

ज्येष्ठं माता सूनवे भागमाधादन्वस्य केतमिषितं सवित्रा ॥५॥

समाववर्ति विष्ठितो जिगीषुर्विश्वेषां कामश्चरताममाभूत् ।

शश्वाँ अपो विकृतं हित्व्यागादनु व्रतं सवितुर्दैव्यस्य ॥६॥

त्वया हितमप्यमप्सु भागं धन्वान्वा मृगयसो वि तस्थुः ।

वनानि विभ्यो नकिरस्य तानि व्रता देवस्य सवितुर्मिनन्ति ॥७॥

याद्राध्यं वरुणो योनिमप्यमनिशितं निमिषि जर्भुराणः ।

विश्वो मार्ताण्डो व्रजमा पशुर्गात्स्थशो जन्मानि सविता व्याकः ॥८॥

न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः ।

नारातयस्तमिदं स्वस्ति हुवे देवं सवितारं नमोभिः ॥९॥

भगं धियं वाजयन्तः पुरंधिं नराशंसो ग्नास्पतिर्नो अव्याः ।

आये वामस्य संगथे रयीणां प्रिया देवस्य सवितुः स्याम ॥१०॥

अस्मभ्यं तद्दिवो अद्भ्यः पृथिव्यास्त्वया दत्तं काम्यं राध आ गात् ।

शं यत्स्तोतृभ्य आपये भवात्युरुशंसाय सवितर्जरित्रे ॥११॥

## सायणभाष्यम्

' उदु ष्यः ' इत्येकादशर्चं षष्ठं सूक्तं गार्त्समदं त्रैष्टुभं सवितृदेवताकम् । अत्रानुक्रमणिका- ' उदु ष्य एकादश सावित्रम् ' इति । व्यूढे दशरात्रे षष्ठेऽहनि वैश्वदेवशस्त्रे एतत्सूक्तं सावित्रनिविद्धानीयम् । ' व्यूळ्हश्चेत् ' इति खण्डे सूत्रितं-' षष्ठस्योदु ष्य देव इति गार्त्समदम् ' ( आश्व. श्रौ. ८.८) इति ।

उदु॒ ष्य दे॒वः स॑वि॒ता स॒वाय॑ शश्वत्त॒मं तद॑पा॒ वह्नि॑रस्थात् ।

नू॒नं दे॒वेभ्यो॒ वि हि धाति॒ रत्न॒मथाभ॑जद्वी॒तिहो॑त्रं स्व॒स्तौ ॥ १

उत् । ऊ॒ँ इति॑ । स्यः । दे॒वः । स॒वि॒ता । स॒वाय॑ । श॒श्व॒त्ऽत॒मम् । तत्ऽअ॑पाः । वह्नि॑ः । अ॒स्था॒त् ।

नू॒नम् । दे॒वेभ्य॑ः । वि । हि । धाति॑ । रत्न॑म् । अथ॑ । आ । अ॒भ॒ज॒त् । वी॒तिऽहो॑त्रम् । स्व॒स्तौ ॥१

उत्।ऊं इति।स्यः। देवः सविता।सवाय। शश्वत्तमं तत्ऽअपाः । वह्निः।अस्थात्।

नूनं । देवेभ्यः । वि।हि। धाति । रत्नं। अथ । आ। अभजत्। वीतिऽहोत्रं। स्वस्तौ॥१॥

स्यः स देवो द्योतमानः सविता सवाय लोकानां प्रसवायानुज्ञायै शश्वत्तमं प्रतिदिनमुदस्थात्। उत्तिष्ठति । कीदृशः सविता । तदपाः तत्प्रसवकर्मा ॥ अपः अप्न इति

कर्मनामसु पाठात् ॥ वह्निर्वोढा जगतां । किंच नूनं संप्रति देवेभ्यः स्तोतृभ्यो रत्नं धनं वि हि धाति । प्रयच्छति ॥ हीति पूरणे ॥ अथ अपि च वीतिहोत्रं कांतयज्ञं यजमानं स्वस्तावविनाशे क्षेमेऽभजत् । भागिनं करोतु । यद्यपि स्वस्तिशब्दो विभक्त्यंतनिर्दिष्टशब्दपरस्तथापि अपर्यवसानादर्थपरो भवति ॥

विश्वंस्य॒ हि श्रु॒ष्टयें दे॒व ऊ॒र्ध्वः प्र बा॒हवां पृ॒थुपांणि॒ः सिसंर्ति ।

आपंश्चिदस्य व्र॒त आ निमृंग्रा अ॒यं चि॒द्वातों रमते॒ परिंज्मन् ॥२

विश्वंस्य । हि । श्रु॒ष्टयें । दे॒वः । ऊ॒र्ध्वः । प्र । बा॒हवां । पृ॒थुऽपांणिः । सिसंर्ति ।

आप॑ः । चि॒त् । अ॒स्य॒ । व्र॒ते । आ । नि॒ऽमृं॒ग्राः । अ॒यम् ।
चि॒त् । वात॑ः । र॒म॒ते॒ । परि॑ऽज्मन् ॥२

विश्वस्य । हि। श्रुष्टये : देवः । ऊर्ध्वः । प्र। बाहवा।
पृथुऽपाणिः । सिसर्ति ।

आपः।चित्।अस्य।व्रते। आ।निऽमृग्राः। अयं ।चित्।
वातः। रमते।परिऽज्मन् ॥२॥

देवो द्योतमानः सविता पृथुपाणिर्महत्करो विश्वस्य श्रुष्टये जगतः सुखायोर्ध्व उद्गतः सन् बाहवा बाहू प्रसिसर्ति । प्रसारयति । आपश्चित् आपोऽप्यस्य व्रते प्रसवाख्ये कर्मणि सति ॥ व्रतं कर्वरमिति तन्नामसु पाठात् ॥ आ स्यंदंत इति शेषः । ताश्च निमृग्रा नितरां शोधयित्र्यो गंगादिरूपेण जगत्पावयंतीत्यर्थः । अयं चिद्वातोऽयमपि वायुः परिज्मन् परितो गते व्याप्तेंऽतरिक्षे रमते ॥

आ॒शुभिं॑श्चि॒द्यान्वि मुं॑चाति नू॒नमरीं॑रम॒दतं॑मानं चि॒देतोः॑ ।

अ॒ह्यर्षूं॑णां चि॒न्न्यं॑याँ अवि॒ष्यामनुं॑ व्र॒तं सं॑वि॒तुर्मो॑क्यागा॑त् ॥
३

आ॒शुऽभिः॑ । चि॒त् । यान् । वि । मु॒चा॒ति॒ । नू॒नम् ।
अरीं॑रमत् । अतं॑मानम् । चि॒त् । एतोः॑ ।

अ॒ह्यर्षूं॑णाम् । चि॒त् । नि । अ॒या॒न् । अ॒वि॒ष्याम् । अनुं॑ ।
व्र॒तम् । स॒वि॒तुः । मोकीं॑ । आ । अ॒गा॒त् ॥३

आशुऽभिः ।चित्। यान्।वि।मुचाति । नूनं । अरीरमत्।
अतमानं। चित्। एतोः।

अह्यर्षूणां ।चित्।नि।अयान्।अविष्यां। अनु।व्रतं।सवितुः।
मोकी। आ।अगात् ॥३॥

यान गच्छन् सविताशुभिश्चिच्छीघ्रगामिभिरपि रश्मिभिर्विमुचाति । विमुच्यते । नूनमिति पूरणः । अतमानं चित्सततं गच्छंतमपि जनमेतोर्गमनादरीरमत् । उपरमयति । किंच अह्यर्षूणां । अहिमाहंतारं शत्रुमर्षंत्यभिगच्छंतीत्यह्यर्षवः । तेषामप्यविष्यां गमनेच्छां न्ययान् । नियच्छति । सवितुः प्रेरकस्य सूर्यस्य व्रतं कर्मानुपश्चान्मोकी रात्रिः । मोकी शोकीति रात्रिनामसु पाठात् ॥ आगात् । आगच्छति । सवितुश्चेष्टोपरतौ रात्रिरागच्छतीति यावत् ॥

पुन॒ः सम॑व्य॒द्वित॑तं॒ वय॑न्ती म॒ध्या कर्तो॒र्न्य॑धा॒च्छक्म॒ धीरः॑ ।

उत्सं॒हाया॑स्था॒द्व्यृ१॒तूँर॑दर्धर॒रम॑तिः सवि॒ता दे॒व आगा॑त् ॥ ४

पुन॒रिति॑ । सम् । अ॒व्य॒त् । वि॒ऽत॑तम् । वयं॑न्ती । म॒ध्या । कर्तो॑ः । नि । अ॒धा॒त् । शक्म॑ । धीर॑ः ।

उत् । स॒म्ऽहाय॑ । अ॒स्था॒त् । वि । ऋ॒तून् । अ॒द॒र्धः॒ । अ॒रमं॑तिः । स॒वि॒ता । दे॒वः । आ । अ॒गा॒त् ॥४

पुनरिति । सं। अव्यत् । विऽततं । वयंती। मध्या। कर्तोः । नि। अधात्। शक्म। धीरः।

उत्। संऽहाय । अस्थात् । वि। ऋतून् । अदर्धः । अरमतिः । सविता। देवः। आ ।अगात् ॥४॥

वयंती वस्त्रं वयंती नारीव रात्रिर्विततमालोकं पुनः समव्यत् । संवेष्टयते । पुनः शब्दः पूर्वेद्युरप्येवमकार्षीदिति द्योतयति। धीरः प्राज्ञोऽपि सर्वो लोकः कर्तोः क्रियमाणं कर्म ॥ कर्तोः कर्तवा इति तन्नामसु पाठात् ॥ शक्म कर्तुं शक्यमपि मध्या मध्य उपक्रांतं कर्मापरिसमाप्येत्यर्थः ।

न्यधात् । निहितवान् । सवितर्युपरत इति । शेषः । सर्वो लोकः संहाय शय्यां विहायोदस्थात् । अवशिष्टं कर्म कर्तुं पुनरुत्तिष्ठति ॥ संपूर्वो जहातिः शय्यापरित्यागे वर्तते । तथा च श्रूयते । कलिः शयानो भवति संजिहानस्तु द्वापरः । ऐ० ब्रा० ७.१५. । इति । सविता सर्वस्य प्रसविता सूर्योऽरमतिरनुपरतिर्देवो द्योतमान आगात् । आगच्छति । उदेतीति यावत् । ऋतून् कालविशेषांश्च व्यदर्दः। विदारयति ॥

नानौकां॑सि॒ दुर्यो॒ विश्व॒मायु॒र्वि ति॑ष्ठते प्रभ॒वः शोको॑ अ॒ग्नेः ।

ज्येष्ठं॑ मा॒ता सू॒नवे॑ भा॒गमाधा॒दन्व॑स्य॒ केत॑मिषि॒तं स॑वि॒त्रा ॥ ५

नाना॑ । ओकां॑सि । दुर्यः॑ । विश्व॑म् । आयुः॑ । वि । ति॒ष्ठ॒ते॒ । प्र॒ऽभ॒वः । शोकः॑ । अ॒ग्नेः ।

ज्येष्ठ॑म् । मा॒ता । सू॒नवे॑ । भा॒गम् । आ । अ॒धा॒त् । अनु॑ ।
अ॒स्य॒ । केत॑म् । इ॒षि॒तम् । स॒वि॒त्रा ॥५

नाना। ओकांसि । दुर्यः । विश्वं । आयुः । वि। तिष्ठते ।
प्रऽभवः। शोकः । अग्नेः।

ज्येष्ठं। माता। सूनवे। भागं। आ । अधात् । अनु। अस्य।
केतं। इषितं । सवित्रा ॥५॥

प्रभवः प्रभूतोऽग्नेः शोकस्तेजो दुर्यो गृह्यो गृहे भवो नानौकांसि यजमानानां पृथग्भूतान्गृहान्वितिष्ठते । अधितिष्ठति । विश्वमायुः सर्वमन्नं चाधितिष्ठति ॥ आयुः सूनृतेत्यन्ननामसु पाठात् ॥ मातोषाः सवित्रान्विषितं प्रेषितमस्य केतं प्रज्ञापकमग्नेर्ज्येष्ठं प्रथममग्निहोत्राख्यं भागं सूनवेऽग्नय आधात् । आदधाति ॥ ॥२॥

स॒माव॑वर्ति॒ विष्ठि॑तो जिगी॒षुर्विश्वे॑षां॒ काम॒श्चर॑ताम॒माभू॑त् ।

शश्वाँ॒ अपो॒ विकृ॑तं हि॒त्व्यागा॒दनु॑ व्र॒तं स॑वि॒तुर्दैव्य॑स्य ॥६

स॒म्ऽआव॑वर्ति । विऽस्थि॑तः । जि॒गी॒षुः । विश्वे॑षाम् ।
काम॑ः । चर॑ताम् । अ॒मा । अ॒भू॒त् ।

शश्वा॑न् । अप॑ः । विऽकृ॑तम् । हि॒त्वी । आ । अ॒गा॒त् । अनु॑
। व्र॒तम् । स॒वि॒तुः । दैव्य॑स्य ॥६

संऽआववर्ति । विऽस्थितः। जिगीषुः । विश्वेषां । कामः ।
चरतां । अमा। अभूत् ।

शश्वान्। अपः। विऽकृतं । हित्वी। आ । अगात्। अनु ।
व्रतं । सवितुः । दैव्य॑स्य ॥६॥

जिगीषुर्विजयेच्छुर्योद्धा विष्ठितो युद्धार्थं प्रस्थितः समावववर्ति । समावर्तयति । विश्वेषां सर्वेषां चरतां जंगमानाममा। अमा दम इति गृहनामसु पाठात् । गृहं प्रति कामोऽभूत् । भवति । शश्वान् नित्यं कर्मरतोऽपः कर्म विकृतमर्धकृतं हित्वी हित्वागात् । गृहमागच्छति । एतत्सर्वं दैव्यस्य दिवि भवस्य सवितुः प्रेरकस्य सूर्यस्य व्रतमस्तमयाख्यं कर्मानु जायत इत्यर्थः ॥

त्वयां हि॒तमप्प्यंम॒प्सु भा॒गं धन्वान्वा मृंग॒यसो॒ वि तंस्थुः ।

वनांनि॒ विभ्यो॒ नकिंरस्य॒ तानिं व्र॒ता दे॒वस्यं सवि॒तुर्मिंनन्ति ॥७

त्वयां । हि॒तम् । अप्प्यंम् । अ॒प्ऽसु । भा॒गम् । धन्वं । अनुं । आ । मृ॒ग॒यसः॑ । वि । त॒स्थु॒ः ।

वनांनि । विऽभ्यः । नकिः । अ॒स्य॒ । तानिं । व्र॒ता । दे॒वस्यं । स॒वि॒तुः । मि॒न॒न्ति॒ ॥७

त्वया । हितं । अप्यं । अप्ऽसु । भागं । धन्व । अनु । आ । मृगयसः । वि। तस्थुः ।

वननि। विऽभ्यः। नकिः । अस्य । तानि । व्रता । देवस्य । सवितुः । मिनंति ॥ ७॥

हे सवितस्त्वयाप्स्वंतरिक्षे ॥ आपः पृथिवीत्यंतरिक्षनामसु पाठात् ॥ जलाधारे वा हितं निहितमप्यमपां संबंधिनं भागं धन्वानु निर्जल प्रदेशेष्वरण्येषु मृगयसो मृगयमाणा मृगा आ समंताद्वितस्थुः । अधितिष्ठंति । किंच वनानि वृक्षा विभ्यः पक्षिभ्य आवासादिरूपेण त्वया भागो दत्तः । अथ देवस्य सवितुस्तानि तादृशानि व्रता व्रतानि कर्माणि नकिर्मिनंति । केऽपि न हिंसंति ॥

या॒द्रा॒ध्यं१॒ वरु॑णो॒ योनि॒मप्य॒मनि॑शितं नि॒मिषि॒ जर्भु॑राणः ।

विश्वो॑ मार्ता॒ण्डो व्र॒जमा प॒शुर्गा॑त्स्थ॒शो जन्मा॑नि सवि॒ता व्याकः॑ ॥८

या॒त्ऽरा॒ध्यं॑म् । वरु॑णः । योनि॑म् । अप्यं॑म् । अनि॑ऽशितम् । नि॒ऽमिषि॑ । जर्भु॑राणः ।

विश्वः॑ । मा॒र्ता॒ण्डः । व्र॒जम् । आ । प॒शुः । गा॒त् । स्थ॒ऽशः । जन्मा॑नि । स॒वि॒ता । वि । आ । अ॒क॒रित्यं॑कः ॥८

यात्ऽराध्यं । वरुणः । योनिं । अप्यं । अनिऽशितं । निऽमिषि । जर्भुराणः ।

विश्वः । मार्तांडः। व्रजं । आ । पशुः । गात् । स्थऽशः । जन्मानि । सविता। वि। आ । अकरित्यकः ॥ ८॥

वरुणो याद्राध्यं यातां गच्छतां राध्यं राधनीयमप्यमाप्तुं योग्यमनिशितमतीक्ष्णं । सुखकरमिति यावत्। योनिं स्थानं निमिषि निमेषे सवितुरस्तमये सति विश्रमार्थं प्राणिभ्यः प्रयच्छति। वरुणस्य रात्रेर्निर्वाहकत्वात् । जर्भुराणो भृशं गच्छन् विश्वः सर्वो मार्तांडो मृताद्भिन्नादंडादुत्पद्यमानः पक्ष्यागात् । आगच्छति। विश्वः पशुरपि व्रजं गोष्ठमागात् । सविता प्रेरकः स्थशः स्थाने स्थाने जन्मानि जातानि भूतानि व्याकः । पृथगकार्षीत् ॥

न यस्येन्द्रो॒ वरु॑णो॒ न मि॒त्रो व्र॒तम॑र्य॒मा न मि॒नन्ति॑ रु॒द्रः ।

नारा॑तय॒स्तमि॒दं स्व॒स्ति हु॒वे दे॒वं स॑वि॒तारं॒ नमो॑भिः ॥९

न । यस्य॑ । इन्द्रः॑ । वरु॑णः । न । मि॒त्रः । व्र॒तम् । अ॒र्य॒मा ।
न । मि॒नन्ति॑ । रु॒द्रः ।

न । अरांतयः । तम् । इ॒दम् । स्व॒स्ति । हु॒वे । दे॒वम् ।

स॒वि॒तारंम् । नमः॑ऽभिः ॥९

न । यस्य । इंद्रः। वरुणः । न । मित्रः । व्रतं । अर्यमा। न।

मिनंति । रुद्रः।

न । अरातयः । तं । इदं । स्वस्ति । हुवे। देवं । सवितारं ।

नमःऽभिः ॥९॥

यस्य सवितुर्देवस्य व्रतं प्रसवाख्यं कर्मेंद्रो न मिनाति । न हिनस्ति । वरुणश्च न मिनाति मित्रश्चार्यमा च न मिनाति रुद्रश्च न मिनाति । अरातयोऽसुराश्च न मिनंति ॥

मिनातीति श्रुतमाख्यातं यथायोगं विपरिणामेन प्रत्येकमभिसंबध्यते ॥ तं सवितारं सर्वस्य प्रेरकं देवं द्योतमानमिदमिदानीं नमोभिन्नरूपैर्हविर्भिः सह ॥ नम आयुरित्यन्ननामसु पाठात् ॥ स्वस्ति क्षमाय हुवे । स्तौमि ॥

भग॒ं धिय॑ं वा॒जय॑न्त॒ः पुर॑ंधि॒ं नरा॒शंसो॒ ग्नास्पति॑ंर्नो अव्याः
।

आ॒ये वा॒मस्य॑ संग॒थे र॑यी॒णां प्रि॒या दे॒वस्य॑ सवि॒तुः स्या॑म ॥
१०

भग॑म् । धिय॑म् । वा॒जय॑न्तः । पुर॑म्ऽधिम् । नरा॒शंस᳚ः ।
ग्नाःपति᳚ः । न॒ः । अ॒व्या॒ः ।

आ॒ऽअ॒ये । वा॒मस्य॑ । स॒म्ऽग॒थे । र॒यी॒णाम् । प्रि॒याः ।
दे॒वस्य॑ । स॒वि॒तुः । स्या॒म॒ ॥१०

भगं। धियं । वाजयंतः । पुरंऽधिं । नराशंसः । ग्नाःपतिः ।
नः । अव्याः।

आऽअये । वामस्य । संऽगथे । रयीणां। प्रियाः । देवस्य ।
सवितुः । स्याम् ॥१०॥

भगं भजनीयं धियं ध्यातव्यं पुरंधिं पुरस्य धारयितारं बहुप्रज्ञं वा सवितारं ॥ पुरंधिर्बहुधिरिति यास्कः ॥ वाजयंतो वाजिनं बलिनं कुर्वतः ॥ विभक्तिव्यत्ययः ॥ नः स्तुवतोऽस्मान् नराशंसो नरैः शंसनीयो ग्नास्पतिर्देवपत्नीनां पतिश्छंदसां पतिर्वा ॥ तथा च श्रूयते छंदांसि वै ग्ना इति उत ग्ना व्यंतु देवपत्नीः । ऋग्वे° ५. ४६.८.। इति च ॥ सविताव्याः । अव्यात्। किंच वामस्य धनस्य रयीणां पशूनां च ॥ तथा च श्रूयते पशवो वै रयिरिति ॥ आय आगमने संगथे संगमने च निमित्ते देवस्य द्योतमानस्य सवितुः प्रेरकस्य वयं प्रियाः स्याम। भवेम ॥

अ॒स्मभ्यं॒ तद्दि॒वो अ॒द्भ्यः पृंथि॒व्यास्त्वयां द॒त्तं काम्यं॒ राध॒ आ गांत् ।

शं यत्स्तो॒तृभ्यं आ॒पये॒ भवांत्युरु॒शंसांय सवितर्जरि॒त्रे ॥११

अ॒स्मभ्यं॑म् । तत् । दि॒वः । अ॒त्ऽभ्यः । पृ॒थि॒व्याः । त्वया॑ । द॒त्तम् । काम्यं॑म् । राधः॑ । आ । गा॒त् ।

शम् । यत् । स्तो॒तृऽभ्यः॑ । आ॒पये॑ । भवा॑ति । उ॒रु॒ऽशंसा॑य । स॒वि॒तः॒ । ज॒रि॒त्रे ॥११

अस्मभ्यं । तत्। दिवः । अत्ऽभ्यः। पृथिव्याः। त्वया । दत्तं । काम्यं। राधः। आ । गात् ।

शं । यत् । स्तोतृऽभ्यः । आपये । भवाति । उरुऽशंसाय। सवितः । जरित्रे ॥११॥

हे सवितः अस्मभ्यं त्वया दत्तं तत् प्रसिद्धं काम्यं कमनीयं राधो धनं दिवो द्युलोकात् अद्भ्योंऽतरिक्ष लोकात् पृथिव्या भूमेश्चा गात् । आगच्छतु । किंच स्तोतृभ्यः स्तोतॄणामापये बंधवे तद्वंशजाय यद्धनं शं सुखकरं भवाति भवेत् उरुशंसाय बहुस्तुतये जरित्रे स्तोत्रे मह्यं ॥

जरिता कारुरिति स्तोतृनामसु पाठात् ॥ हे सवितः तत्प्रयच्छ ॥ ॥३॥

## टिप्पणी

सवित्र्युपरि पौराणिकसंदर्भाः

# ऋग्वेदः सूक्तं २.३९

ऋग्वेदः - मण्डल २
← सूक्तं २.३८
सूक्तं २.३९
गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः
सूक्तं २.४० →

## दे. अश्विनौ। त्रिष्टुप्

ग्रावाणेव तदिदर्थं जरेथे गृध्रेव वृक्षं निधिमन्तमच्छ ।

ब्रह्माणेव विदथ उक्थशासा दूतेव हव्या जन्या पुरुत्रा ॥१॥

प्रातर्यावाणा रथ्येव वीराजेव यमा वरमा सचेथे ।

मेने इव तन्वा शुम्भमाने दम्पतीव क्रतुविदा जनेषु ॥२॥

शृङ्गेव नः प्रथमा गन्तमर्वाक्छफाविव जर्भुराणा तरोभिः ।

चक्रवाकेव प्रति वस्तोरुस्रार्वाञ्चा यातं रथ्येव शक्रा ॥३॥

नावेव नः पारयतं युगेव नभ्येव न उपधीव प्रधीव ।

श्वानेव नो अरिषण्या तनूनां खृगलेव विस्रसः पातमस्मान् ॥४॥

वातेवाजुर्या नद्येव रीतिरक्षी इव चक्षुषा यातमर्वाक् ।

हस्ताविव तन्वे शम्भविष्ठा पादेव नो नयतं वस्यो अच्छ ॥५॥

ओष्ठाविव मध्वास्ने वदन्ता स्तनाविव पिप्यतं जीवसे नः ।

नासेव नस्तन्वो रक्षितारा कर्णाविव सुश्रुता भूतमस्मे ॥६॥

हस्तेव शक्तिमभि संददी नः क्षामेव नः समजतं रजांसि ।

इमा गिरो अश्विना युष्मयन्तीः क्ष्णोत्रेणेव स्वधितिं सं शिशीतम् ॥७॥

एतानि वामश्विना वर्धनानि ब्रह्म स्तोमं गृत्समदासो अक्रन् ।

तानि नरा जुजुषाणोप यातं बृहद्वदेम विदथे सुवीराः ॥८॥

**सायणभाष्यम्**

॥

ग्रावाणेव ' इत्यष्टर्चं सप्तमं सूक्तं गार्त्समदं त्रैष्टुभमाश्विनं ' ग्रावाणेवाष्टावाश्विनम् ' इत्यनुक्रान्तत्वात् । प्रवर्ग्येऽभिष्टवे पूर्वे पटलेऽस्य विनियोगः । सूत्रितं च-' ग्रावाणेवेळे द्यावापृथिवी ' (आश्व. श्रौ. ४. ६) इति । प्रातरनुवाकाश्विनशस्त्रयोरपीदं सूक्तम् । सूत्रितं च-' ग्रावाणेव नासत्याभ्यामिति त्रीणि ' ( आश्व. श्रौ. ४ १५) इति ।।

ग्रावा॑णेव॒ तदिदर्थं॑ जरेथे॒ गृध्रे॑व वृ॒क्षं नि॑धि॒मन्त॒मच्छ॑ ।

ब्र॒ह्माणे॑व वि॒दथं उक्थ॒शासा॑ दू॒तेव॒ हव्या॒ जन्या॑ पुरु॒त्रा ॥१

ग्रावा॑णाऽइव । तत् । इत् । अर्थ॑म् । ज॒रे॒थे॒ इति॑ । गृध्रा॑ऽइव । वृ॒क्षम् । नि॒धि॒ऽमन्त॑म् । अच्छ॑ ।

ब्र॒ह्माणा॑ऽइव । वि॒दथे॑ । उ॒क्थ॒ऽशसा॑ । दू॒ताऽइं॑व । हव्या॑ । जन्या॑ । पु॒रु॒ऽत्रा ॥१

ग्रावाणाऽइव। तत् । इत्। अर्थं। जरेथे इति। गृध्राऽइव। वृक्ष। निधिऽमंतं । अच्छ।

ब्रह्माणोऽइव। विदथे । उक्थऽशसा। दूताऽइव। हव्यो। जन्या। पुरुऽत्रा ॥१॥

हे अश्विनौ ग्रावाणेव अरातिं प्रति प्रेषितौ पाषाणाविव तदर्थं ॥ अर्तेर्धातोरर्थशब्दः । अर्थोऽर्तेरिति यास्कः । नि० १.१८. ॥ तमरातिमित्यर्थः । इदिति पूरणः । जरेथे । जरयेथे । अरातिं बाधेथां । यद्वा यथा गुरू ग्रावाणौ क्षिप्तौ तदानीमेव शीघ्रं गच्छतस्तथा तत् तमर्थं गंतारं जरेथे ।

शीघ्रं गत्वा स्तुतमित्यर्थः ॥ जरतिः स्तुतिकर्मा ॥ किंच गृध्रेव गृध्राविव पक्षिणाविव वृक्षं फलितं वृक्षं निधिमंतं धनवंतं यजमानमच्छ । आगच्छतमिति शेषः । विदथे यज्ञे ॥ विदथः सवनमिति यज्ञनामसु पाठात् ॥ उक्थशासोक्थशंसितारौ ब्रह्माणेव ब्राह्मणाविव । जन्या जनपदेषु दूतेव राज्ञा प्रेषितौ दूताविव पुरुत्रा बहुभिः पुरुषैर्हव्या ह्वातव्यौ युवां । अत्रोपमेयद्वित्वानुसारेणोपमानद्वित्वं ॥

प्रा॒त॒र्यावा॑णा र॒थ्ये॑व वी॒राजे॑व य॒मा वर॒मा सं॑चेथे ।

मेने॑ इव त॒न्वा॒३॒ शुम्भ॑माने॒ दम्प॑तीव क्रतु॒विदा॒ जने॑षु ॥२

प्रा॒तः॒ऽयावा॑ना । र॒थ्या॑ऽइव । वी॒रा । अ॒जाऽइ॑व । य॒मा । वर॑म् । आ । स॒चे॒थे॒ इति॑ ।

मेनें इ॒वेति॒ मेनेंऽइव । त॒न्वां । शुम्भंमाने॒ इतिं । दम्पंती इ॒वेति॒ दम्पंतीऽइव । क्र॒तु॒ऽविदां । जनेंषु ॥२

प्रातःऽयावाना। रथ्याऽइव। वीरा। अजाऽइव। यमा। वरं। आ । सचेथे इति ।

मेने इवेति मेनेऽइव । तन्वा । शुंभमाने इति । दंपती इवेति दंपतीऽइव । क्रतुऽविदा । जनेषु ॥२॥

हे अश्विनौ प्रातर्यावाणा प्रातरेव यज्ञार्थं गंतारौ रथ्येव रथिनाविव वीरौ स्वकर्मणि शूरौ। अजेवाजाविव छागाविव यमा यमलौ । मेने इव नार्याविव तन्वा शरीरेण शुंभमाने शोभमानौ । दंपतीव जायापती इव संगतौ जनेषु विषयेषु क्रतुविदा कर्मविदौ युवां वरं संभक्तारमासचेथे । आगच्छथ ॥

शृङ्गे॑व नः प्रथ॒मा ग॑न्तम॒र्वाक्छ॒फावि॑व॒ जर्भु॑राणा॒ तरो॑भिः ।

च॒क्र॒वा॒केव॒ प्रति॒ वस्तो॑रुस्रा॒र्वाञ्चा॑ यातं र॒थ्ये॑व शक्रा ॥३

शृङ्गा॑ऽइव । न॒ः । प्र॒थ॒मा । ग॒न्त॒म् । अ॒र्वाक् । श॒फौऽइ॑व ।
जर्भु॑राणा । तर॑ःऽभिः ।

च॒क्र॒वा॒काऽइ॑व । प्रति॑ । वस्तो॑ः । उ॒स्रा॒ । अ॒र्वाञ्चा॑ ।
या॒त॒म् । र॒थ्या॑ऽइव । श॒क्रा॒ ॥३

शृंगाऽइव । नः । प्रथमा। गंतं । अवाक् । शफौऽइव।
जर्भुराणा । तरःऽभिः ।।

चक्रवाकाऽइव। प्रति । वस्तोः। उस्रा । अर्वांचा। यातं ।
रथ्याऽइव । शक्रा ॥३॥

हे अश्विनौ शृंगेव पशोः शृंगे इव प्रथमा देवानां प्रथमौ शफाविवाश्वादेः खुराविव तरोभिर्वेगैर्जर्भुराणा भृशं गच्छंतौ युवां नोऽस्मान्प्रत्यर्वागभिमुखमागंतं । आगच्छतं । किंच हे अश्विनौ वस्तोः प्रति अहः प्रति चक्रवाकेव चक्रवाकाविव हे उस्रा शत्रूणामुत्सारकौ गमनशीलौ वा रथ्येव रथिनाविव हे शक्रा स्वकर्मणि शक्तावर्वांचास्मदभिमुखौ यातं । गच्छतं ॥

नावेवं नः पारयतं युगेव नभ्येंव न उपधीवं प्रधीवं ।

श्वानेंव नो अरिंषण्या तनूनां खृगंलेव विस्रसः पातमस्मान् ॥४

नावाऽइंव । नः । पारयतम् । युगाऽइंव । नभ्यांऽइव । नः । उपधी इवेत्युंपधीऽइंव । प्रधी इवेतिं प्रधीऽइंव ।

श्वानांऽइव । न॒ः । अरिंषण्या । त॒नूनांम् । खृगंलाऽइव ।
वि॒ऽस्रसः॑ । पा॒त॒म् । अ॒स्मान् ॥४

नावाऽइव। नः । पारयतं । युगाऽइव । नभ्याऽइव। नः।
उपधी इवेत्युपधीऽइव । प्रधी इवेति प्रधीऽइव ।

श्वानाऽइव।नः। अरिषण्या। तनूनां। खृगलाऽइव।
विऽस्रसः। पातं। अस्मान्॥४॥

हे अश्विनौ नावेव नावाविव सिंधून् नोऽस्मान् दुर्गाणि पारयतं । युगेव यथा रथस्य युगे नभ्येव यथा च रथचक्रनाभिफलके। उपधी इव यथा तत्पार्श्वस्थे फलके प्रधी इव यथा वा चक्रबाह्यवलयौ रथं पारयतः तथा नोऽस्मान्दुर्गाणि पारयतं । किंच श्वानेव श्वानाविव यथा श्वानौ बाधकेभ्यो रक्षंतौ तनोर्हिंसामपनयतः तथा नोऽस्माकं तनूनामंगानामरिषण्यावहिंसकौ भवतं ।

खृगलेव यथा तनुत्राणे तनुहिंसाया रक्षतः तथा विस्रसो जराया अस्मान्युवां पातं ॥

वातेंवाजुर्या नद्येंव रीतिरक्षी इंव चक्षुषा यांतमर्वाक् ।

हस्तांविव तन्वे३ शम्भंविष्ठा पादेंव नो नयतं वस्यो अच्छं ॥५

वातांऽइव । अजुर्या । नद्यांऽइव । रीतिः । अक्षी इवेत्यक्षीऽइंव । चक्षुंषा । आ । यातम् । अर्वाक् ।

हस्तौंऽइव । तन्वें । शम्ऽभंविष्ठा । पादांऽइव । नः । नयतम् । वस्यः । अच्छं ॥५

वाताऽइव।अजुर्या।नद्याऽइव।रीतिः।अक्षी इवेत्यक्षी इव। चक्षुषा। आ। यातं।अर्वाक्।

हस्तौ ऽइव। तन्वे । शंऽभविष्ठा। पादाऽइव। नः। नयतं । वस्यः । अच्छ॥५॥

हे अश्विनौ वातेव वाताविवाजुर्या जरितुमशक्यौ नद्येव नद्याविव रीतिः ॥ व्यत्ययेनैकवचनं ॥ शीघ्रं गंतारौ युवां । अक्षी इव अक्षिणी इव चक्षुषा दर्शनेनार्वागस्मदभिमुखमायातं । आगच्छतं । किंच हस्तेव हस्ताविव पादेव पादाविव तन्वे शरीराय शंभविष्ठा सुखस्य भावयितृतमौ युवां नो ऽस्मान् वस्यो वसीयः श्रेष्ठं धनमच्छ प्रति नयतं । प्रापयतं ॥ ॥ ४॥

ओष्ठा॑विव॒ मध्वा॒स्ने वद॑न्ता॒ स्तना॑विव पिप्यतं जी॒वसे॑ नः ।

नासे॑व नस्त॒न्वो॑ रक्षि॒तारा॒ कर्णा॑विव सु॒श्रुता॑ भूतम॒स्मे ॥६

ओष्ठौंऽइव । मधुं । आ॒स्ने । वदं॑न्ता । स्तनौंऽइव ।
पि॒प्य॒त॒म् । जी॒वसें । न॒ः ।

नासांऽइव । न॒ः । त॒न्व॑ः । र॒क्षि॒तारां । कर्णौंऽइव । सु॒ऽश्रुतां
। भू॒त॒म् । अ॒स्मे इतिं ॥६

ओष्ठौऽइव। मधु । आस्ने । वदंता । स्तनौऽइव। पिप्यतं ।
जीवसे । नः।

नासाऽइव।नः। तन्वः। रक्षितारा। कर्णौऽइव । सुऽश्रुता ।
भूतं । अस्मे इति ॥६॥

हे अश्विनौ ओष्ठाविवास्न आस्याय मधुररसवद्वचनं वदंतौ
स्तनाविव नोऽस्मान् जीवसे जीवनाय पिप्यतं । प्याययतं
। किंच नासेव नासिके इव नोऽस्माकं तन्वस्त नो रक्षितारा
रक्षितारौ भूतं । भवतं । अपि च कर्णाविवास्मे अस्माकं
सुश्रुता सुश्रवणे युवां भूतं । भवतं ॥

हस्तेंव श॒क्तिम॒भि संद॒दी न॒ः क्षामेंव न॒ः समंजत॒ं रजांसि ।

इ॒मा गिरों अश्विना युष्म॒यन्ती॒ः क्ष्णोत्रेंणेव॒ स्वधिंति॒ं सं शिंशीतम् ॥७

हस्तांऽइव । श॒क्तिम् । अ॒भि । स॒न्द॒दी इतिं स॒म्ऽद॒दी । न॒ः । क्षामांऽइव । न॒ः । सम् । अ॒ज॒त॒म् । रजांसि ।

इ॒माः । गिरः॑ । अ॒श्वि॒ना॒ । यु॒ष्म॒ऽयन्तीः॑ । क्ष्णोत्रेंणऽइव । स्वऽधिंतिम् । सम् । शि॒शी॒त॒म् ॥७

हस्ताऽइव।शक्तिं। अभिःसंददी इति संऽददी।नः।
क्षामऽइव।नः।सं। अजतं।रजांसि।

इमाः। गिरः। अश्विना। युष्मऽयंतीः। क्ष्णोत्रेणऽइव।
स्वऽधिंतिं । सं। शिशीतं ॥७॥

हे अश्विनौ हस्तेव हस्ताविव शक्तिं सामर्थ्यं नोऽस्माकमभिसददी आभिमुख्येन सम्यक् प्रयच्छतौ भवतं । किंच क्षामेव रोदसी इव रजांसि स्थानान्युदकानि वा ॥ उदकं रज उच्यत इति यास्कः ॥ नोऽस्माकं समजतं । प्रेरयतं । अपि च अश्विना हे अश्विनौ इमा गिरोऽस्माभिः कृताः स्तुतीर्युष्मयंतीर्युवामिच्छंतीः स्वधितिमसिं क्ष्णोत्रेणेव तेजनशाणवत् संशिशीतं । सम्यक् तीक्ष्णीकुरुतं ॥

ए॒तानिं वामश्विना॒ वर्धंनानि॒ ब्रह्म॒ स्तोमं गृत्सम॒दासों अक्रन् ।

तानिं नरा जुजुषा॒णोपं यातं बृ॒हद्वंदेम वि॒दथें सु॒वीराः ॥८

ए॒तानिं । वा॒म् । अ॒श्वि॒ना॒ । वर्धंनानि । ब्रह्मं । स्तोमंम् । गृ॒त्स॒ऽम॒दासः । अ॒क्र॒न् ।

तानिं । न॒रा॒ । जु॒जु॒षा॒णा । उपं । या॒त॒म् । बृ॒हत् । व॒दे॒म॒ । वि॒दथें । सु॒ऽवीराः॑ ॥८

एतानि । वां। अश्विना। वर्धनानि । ब्रह्म । स्तोमं । गृत्सऽमदासः। अक्रन्।

तानि । नरा। जुजुषाणा । उप। यातं । बृहत् । वदेम । विदथे । सुऽवीराः ॥८॥

अश्विना हे अश्विनौ वां युवयोरेतानि वर्धनानि वृद्धिसाधनानि ब्रह्म ब्रह्माणि मंत्रान् स्तोमं स्तोत्रं च गृत्समदासो गृत्समदा अक्रन्। अकुर्वन् । तानि ब्रह्माणि नरा नेतारौ जुजुषाणा भृशं प्रीयमाणौ युवामुपयातं । उपगच्छतं । किंच सुवीराः शोभनपुत्रा वयं विदथे यज्ञे युवां बृहद्वदेम । प्रभूतं स्तुमः ॥ ॥५॥

# ऋग्वेदः सूक्तं २.४०



## दे. सोमापूषणौ, ६ (अन्त्यार्धर्चस्य) अदितिः । त्रिष्टुप्।

सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः ।

जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् ॥१॥

इमौ देवौ जायमानौ जुषन्तेमौ तमांसि गूहतामजुष्टा ।

आभ्यामिन्द्रः पक्वमामास्वन्तः सोमापूषभ्यां जनदुस्रियासु ॥२॥

सोमापूषणा रजसो विमानं सप्तचक्रं रथमविश्वमिन्वम् ।

विषूवृतं मनसा युज्यमानं तं जिन्वथो वृषणा पञ्चरश्मिम् ॥३॥

दिव्यन्यः सदनं चक्र उच्चा पृथिव्यामन्यो अध्यन्तरिक्षे ।

तावस्मभ्यं पुरुवारं पुरुक्षुं रायस्पोषं वि ष्यतां नाभिमस्मे ॥४॥

विश्वान्यन्यो भुवना जजान विश्वमन्यो अभिचक्षाण एति ।

सोमापूषणाववतं धियं मे युवाभ्यां विश्वाः पृतना जयेम ॥५॥

धियं पूषा जिन्वतु विश्वमिन्वो रयिं सोमो रयिपतिर्दधातु ।

अवतु देव्यदितिरनर्वा बृहद्वदेम विदथे सुवीराः ॥६॥

## सायणभाष्यम्

' सोमापूषणा ' इति षड्डृचमष्टमं सूक्तं गार्त्समदं त्रैष्टुभं सोमापूषदेवताकम् । तथा चानुक्रान्तं- ' सोमापूषणा षट् सोमापौष्णमन्त्योऽर्धर्चोऽप्यदितेः ' इति । ' अवतु

देव्यदितिः ' इत्यस्य अनयार्धर्चस्य अदितिर्देवता। सोमापौष्णे पशौ वपापुरोडाशहविषामाद्यास्तिस्रः क्रमेणानुवाक्या उत्तरास्तिस्रो याज्याः । ' अग्नीषोमौ ' इति खण्डे सूत्रितं-' सोमापूषणा जनना रयीणाम् ' ( आश्व. श्रौ. ३. ८) इति ।।

सोमा॑पूषणा॒ जन॑ना रयी॒णां जन॑ना दि॒वो जन॑ना पृथि॒व्याः ।

जा॒तौ विश्व॑स्य॒ भुव॑नस्य गो॒पौ दे॒वा अ॑कृण्वन्न॒मृत॑स्य॒ नाभि॑म् ॥१

सोमा॑पूषणा । जन॑ना । र॒यी॒णाम् । जन॑ना । दि॒वः । जन॑ना । पृ॒थि॒व्याः ।

जा॒तौ । विश्व॑स्य । भुव॑नस्य । गो॒पौ । दे॒वाः । अ॒कृ॒ण्व॒न् । अ॒मृत॑स्य । नाभि॑म् ॥१

सोमपूषणा । जनना। रयीणां । जनना। दिवः । जनना। पृथिव्याः।

जातौ। विश्वस्य । भुवनस्य । गोपौ । देवाः । अकृण्वन् । अमृतस्य । नाभिं ॥१॥

सोमापूषणा हे सोमापूषणौ युवां रयीणां धनानां जनना जनयितारौ दिवः द्युलोकस्यापि जनना जनयितारौ पृथिव्याः प्रथितायाश्च जनयितारौ भवथः । किंच जातौ जातमात्रावेव युवां विश्वस्य भुवनस्य कृत्स्नस्य जगतः गोपौ गोप्तारौ देवाः अमृतस्य अमरणस्य नाभिं हेतुम् अकृण्वन् अकार्षुः ।।

इ॒मौ दे॒वौ जाय॑मानौ जुषन्ते॒मौ तमां॑सि गूहता॒मजु॑ष्टा ।

आ॒भ्यामिन्द्रः॑ प॒क्वमा॒मास्व॒न्तः सो॑मापू॒षभ्यां॑ जनदु॒स्रियां॑सु ॥२

इ॒मौ । दे॒वौ । जाय॑मानौ । जु॒ष॒न्त॒ । इ॒मौ । तमां॑सि । गू॒ह॒ता॒म् । अजु॑ष्टा ।

आ॒भ्याम् । इन्द्रः॑ । प॒क्वम् । आ॒मासु॑ । अ॒न्तरिति॑ । सो॒मा॒पू॒षऽभ्यां॑म् । ज॒न॒त् । उ॒स्रियां॑सु ॥२

इमौ। देवौ। जायमानौ। जुषंत। इमौ। तमांसि। गूहतां । अजुष्टा।

आभ्यां । इंद्रः। पक्वं । आमासु । अंतरिति । सोमापूषऽभ्याँ। जनत् । उस्रियासु ॥२॥

इमौ सोमापूषणौ देवौ द्योतमानौ जायमानावुत्पन्नमात्रावेव जुषंत । सर्वे देवा अजुषंत । सेवितवंत इति यावत् । किंच इमौ सोमापूषणावजुष्टासेव्यानि तमांसि सर्वस्व गूहतां । नाशयतः । किंच आभ्यामेताभ्यां सोमापूषभ्यां सहेंद्र आमासु तरुणीषुस्त्रियासु गोष्वंतर्मध्य ऊधःप्रदेशे पक्वं परिपक्वं पयो जनत् । जनयति ॥

सोमा॑पूषणा॒ रज॑सो वि॒मानं॑ स॒प्तच॑क्रं॒ रथ॒मवि॑श्वमिन्वम् ।

वि॒षू॒वृतं॒ मन॑सा यु॒ज्यमा॑नं॒ तं जि॑न्वथो वृषणा॒ पञ्च॑रश्मिम् ॥३

सोमा॑पूषणा । रज॑सः । वि॒ऽमान॑म् । स॒प्तऽच॑क्रम् । रथ॑म् । अवि॑श्वऽमिन्वम् ।

वि॒षु॒ऽवृतं॑म् । मनं॑सा । यु॒ज्यमां॑नम् । तम् । जि॒न्व॒थ॒ः । वृ॒ष॒णा॒ । पञ्चं॑ऽरश्मिम् ॥३

सोमपूषणा । रजसः । विऽमानं । सप्तऽचक्रं । रथं । अविश्वऽमिन्वं ।

विषुऽवृतं । मनसा । युज्यमानं । तं । जिन्वथः । वृषणा । पंचऽरश्मिं ॥३॥

वृषणा वृषणौ कामानां वर्षितारौ सोमापूषणा हे सोमापूषणौ रजसो लोकस्य । लोका रजांस्युच्यंत इति यास्कः । विमानं परिच्छेदकं । सर्वमानमित्यर्थः । सप्तचक्रं सप्तर्तुचक्रं । त्रयोदशो मासः सप्तम ऋतुः । अस्ति त्रयोदशो मास इति श्रुतेः । अविश्वमिन्वं विश्वस्यापरिच्छेद्यं विषुवृतं विष्वक् सर्वत्र परिवर्तमानं पंचरश्मिं पंचर्तुरश्मिं । हेमंतशिशिरयोः समासेनर्तवः पंच । तथा च श्रूयते । द्वादश मासाः पंचर्तवो हेमंतशिशिरयोः

समासेन । ऐ° ब्रा० १.१.। इति । मनसा युज्यमानं मनोमात्रेण युज्यमानं । तं प्रसिद्धं रथं जिन्वथः । अस्मान्प्रति प्रेरयथः ॥

दि॒व्य१॒॑न्यः सद॑नं च॒क्र उ॒च्चा पृ॑थि॒व्याम॒न्यो अध्य॒न्तरि॑क्षे ।

ताव॒स्मभ्यं॑ पुरु॒वारं॑ पुरु॒क्षुं रा॒यस्पोषं॒ वि ष्यं॑ता॒ं नाभि॑म॒स्मे ॥ ४

दि॒वि । अ॒न्यः । सद॑नम् । च॒क्रे । उ॒च्चा । पृ॒थि॒व्याम् । अ॒न्यः । अधि॑ । अ॒न्तरि॑क्षे ।

तौ । अ॒स्मभ्य॑म् । पु॒रु॒ऽवार॑म् । पु॒रु॒ऽक्षुम् । रा॒यः । पोष॑म् । वि । स्य॒ता॒म् । नाभि॑म् । अ॒स्मे इति॑ ॥४

दिवि। अन्यः । सदनं । चक्रे । उच्चा। पृथिव्यां । अन्यः । अधि। अंतरिक्षे।

तौ। अस्मभ्यं। पुरुऽवारं। पुरुऽक्षुं।रायः । पोषं। वि।स्यतां। नाभिं। अस्मे इति॥४॥

अन्यः तयोरेकः पूषा उच्चा उच्चैरुच्छ्रिते दिवि द्युलोके सदनं स्थानं चक्रे चकार । अन्यः अपरः सोमः पृथिव्याम् ओषधिरूपेण अध्यन्तरिक्षे अन्तरिक्षे च चन्द्ररूपेण सदनं चक्रे । तौ सोमापूषणौ युवां पुरुवारं बहुभिर्वरणीयं पुरुक्षुं बहुकीर्तिं रायस्पोषं धनस्य पुष्टिम् । पश्वात्मकं धनमित्यर्थः । तथा च ब्राह्मणं-' पशवो वै रायस्पोषः ' (तै. सं. ५.४.६. २) इति । अस्मे अस्माकं नाभिं विश्वस्य भोगस्य हेतुभूतम् अस्मभ्यं वि ष्यताम् विमुञ्चताम् । प्रयच्छतामित्यर्थः

विश्वा॑न्य॒न्यो भुव॑ना ज॒जान॒ विश्व॑म॒न्यो अ॑भि॒चक्षा॑ण एति ।

सोमा॑पूषणा॒वव॑तं॒ धियं॑ मे यु॒वाभ्या॒ं विश्वा॒ः पृत॑ना जयेम ॥५

विश्वा॑नि । अ॒न्यः । भुव॑ना । ज॒जान॑ । विश्व॑म् । अ॒न्यः । अ॒भि॒ऽचक्षा॑णः । ए॒ति॒ ।

सोमा॑पूषणौ । अव॑तम् । धिय॑म् । मे॒ । यु॒वाभ्या॑म् । विश्वा॑ः । पृत॑नाः । ज॒ये॒म॒ ॥५

विश्वानि । अन्यः । भुवना। जजान। विश्वं । अन्यः । अभिऽचक्षाणः । एति ।

सोमपूषणौ। अवतं । धियं । मे। युवाभ्यां। विश्वाः । पृतनाः । जयेम ॥५॥

हे सोमापूषणौ अन्यो युवयोरेकः सोमो विश्वानि भुवना भुवनानि भूतानि जजान । अजनयत् । तथा च मंत्रः । सोमः पवते जनिता मतीनां । ऋग्वे° ९. ९६.५.। इति ।

अन्योऽपरः पूषादित्यो विश्वमभिचक्षाणो ऽभिपश्यन्नेति । गच्छति । तौ युवां सोमापूषणो मे धियं कर्म ॥ धीः शचीति कर्मनामसु पाठात् ॥ अवतं ।। रक्षतं । किंच वयं युवाभ्यां हेतुभ्यां विश्वाः पृतनाः सर्वाः शत्रुसेना जयेम । अभिभवेम ॥

धियं॑ पू॒षा जिं॑न्वतु विश्वमि॒न्वो र॒यिं सोमो॑ रयि॒पति॑र्दधातु ।

अवं॑तु दे॒व्यदिं॑तिरन॒र्वा बृ॒हद्वं॑देम वि॒दथे॑ सु॒वीराः॑ ॥६

धियं॑म् । पू॒षा । जि॒न्व॒तु॒ । वि॒श्व॒म्ऽइ॒न्वः । र॒यिम् । सोमः॑ । र॒यि॒ऽपतिः॑ । द॒धा॒तु॒ ।

अवं॑तु । दे॒वी । अदिं॑तिः । अ॒न॒र्वा । बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥६

धियं । पूषा। जिन्वतु । विश्वंऽइन्वः । रयिं । सोमः । रयिऽपतिः । दधातु ।।

अवतु । देवी। अदितिः । अनर्वा। बृहत् । वदेम। विदथे । सुऽवीराः ॥६॥

पूषादित्यो विश्वमिन्वो विश्वस्य प्रीणयिता धियमस्माकं कर्म जिन्वतु । तर्पयतु । रयिपतिर्धनपतिः सोमो रयिं धनं दधातु । अस्मभ्यं ददातु। किंच देवी द्योतमानानर्वाप्रत्यृता केनापि प्रातिकूल्यमप्रापितादितिरवतु । अस्मान् रक्षतु । अन्यत् सिद्धं ॥ ॥६॥

# ऋग्वेदः सूक्तं २.४१



दे. १-२ वायुः, ३ इन्द्रवायू, ४-६ मित्रावरुणौ, ७-९ अश्विनौ, १०-१२ इन्द्रः, १३-१५ विश्वे देवाः, १६-१८ सरस्वती, १९-२१ द्यावापृथिव्यौ हविर्धाने वा (१९ तृतीयपादस्य - अग्निर्वा)। गायत्री, १६-१७ अनुष्टुप्, १८ बृहती।

---



*ऐन्द्रवायव + मैत्रावरुणग्रहौ। द्विदेवत्यग्रहः२*



*ऐन्द्रवायव + मैत्रावरुण +आश्विन् ग्रहाः। द्विदेवत्यग्रहः३*



*वराहमुखे सरस्वती, खजुराहो*

वायो ये ते सहस्रिणो रथासस्तेभिरा गहि ।

नियुत्वान्सोमपीतये ॥१॥

नियुत्वान्वायवा गह्ययं शुक्रो अयामि ते ।

गन्तासि सुन्वतो गृहम् ॥२॥

शुक्रस्याद्य गवाशिर इन्द्रवायू नियुत्वतः ।

आ यातं पिबतं नरा ॥३॥

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा ।

ममेदिह श्रुतं हवम् ॥४॥

राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे ।

सहस्रस्थूण आसाते ॥५॥

ता सम्राजा घृतासुती आदित्या दानुनस्पती ।

सचेते अनवह्वरम् ॥६॥

गोमदू षु नासत्याश्वावद्यातमश्विना ।

वर्ती रुद्रा नृपाय्यम् ॥७॥

न यत्परो नान्तर आदधर्षद्वृषण्वसू ।

दुःशंसो मर्त्यो रिपुः ॥८॥

ता न आ वोळ्हमश्विना रयिं पिशङ्गसंदृशम् ।

धिष्ण्या वरिवोविदम् ॥९॥

इन्द्रो अङ्ग महद्भयमभी षदप चुच्यवत् ।

स हि स्थिरो विचर्षणिः ॥१०॥

इन्द्रश्च मृळयाति नो न नः पश्चादघं नशत् ।

भद्रं भवाति नः पुरः ॥११॥

इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् ।

जेता शत्रून्विचर्षणिः ॥१२॥

विश्वे देवास आ गत शृणुता म इमं हवम् ।

एदं बर्हिर्नि षीदत ॥१३॥

तीव्रो वो मधुमाँ अयं शुनहोत्रेषु मत्सरः ।

एतं पिबत काम्यम् ॥१४॥

इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः ।

विश्वे मम श्रुता हवम् ॥१५॥

अम्बितमे नदीतमे देवितमे सरस्वति ।

अप्रशस्ता इव स्मसि प्रशस्तिमम्ब नस्कृधि ॥१६॥

त्वे विश्वा सरस्वति श्रितायूंषि देव्याम् ।

शुनहोत्रेषु मत्स्व प्रजां देवि दिदिड्ढि नः ॥१७॥

इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति ।

या ते मन्म गृत्समदा ऋतावरि प्रिया देवेषु जुह्वति ॥१८॥

प्रेतां यज्ञस्य शम्भुवा युवामिदा वृणीमहे ।

अग्निं च हव्यवाहनम् ॥१९॥

द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् ।

यज्ञं देवेषु यच्छताम् ॥२०॥

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः ।

इहाद्य सोमपीतये ॥२१॥

## सायणभाष्यम्

' वायो ये ते ' इत्येकविंशत्यृचं नवमं सूक्तं गार्त्समदं गायत्रम् । ' अम्बितमे ' इति षष्ठस्य तृचस्य आदितो द्वे अनुष्टुभौ तृतीया बृहती । ' वायो ये ते ' इत्यादिके द्वे ऋचौ वायव्यौ । ' शुक्रस्याद्य ' इत्येषा ऐन्द्रवायवी । ' अयं वां मित्रावरुणा ' इति पञ्चानां तृचानां मित्रावरुणौ अश्विनौ इन्द्रः विश्वे देवाः सरस्वती इति क्रमेण देवताः । ' प्रेतां यज्ञस्य ' इत्यन्त्यस्तृचो ब्राह्मणसूत्रयोर्हविर्धानप्रवर्तने द्यावापृथिव्यनिविद्धानत्वेन च विनियुक्तत्वात् द्यावापृथिव्यो हविर्धानदेवत्यो वा । ' अग्निं च हव्यवाहनम् ' इति पादोऽग्निदेवत्यो वा । तथा चानुक्रान्तं-' वायो सैका गायत्रमुक्ता देवताः प्रउगेणाद्ये तु तृचेऽनयैन्द्रवायवी द्यावापृथिव्योऽनयस्तृचो हाविर्धानो वा तृतीयः पादो

वाग्नेयोऽम्बितमेऽनुष्टुभौ बृहती च ' इति । पृष्ठयाभिप्लवषडहयोर्द्वितीयेऽहनि प्रउगेऽन्त्यतृचवर्जमेतत्सूक्तम् । वायव्यतृचस्य ' वायो ये ते सहस्रिणः ' इत्याद्ये द्वे ऋचौ ऐन्द्रवायवतृचस्य ' शुक्रस्याद्य ' इत्येषा तृतीया । तथा च सूचितं- ' वायो ये ते सहस्रिण इति द्वे तीव्राः सोमास आ गहीत्येकोभा देवा दिविस्पृशेति द्वे शुक्रस्याद्य गवाशिर इत्येकायं वां मित्रावरुणेति पञ्च तृचाः ' (आश्व. श्रौ. ७. ६) इति । चातुर्विंशिकेऽहनि प्रातःसवने मैत्रावरुणशस्त्रे ' अयं वां मित्रावरुणा ' इति षळहस्तोत्रियसंज्ञकः । ' चतुर्विंशे होताजनिष्ट ' इति खण्डे सूत्रितम्-' अयं वां मित्रावरुणा पुरूरुणा चिद्ध्यस्ति ' ( आश्व. श्रौ. ७. २) इति । आभिप्लविकेष्वहःसु प्रातःसवने मैत्रावरुणशस्त्रेऽयमेव तृचः पञ्चदशादिस्तोमनिमित्तमावापनीयः । ' अयं वां मित्रावरुणा नो मित्रावरुणेति तृचाः ' ( आश्व. श्रौ. ७.५) इति सूत्रितत्वात् । आद्या मैत्रावरुणग्रहस्यानुवाक्या ।

सूत्रितं च-' मैत्रावरुणस्य अयं वां मित्रावरुणा ' ( आश्व. श्रौ. ५.५) इति । प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दसि ' गोमदू षु ' इति तृचो विनियुक्तः । ' गोमदू षु नासत्येति तृचा ' ( आश्व. श्रौ. ४.१५) इति सूत्रितत्वात् । अतिरात्रे प्रथमे पर्याये ब्राह्मणाच्छंसिशस्त्रे ' इन्द्रो अङ्ग महद्भयम् ' इति तृचः । ' अतिरात्रे पर्यायाणाम् ' इति खण्डे सूत्रितम्-' इन्द्रो अङ्ग महद्भयमभि न्यू षु वाचम् ' (आश्व. श्रौ. ६ .४) इति । आग्रयणे वैश्वदेवस्य हविषः ' विश्वे देवासः ' इत्यनुवाक्या । ' आग्रयणम् ' इति खण्डे सूत्रितं-' विश्वे देवास आ गत ये के च ज्मा महिनो अहिमायाः ' ( आश्व श्रौ. २. ९) इति । दशरात्रे प्रथमेऽहनि प्रउगशस्त्रे ' अम्बितमे नदीतमे ' इति सारस्वतः सप्तमस्तृचः । ' चतुर्थेऽहनि ' इति खण्डे सूत्रितम्--' अम्बितमे नदीतम इत्यानुष्टुभं प्रउगम् ' ( आश्व. श्रौ. ७.११) इति । व्यूढे दशरात्रे प्रथमे छन्दोमे वैश्वदेवशस्त्रे ' प्रेतां यज्ञस्य शंभुवा ' इति द्यावापृथिव्यनिविद्धानीयस्तृचः । ' अथ छन्दोमाः '

इति खण्डे सूत्रितं- ' प्रेतां यज्ञस्य शंभुवायं देवाय जन्मन इति तृचाः ' ( आश्व. श्रौ. ८.९) इति ।
हविर्धानप्रवर्तनेऽप्ययं तृचो विनियुक्तः । सूत्रितं च-' प्रेतां यज्ञस्य शंभुवा यमे इव यतमाने यदैतम् ' ( आश्व. श्रौ ४. ९; ऐ.ब्रा. १ २९) इति ।।

वायो॒ ये तें सह॒स्रिणो॒ रथा॑स॒स्तेभि॒रा गं॑हि ।

नि॒युत्वा॒न्सोमं॑पीतये ॥१

वायो॒ इतिं । ये । ते॒ । स॒ह॒स्रिणः॑ । रथा॑सः । तेभिः॑ । आ । ग॒हि॒ ।

नि॒युत्वा॑न् । सोमं॑ऽपीतये ॥१

वायो इति । ये । ते । सहस्रिणः । रथासः । तेभिः । आ । गहि ।

नियुत्वान् । सोमऽपीतये ॥१

हे वायो ते त्वदीया ये सहस्रिणः सहस्रसंख्याका रथासः रथाः तेभिस्तैर्नियुत्वान् नियुद्भि- युक्तस्त्वं सोमपीतये सोमपानार्थमागह्यागच्छ नानारूपत्वात् वायोः सर्वाभिर्विभूतिभिः सहा- गमनं प्रार्थ्यत इति भावः ।। १ ।।

नि॒युत्वां॑न्वाय॒वा ग॑ह्य॒यं शु॒क्रो अ॑यामि ते ।

गन्ता॑सि सुन्व॒तो गृ॒हम् ॥२

नि॒युत्वा॑न् । वा॒यो॒ इति॑ । आ । ग॒हि॒ । अ॒यम् । शु॒क्रः । अ॒या॒मि॒ । ते॒ ।

गन्ता॑ । अ॒सि॒ । सु॒न्व॒तः । गृ॒हम् ॥२

नियुत्वान् । वायो इति । आ । गहि । अयम् । शुक्रः । अयामि । ते ।

गन्ता । असि । सुन्वतः । गृहम् ॥२

हे वायो नियुत्वान् नियुतो वाहनानि वायोः तैर्युक्तस्त्वं आगह्यागच्छ अयं शुक्रो दीप्यमा नः सोमः ते तुभ्यं अयामि नियतो गृहीत आसीत् यमेःकर्मणि लुङ् सुन्वतः सोमाविषवं कुर्व- तो यजमानस्य गृहं गन्तासि याता भवसि ।। २ ।।

शु॒क्रस्या॒द्य गवां॑शिर॒ इन्द्रं॑वायू नि॒युत्वं॑तः ।

आ यां॑तं॒ पिबं॑तं नरा ॥३

शु॒क्रस्यं॑ । अ॒द्य । गोऽआं॑शिरः । इन्द्रं॑वायू॒ इतिं॑ । नि॒युत्वं॑तः ।

आ । या॒त॒म् । पिबं॑तम् । न॒रा॒ ॥३

शुक्रस्य । अद्य । गोऽआशिरः । इन्द्रवायू इति । नियुत्वतः ।

आ । यातम् । पिबतम् । नरा ॥३

हे नरा नेतारौ हे इन्द्रवायू अद्यास्मिन्नहनि नियुत्वतः विभक्तिव्यत्ययः नियुत्वन्तौ युवां गवाशिरः गव्यं पयः आशीराश्रयणसाधनं यस्य तस्य शुक्रस्य दीप्तस्य सोमस्य पानार्थं आया- तं आगच्छतं आगत्य सोमं पिबतम् ।। ३ ।।

अ॒यं वां मित्रावरुणा सु॒तः सोमं ऋतावृधा ।

ममेदि॒ह श्रुं॑त॒ं हवंम् ॥४

अ॒यम् । वा॒म् । मि॒त्रा॒व॒रु॒णा॒ । सु॒तः । सोमः॑ । ऋ॒त॒ऽवृ॒धा॒ ।

ममं । इत् । इ॒ह । श्रु॒त॒म् । हवंम् ॥४

अयम् । वाम् । मित्रावरुणा । सुतः । सोमः । ऋतऽवृधा ।

मम । इत् । इह । श्रुतम् । हवम् ॥४

मित्रावरुणा हे मित्रावरुणौ वां युवाभ्यां अयं सोमः सुतः अभिषुतः क्रतावृधा हे सत्यस्य यज्ञस्य वावर्धकौ ममेत् ममैव इहास्मिन्यज्ञे हवमाह्वानं श्रुतं शृणुतम् ।। ४ ।।

राजांना॒वनंभिद्रुहा ध्रु॒वे सदंस्युत्त॒मे ।

स॒हस्रंस्थूण आसाते ॥५

राजांनौ । अनंभिऽद्रुहा । ध्रु॒वे । सदंसि । उ॒त्ऽत॒मे ।

स॒हस्र॑ऽस्थूणे । आ॒सा॒ते॒ इति॑ ॥५

राजानौ । अनभिऽद्रुहा । ध्रुवे । सदसि । उत्ऽतमे ।

सहस्रऽस्थूणे । आसाते इति ॥५

राजानौ ईश्वरौ दीप्यमानौ वा अनभिद्रुहा अनभिद्रोग्धारौ यौ मित्रावरुणौ ध्रुवे स्थिरे उत्तमे उत्कृष्टे सहस्रस्थूणे बहुस्तंभे सदसिस्थाने आसाते उपविशतः तावागच्छतमितिशेषः ।। ५ ।।

ता स॒म्राजा॑ घृ॒तासु॑ती आ॒दि॒त्या दानु॑न॒स्पती॑ ।

सचे॑ते॒ अन॑वह्वरम् ॥६

ता । स॒म्ऽराजा॑ । घृ॒तासु॑ती॒ इति॑ घृ॒तऽआ॑सुती । आ॒दि॒त्या । दानु॑नः । पती॒ इति॑ ।

सचेंते इतिं । अनंवऽह्वरम् ॥६

ता । सम्ऽराजा । घृतासुती इति घृतऽआसुती । आदित्या । दानुनः । पती इति ।

सचेते इति । अनवऽह्वरम् ॥६

सम्राजौ आज्ञयैव सर्वेषां शास्तारौ घृतासुती घृतान्नौ तद्वां महित्वं घृतान्नावस्त्विति मन्त्रा न्तरात् आदित्या अदितेः पुत्रौ दानुनस्पती दानुनो दानस्य देवस्य वा धनस्य पती स्वामिनौ ता तौ मित्रावरुणौ अनह्वरमकुटिलं यजमानं सचेते सेवेते ।। ६ ।।

गोमंदू षु नांसत्याश्वांवद्यातमश्विना ।

वर्ती रुंद्रा नृपाय्यंम् ॥७

गोऽम॑त् । ऊ॒ं इति॑ । सु । ना॒स॒त्या॒ । अश्व॑ऽवत् । या॒त॒म् । अ॒श्वि॒ना॒ ।

व॒र्तिः । रु॒द्रा॒ । नृ॒ऽपाय्य॑म् ॥७

गोऽमत् । ऊं इति । सु । नासत्या । अश्वऽवत् । यातम् । अश्विना ।

वर्तिः । रुद्रा । नृऽपाय्यम् ॥७

अश्विना हे अश्विनौ हे नासत्या अनृतभाषणरहितो हे रुद्रा रोरूयमाणौ द्रवन्तौ युवां वर्ति- र्मार्गः तेन मार्गेण रथेन वा नृपाय्यं नृभिर्देवैः पातव्यं सोमं गोमत् गोमद्यथाभवति तथा अश्ववत् अश्ववच्च यथा भवति तथा यातं गच्छतं ऊष्विति पूरणो ।। ७ ।।

न यत्परो॒ नान्त॑र आद॒धर्ष॑द्वृषण्वसू ।

दु॒ःशंसो॒ मर्त्यो॑ रि॒पुः ॥८

न । यत् । परः॑ । न । अन्त॑रः । आ॒ऽद॒धर्ष॑त् । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू ।

दुः॒ऽशंसः॑ । मर्त्यः॑ । रि॒पुः ॥८

न । यत् । परः । न । अन्तरः । आऽदधर्षत् । वृषण्वसू इति वृषण्ऽवसू ।

दुःऽशंसः । मर्त्यः । रिपुः ॥८

वृषण्वसू हे धनस्य वर्षितारौ यद्धनं परो दूरस्थो दुःशंसः शंसनायोग्यो मर्त्यो रिपुः यन्ना- दधर्षत् नापहरेत् तथोक्तलक्षणेतरः अन्तरः समीपवर्ती मर्त्यो रिपुरपि यन्नादधर्षत् तद्धनमावोह्ळामिति शेषः ।। ८ ।।

ता न॒ आ वो॑ळ्हमश्विना र॒यिं पि॒शङ्ग॑संदृशम् । धिष्ण्या॑ वरिवो॒विदं॑म् ॥९

ता । न॒ः । आ । वो॒ळ्ह॒म् । अ॒श्वि॒ना॒ । र॒यिम् । पि॒शङ्ग॑ऽसन्दृशम् ।

धिष्ण्या॑ । व॒रि॒व॒ःऽविदं॑म् ॥९

ता । नः । आ । वोळ्हम् । अश्विना । रयिम् । पिशङ्गऽसन्दृशम् ।

धिष्ण्या । वरिवःऽविदम् ॥९

हे धिष्ण्या धिषणार्हौ अश्विना हे अश्विनौ ता तौ युवां पिशंगसदृशं नानारूपं वरिवोविदं धनस्यलंभकरं रयिं पशुं नोस्मभ्यं आवोह्ळमावहतम् ॥ ९ ॥

इन्द्रों अ॒ङ्ग म॒हद्भ॒यम॒भी षदपं चुच्यवत् ।

स हि स्थि॒रो विचंर्षणिः ॥१०

इन्द्रः॑ । अ॒ङ्ग । म॒हत् । भ॒यम् । अ॒भि । सत् । अपं ।
चु॒च्य॒व॒त् ।

सः । हि । स्थि॒रः । विऽचंर्षणिः ॥१०

इन्द्रः । अङ्ग । महत् । भयम् । अभि । सत् । अप ।
चुच्यवत् ।

सः । हि । स्थिरः । विऽचर्षणिः ॥१०

इन्द्रः महत् अधिकं अभीषत् अभिभवत् भयं भयकारणं अपचुच्यवत् अपच्यावयेत् हि यस्मात्कारणात् स स्थिरः

केनापि चालयितुमशक्यः विचर्षणिर्विश्वस्य द्रष्टा अङ्गेति पूरणम् ॥ १० ॥

इन्द्रश्च मृळयाति नो न नः पश्चादघं नशत् ।

भद्रं भवाति नः पुरः ॥११

इन्द्रः । च । मृळयाति । नः । न । नः । पश्चात् । अघम् । नशत् ।

भद्रम् । भवाति । नः । पुरः ॥११

इन्द्रः । च । मृळयाति । नः । न । नः । पश्चात् । अघम् । नशत् ।

भद्रम् । भवाति । नः । पुरः ॥११

इन्द्रश्च परमैश्वर्यवानिन्द्रश्चेत् नोस्मान्मृळयाति सुखयेत् पश्चात्पृष्ठतः नोस्मान् अघं दुरितं ननशत् न प्राप्नोति नोस्माकं पुरः पुरस्तात् भद्रं कल्याणं च भवाति भवति ॥ ११॥

इन्द्र॒ आशां॑भ्य॒स्परि॒ सर्वा॑भ्यो॒ अभ॑यं करत् ।

जेता॒ शत्रू॒न्विच॑र्षणिः ॥१२

इन्द्रः॑ । आशा॑भ्यः । परि॑ । सर्वा॑भ्यः । अभ॑यम् । क॒र॒त् ।

जेता॑ । शत्रू॑न् । विऽच॑र्षणिः ॥१२

इन्द्रः । आशाभ्यः । परि । सर्वाभ्यः । अभयम् । करत् ।

जेता । शत्रून् । विऽचर्षणिः ॥१२

विचर्षणिः विविधं द्रष्टा जेता शत्रून् असुरान्जेता
तृन्नन्तत्वात्षष्ठ्यभावः इन्द्रः परमैश्वर्यवान् सर्वाभ्य
आाशाभ्यो दिग्भ्योस्माकं अभयं करत्करोतु परीति
पञ्चमीद्योतकः ॥ १२ ॥

विश्वे॑ देवास॒ आ ग॑त शृणु॒ता म॑ इ॒मं हव॑म् ।

एदं ब॒र्हिर्नि षी॑दत ॥१३

विश्वे॑ । दे॒वा॒स॒ः । आ । ग॒त॒ । शृ॒णु॒त । मे॒ । इ॒मम् । हव॑म् ।

आ । इ॒दम् । ब॒र्हिः । नि । सी॒द॒त॒ ॥१३

विश्वे । देवासः । आ । गत । शृणुत । मे । इमम् । हवम् ।

आ । इदम् । बर्हिः । नि । सीदत ॥१३

विश्वेदेवासः हे विश्वेदेवाः आगत इहागच्छत मे मदीयं इमं हवमाह्वानं श्रृणुत इदं बर्हिरस्मिन् बर्हिषि आनिषीदत उपविशत ॥ १३ ॥

ती॒व्रो वो॒ मधु॑माँ अ॒यं शु॒नहो॑त्रेषु मत्स॒रः ।

ए॒तं पि॑बत॒ काम्य॑म् ॥१४

ती॒व्रः । व॒ः । मधु॑ऽमान् । अ॒यम् । शु॒नऽहो॑त्रेषु । म॒त्स॒रः ।

ए॒तम् । पि॒ब॒त॒ । काम्य॑म् ॥१४

तीव्रः । वः । मधुऽमान् । अयम् । शुनऽहोत्रेषु । मत्सरः ।

एतम् । पिबत । काम्यम् ॥१४

हे विश्वेदेवाः तीव्रः तीव्रमदः मधुमान् मधुररसवान् मत्सरो मदकरः सोमोयं वो युष्मदर्थं । शुनहोत्रेषु गृत्समदेष्वस्मासु स्थितः काम्यं कमनीयमेतं सोमं पिबत ॥ १४ ॥

इन्द्र॑ज्येष्ठा॒ मरु॑द्गणा॒ देवा॑स॒ः पूष॑रातयः ।

विश्वे॒ मम॑ श्रुता॒ हव॑म् ॥१५

इन्द्र॑ऽज्येष्ठाः । मरु॑त्ऽगणाः । देवा॑सः । पूष॑ऽरातयः ।

विश्वे॑ । मम॑ । श्रु॒त॒ । हव॑म् ॥१५

इन्द्रऽज्येष्ठाः । मरुत्ऽगणाः । देवासः । पूषऽरातयः ।

विश्वे । मम । श्रुत । हवम् ॥१५

हे इन्द्रज्येष्ठाः इंद्रपुरोगमा मरुद्गणाः मरुत्समूहरूपाः पूषरातयः पूषाख्यो देवो रातिर्दाता येषां ते पूषरातयः देवासः हे द्योतमाना देवाः विश्वे सर्वे यूयं मम मदीयं हवमाह्वानं श्रुतश्शृणुत इन्द्रज्येष्ठादयः संबोधनान्ताः ॥ १५ ॥

अम्बिंतमे॒ नदींतमे॒ देविंतमे॒ सरंस्वति ।

अ॒प्र॒श॒स्ता इंव स्मसि॒ प्रशंस्तिमम्ब नस्कृधि ॥१६

अम्बिंऽतमे । नदींऽतमे । देविंऽतमे । सरंस्वति ।

अ॒प्र॒श॒स्ताःऽइंव । स्म॒सि॒ । प्रऽशंस्तिम् । अ॒म्ब॒ । न॒ः । कृ॒धि॒ ॥१६

अम्बिऽतमे । नदीऽतमे । देविऽतमे । सरस्वति ।

अप्रशस्ताःऽइव । स्मसि । प्रऽशस्तिम् । अम्ब । नः । कृधि ॥१६

अंबितमे मातॄणां श्रेष्ठे नदीतमे नदीनां श्रेष्ठे देवितमे देवीनां श्रेष्ठे हे सरस्वति अप्रशस्ताइव धनाभावादसमृद्धा इव वयं स्मसि भवामः अंब हे मातः सरस्वति नोस्मभ्यं प्रशस्ति धनसमृद्धिं कृधि कुरु प्रयच्छेत्यर्थः ॥ १६ ॥

त्वे विश्वा॑ सरस्वति श्रि॒तायूं॑षि दे॒व्याम् ।

शु॒नहो॑त्रेषु मत्स्व प्र॒जां दे॑वि दिदिड्ढि नः ॥१७

त्वे इति॑ । विश्वा॑ । स॒र॒स्व॒ति॒ । श्रि॒ता । आयूं॑षि । दे॒व्याम् ।

शु॒नऽहो॑त्रेषु । म॒त्स्व॒ । प्र॒ऽजाम् । दे॒वि॒ । दि॒दि॒ड्ढि॒ । न॒ः ॥ १७

त्वे इति । विश्वा । सरस्वति । श्रिता । आयूंषि । देव्याम् ।

शुनऽहोत्रेषु । मत्स्व । प्रऽजाम् । देवि । दिदिड्ढि । नः ॥
१७

हे सरस्वति देव्यां द्योतमानायां त्वे त्वयि विश्वा विश्वानि सर्वाण्यायूंषि अन्नानि आयुः सूनृतेत्यन्ननामसु पाठात् श्रिता आश्रितानि सा त्वं शुनहोत्रेषु गृत्समदेष्वस्मासु विषयेषु मत्स्व सोमपानेन तृप्य किंच हे देवि सरस्वति नः अस्मभ्यं प्रजां दिदिड्ढि पुत्रान्देहि ॥ १७ ॥

इ॒मा ब्रह्मं सरस्वति जु॒षस्वं वाजिनीवति ।

या ते॒ मन्मं गृत्सम॒दा ऋंतावरि प्रि॒या दे॒वेषु॒ जुह्वंति ॥१८

इ॒मा । ब्रह्मं । स॒र॒स्व॒ति॒ । जु॒षस्वं । वा॒जि॒नी॒ऽव॒ति॒ ।

या । ते॒ । मन्मं । गृ॒त्स॒ऽम॒दाः । ऋ॒त॒ऽव॒रि॒ । प्रि॒या । दे॒वेषुं । जुह्वंति ॥१८

इमा । ब्रह्म । सरस्वति । जुषस्व । वाजिनीऽवति ।

या । ते । मन्म । गृत्सऽमदाः । ऋतऽवरि । प्रिया । देवेषु । जुह्वति ॥१८

वाजिनीवति अन्नवति ऋतावरि उदकवति हे सरस्वति इमा इमानि ब्रह्म ब्रह्माणि हवींषि जुषस्व स्वीकुरु या यानि मम मननीयानि देवेषु प्रिया देवानां मध्ये तुभ्यं प्रियाणि देवेषु प्रिया- णि वा ते त्वदर्थं गृत्समदाजुह्वति ।। १८ ।।

प्रेतां य॒ज्ञस्यं श॒म्भुवां यु॒वामिदा वृंणीमहे ।

अ॒ग्निं चं हव्य॒वाहंनम् ॥१९

प्र । इ॒ता॒म् । य॒ज्ञस्यं । श॒म्ऽभुवां । यु॒वाम् । इत् । आ । वृ॒णी॒म॒हे॒ ।

अ॒ग्निम् । च॒ । ह॒व्य॒ऽवाहंनम् ॥१९

प्र । इताम् । यज्ञस्य । शम्ऽभुवा । युवाम् । इत् । आ । वृणीमहे ।

अग्निम् । च । हव्यऽवाहनम् ॥१९

यज्ञस्य यागस्य शंभुवा सुखसंपादके हविर्धाने अनसी तद्रूपे द्यावापृथिव्यौ वा प्रेतां उत्तरवेदेः पश्चिमभागं प्रति गच्छतां अथ प्रत्यक्षकृतः युवामित् युवामेव आवृणीमहे प्रार्थयामहे हव्यवाहन- मग्निं च आवृणीमहे अग्निरत्र निपातभागिति ।। १९ ।।

द्यावां नः पृथि॒वी इ॒मं सि॒ध्रम॒द्य दिंवि॒स्पृशंम् ।

य॒ज्ञं दे॒वेषुं यच्छताम् ॥२०

द्यावां । न॒ः । पृ॒थि॒वी इतिं । इ॒मम् । सि॒ध्रम् । अ॒द्य । दि॒वि॒ऽस्पृशंम् ।

य॒ज्ञम् । दे॒वेषुं । य॒च्छ॒ता॒म् ॥२०

द्यावा । नः । पृथिवी इति । इमम् । सिध्रम् । अद्य । दिविऽस्पृशम् ।

यज्ञम् । देवेषु । यच्छताम् ॥२०

द्यावाद्यौश्च पृथिवी च उभे सिध्रं स्वर्गादेः साधकं दिविस्पृशं देवान्गच्छन्तं अद्यास्मिन्नहनि अस्माकं इमं यज्ञं देवेषु यच्छतां नियच्छताम्।। २० ।।

आ वांमु॒पस्थंमद्रुहा दे॒वाः सींदन्तु य॒ज्ञियाः॑ ।

इ॒हाद्य सोम॑पीतये ॥२१

आ । वा॒म् । उ॒पऽस्थ॑म् । अ॒द्रु॒हा॒ । दे॒वाः । सी॒द॒न्तु॒ । य॒ज्ञियाः॑ ।

इ॒ह । अ॒द्य । सोम॑ऽपीतये ॥२१

आ । वाम् । उपऽस्थम् । अद्रुहा । देवाः । सीदन्तु । यज्ञियाः ।

इह । अद्य । सोमऽपीतये ॥२१

अद्रुहा द्रोहवर्जिते हे हविर्धाने तद्रूपे द्यावापृथिव्यौ वां युवयोरुपस्थं समीपं यज्ञिया यज्ञार्हा देवाः इह यज्ञे अद्यास्मिन्नहनि सोमपीतये सोमपानाय आसीदन्तु ।। २१ ।।

**टिप्पणी**

सोमयागे बहिष्पवमानस्य अन्तिमे चरणे ऐन्द्रवायव, मैत्रावरुण एवं आश्विन् ग्रहाणां क्रमिकरूपेण ग्रहणं भवति। प्रथमेन वाग्देव्याः सिद्धिः अभीष्टमस्ति, द्वितीयेन चक्षुषः, तृतीयेन श्रोत्रयोः।

२.४१.१-३ वायो ये ते इति--

वायुरुपरि टिप्पणी

इन्द्रवायूरुपरि टिप्पणी

वायव्ये चैन्द्रवायवी पञ्चाथ प्राउगास्तृचाः ।
प्रेत्यृक्स्तौति हविर्धाने अग्निस्तत्र निपातभाक् ।
द्यावापृथिव्यौ द्यावेति हविर्धाने ततः परे ।।बृहद्देवता ४.९२ ।।

२.४१.२ नियुत्वान् वायवागहि इति

द्र. आरण्यकगेयः ८९

२.४१.४ अयं वां मित्रावरुणा इति

मित्रावरुणौ उपरि संक्षिप्त टिप्पणी

२.४१.७ गोमदूषु नासत्या इति

अश्विनौ उपरि टिप्पणी

२.४१.१६ अम्बितमे नदीतमे इति

प्रउगशब्दोपरि संदर्भाः

# ऋग्वेदः सूक्तं २.४२



## दे. शकुन्तः (कपिञ्जलरूपीन्द्रः)। त्रिष्टुप्

कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावम् ।

सुमङ्गलश्च शकुने भवासि मा त्वा का चिदभिभा विश्व्या विदत् ॥१॥

मा त्वा श्येन उद्वधीन्मा सुपर्णो मा त्वा विददिषुमान्वीरो अस्ता ।

पित्र्यामनु प्रदिशं कनिक्रदत्सुमङ्गलो भद्रवादी वदेह ॥२॥

अव क्रन्द दक्षिणतो गृहाणां सुमङ्गलो भद्रवादी शकुन्ते ।

मा न स्तेन ईशत माघशंसो बृहद्वदेम विदथे सुवीराः ॥३॥

## सायणभाष्यम्

' कनिक्रदत् ' इति तृचं दशमं सूक्तम् । अत्रैवमनुक्रमणिका- कनिक्रदत्तृचम् ' इति । मण्डलद्रष्टा गृत्समदोऽस्य ऋषिः । त्रिष्टुप् छन्दः । कपिञ्जलरूपीन्द्रो देवता । वयसाममनोज्ञां वाचं श्रुत्वैतत्सूक्तं जपेत् । सूत्रितं च- ' वयसाममनोज्ञां वाचः श्रुत्वा कनिक्रदज्जनुषं प्रब्रुवाण इति सूक्ते जपेत् ' (आश्व. गृ. ३.१०. ९) इति ।।

कनिंक्रदज्ज॒नुषं प्रब्रुवा॒ण इयंर्ति॒ वाचंमरि॒तेव॒ नावंम् ।

सु॒म॒ङ्गलं॑श्च शकु॒ने॒ भवा॑सि॒ मा त्वा॒ का चिं॑दभि॒भा विश्व्या॑ विदत् ॥१

कनि॑क्रदत् । ज॒नुष॑म् । प्र॒ऽब्रु॒वा॒णः । इय॑र्ति । वाच॑म् । अ॒रि॒ताऽइ॑व । नाव॑म् ।

सुऽम॒ङ्गलः॑ । च॒ । श॒कु॒ने॒ । भवा॑सि । मा । त्वा॒ । का । चि॒त् । अ॒भि॒ऽभा । विश्व्या॑ । वि॒द॒त् ॥१

कनिक्रदत् । जनुषम् । प्रऽब्रुवाणः । इयर्ति । वाचम् । अरिताऽइव । नावम् ।

सुऽमङ्गलः । च । शकुने । भवासि । मा । त्वा । का । चित् । अभिऽभा । विश्व्या । विदत् ॥१

कनिक्रदत् पुनःपुनः शब्दायमानः जनुषं जनिष्यमाणमर्थं प्रब्रुवाणः सूचयन् कपिञ्ज- लः अरितेव कर्णधार इव नावं वाचमियर्ति प्रेरयति अथ प्रत्यक्षकृतः हे शकुने कपिञ्जल

त्वं सुमङ्गलः प्रकृष्टकल्याणश्च भवासि भव किञ्च काचिदभिभा कोप्यग्निभवः त्वा त्वां विश्व्या विश्वतः सर्वासु दि्क्षु मा विदत् मा प्रापत् शकुनिः शक्नोत्युन्नेतुमात्मानं न्यक्रन्दीज्जन्मप्रब्रुवाणो यथास्य शब्दस्तथानामेरयति वाचमीरयितेव नावं सुमङ्गलश्च शकुने भव कल्याणमङ्गलो मङ्गलं गिरतेर्गृणात्यर्थे गिरत्यर्थानिति वेति यास्कः ।। १ ।।

मा त्वां श्ये॒न उद्वंधी॒न्मा सुंप॒र्णो मा त्वां विद॒दिषुंमान्वी॒रो अस्तां ।

पित्र्या॒मनुं प्र॒दिशं॒ कनिंक्रदत्सुम॒ङ्गलों भद्रवा॒दी वंदे॒ह ॥२

मा । त्वा॒ । श्ये॒नः । उत् । व॒धी॒त् । मा । सु॒ऽप॒र्णः । मा । त्वा॒ । वि॒द॒त् । इषुंऽमान् । वी॒रः । अस्तां ।

पित्र्यांम् । अनुं । प्र॒ऽदिशंम् । कनिंक्रदत् । सु॒ऽम॒ङ्गलः॑ । भ॒द्र॒ऽवा॒दी । व॒द॒ । इ॒ह ॥२

मा । त्वा । श्येनः । उत् । वधीत् । मा । सुऽपर्णः । मा । त्वा । विदत् । इषुऽमान् । वीरः । अस्ता ।

पित्र्याम् । अनु । प्रऽदिशम् । कनिक्रदत् । सुऽमङ्गलः । भद्रऽवादी । वद । इह ॥२

हे शकुने त्वा त्वां श्येनः प्रबलः पक्षिविशेषो मा वधीत्मा हिंसीत् उतापि च सुपर्णः गरुडः पक्षिविशेषो मा वधीत् मा हिंसीत् तथा इषुमान् बाणवान्वीरः अस्ता शराणां क्षेप्ता धन्वी त्वा त्वां मा विदत्मा प्रापत् किञ्च पित्र्यां प्रदिशं दक्षिणां दिशमनु दक्षिणस्यां दिशीत्यर्थः कनिक्रदत्पुनःपुनः शब्दं कुर्वन् सुमङ्गलः - कल्याणमङ्गलः भद्रवादी शोभनवादी सन् इहास्मद्विषये वद मङ्गलं सूचय ।। २ ।।

अवं क्रन्द दक्षिण॒तो गृ॒हाणां सुम॒ङ्गलों भद्रवा॒दी शंकुन्ते ।

मा नः स्ते॒न ईशत॒ माघशंसो बृ॒हद्वंदेम वि॒दथें सु॒वीराः ॥३

अवं । क्र॒न्द॒ । द॒क्षि॒ण॒तः । गृ॒हाणाम् । सु॒ऽम॒ङ्गलः ।
भ॒द्र॒ऽवा॒दी । श॒कु॒न्ते॒ ।

मा । न॒ः । स्ते॒नः । ई॒श॒त॒ । मा । अ॒घऽशंसः । बृ॒हत् । व॒दे॒म॒
। वि॒दथें । सु॒ऽवीराः ॥३

अव । क्रन्द । दक्षिणतः । गृहाणाम् । सुऽमङ्गलः ।
भद्रऽवादी । शकुन्ते ।

मा । नः । स्तेनः । ईशत । मा । अघऽशंसः । बृहत् । वदेम
। विदथे । सुऽवीराः ॥३

शकुन्ते हे कपिञ्जल त्वं सुमङ्गलो भद्रवादी च सन् गृहाणां दक्षिणतः दक्षिणस्यां दिशि अवक्रन्द शब्दं कुरु दक्षिणतः शब्दायमानः शकुन्तो मङ्गलसूचको हि नोस्माकं स्तेनस्तस्करो मा ईशत मा ईशिष्ट अघशंसः अनर्थकानां शंसकोपि मे शिष्ट उत्तमः पादो व्याख्यातचरः ।। ३ ।।

**टिप्पणी**

स्तुतिं तु पुनरेवेच्छन्न् इन्द्रो भूत्वा कपिञ्जलः ।
ऋषेर्जिगमिषोराशां ववाशास्थाय दक्षिणाम् ।। ९३
।।

स तमार्षेण संप्रेक्ष्य चक्षुषा पक्षिरूपिणम् ।
पराभ्यामभितुष्टाव सूक्ताभ्यां तु कनिक्रदत् ।।
बृहद्देवता ४.९४ ।।

पुराणेषु कपिञ्जलस्य उल्लेखाः

कपिञ्जल

पद्मपुराणे कुञ्जल शुकस्य चत्वार्यः पुत्राः सन्ति( २.८५ )। तेषां नामधेयानि उज्ज्वल, समुज्ज्वल, विज्वल एवं कपिञ्जल एवं सन्ति। ते दिवसस्य अवसाने स्वपितरं आगत्य दिवसे दृष्टानि अपूर्वाणि वृत्तान्तानि कथयन्ति एवं निहितार्थानि ज्ञातुं इच्छन्ति। पद्मपुराणे २.१०१ चतुर्थः पुत्रः कपिञ्जलः स्वदृष्टं अपूर्वं एवं कथयति यत् एका

स्त्री नद्या तटे यदा शोकतः अश्रूणि विमुञ्चति, ते यदा नद्यां पतन्ति, तेभ्यः रक्तवर्णानि पद्मानि जायन्ते। यदा सा हर्षेण अश्रूणि विमुञ्चति, तदा तेभ्यः श्वेतवर्णानि पद्मानि जायन्ते। तस्या स्त्र्याः नामधेयं कामोदा अस्ति। तस्याः उत्पत्तिः पार्वत्याः कल्पवृक्षस्य परीक्षाकाले अभवत्। कालान्तरे तस्याः नामधेयं अशोकसुन्दरी अभवत् एवं सा नहुषस्य भार्या अभवत्। कुञ्जलोपरि एका संक्षिप्त टिप्पणी पूर्वमेव वर्तते। कुञ्जल, उज्ज्वल, विज्वल, कपिञ्जल एषु चत्वार्येषु अपि ज्वलनम् महत्त्वपूर्णमस्ति। कपिञ्जल शब्दस्य परोक्षरूपं कपिञ्ज्वलनम् भवितुमर्हति। यः कपिं ज्वालयति, सः कपिञ्जलः अस्ति। पुराणेषु कपि शब्दस्य तात्पर्यं जडे पदार्थे कंपनोत्पन्नम् अस्ति। जडे पदार्थे जीवनस्य संचारम्। अतः यः जड पदार्थे जीवनस्य संचरणस्य प्रक्रियां उज्वालयति, सः कपिञ्जलः

अस्ति। सूक्ष्म दृष्ट्या जडे द्रव्ये जीवनस्य संचारं केन - केन प्रकारेण भवितुं शक्यते। यदा वयं अन्येषां जीवानां दुःखेभ्यः द्रवीभूता भवन्ति, अयं स्थिति अपि कपि शब्दान्तर्गतं भवति। अतः अन्येषां जीवानां दुःखानां अनुभवं वयं कति सीमातः कर्तुं शक्नुमः, अयं कपिञ्जल शब्दस्य भावं भविष्यति। कपिञ्जलरूपी इन्द्रस्य सूक्तं गृत्समदस्य सूक्तेषु अन्तिमं - अनन्तिमं अस्ति। अयं संकेतमस्ति यत् पद्मपुराणे कुञ्जल शुकस्य उज्ज्वल, समुज्ज्वल एवं विज्वल पुत्रत्रयेभ्यः द्रष्टानि अपूर्वणानि गृत्समदस्य दृष्टेषु अन्येषु सूक्तेषु कथितानि भवन्ति।

पद्मपुराणे कपिञ्जलेन दृष्टे अपूर्वाख्याने यः कामोदा स्त्री अस्ति, सा सात्त्विकगुणयुक्ता प्रकृतिः भवितुं शक्यते। तस्याः यानि अश्रूणि नद्याः जले

पतित्वा रक्त एवं श्वेत पुष्कराणि भवन्ति, अयं संकेतमस्ति यत् यदा वयं शोकस्य अथवा हर्षस्य अनुभवं कुर्वामः, तत् शोकं अथवा हर्षं व्यर्थं न भवेत्। तत् चेतनाप्रवाहस्य जले पतित्वा पुष्कररूपं धारयेत् एवं अन्ततोगत्वा तत् ईश्वरारर्पणं कर्तुं योग्यं भवेत्।

व्यवहारे परेषां दुःखानां ज्ञाने कः प्रक्रिया भवितुं शक्यते, अस्मिन् संदर्भे कपिवरस्य हनुमानस्य कथा पर्याप्तं भविष्यति। हनुमानः सूक्ष्मशरीरं धारयित्वा सुरसायाः मुखं प्रविशति, तदनन्तरं बहिरागच्छति(वा.रामायणम् ५.१.१४५)।
सूक्ष्मशरीरस्य धारणप्रक्रिया शुनक, शौनक शब्दान्तर्गतं भवति, अयं प्रतीयते। यथा शौनकोपरि टिप्पण्यां उल्लिखितमस्ति - अथ यस्माच्छुनासीर्येण यजेत । या वै देवानां श्रीरासीत्साकमेधैरीजानानां

विजिग्यानानां तच्छुनमथ यः संवत्सरस्य प्रजितस्य रस आसीत्तत्सीरं सा या चैव देवानां श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां य उ च संवत्सरस्य प्रजितस्य रस आसीत्तमेवैतदुभयं परिगृह्यात्मन् कुरुते तस्माच्छुनासीर्येण यजते – शतपथ २.६.३.[२] चातुर्मास्य कर्मकाण्डानुसारेण शुनम्, शून्या अवस्थात् अग्रिमं स्थितिः सीरं अस्ति। संवत्सरस्य स्थितिः चेतनायाः व्यापनस्य स्थितिः प्रतीयते। योगादृष्ट्या अस्मिन् संदर्भे श्रीरजनीश महोदयस्य कुण्डलिनी और सात शरीर व्याख्यानमाला पठनीयमस्ति।

पद्मपुराणे उल्लेखमस्ति यत् कुञ्जलशुकस्य चत्वार्येभ्यः स्वपुत्रेभ्यः साकं संवादं ओंकारक्षेत्रे अभवत्। अयं संकेतमस्ति यत् कपिञ्जलस्य सम्बन्धं ओंकारस्य चतुर्थ मात्रा, यस्य नामोल्लेखं

ग्रन्थेषु अर्धमात्रा भवति, सह भवितुं शक्यते। चतुर्थमात्रायाः गुणं अस्ति यत् अस्मिन् काले प्रकृत्याः विकासं तां स्थितिं प्रापयति यत्र प्रकृतिः पुरुषस्य नियन्त्रणे समर्थं भवति। अन्यथा, सार्वत्रिक रूपेण पुरुषः एव प्रकृत्याः नियन्त्रणं करोति।

पुराणेषु यदा ऋषयः मुक्त्यर्थं अव्यभिचारिण्याः भक्त्याः रहस्यं ज्ञातुमिच्छन्ति, ते शौनकं प्रति आगच्छन्ति एवं शौनकः तान् रोमहर्षणस्य पुत्रं सूतं प्रति नयति। वैदिकभाषायां रौमहर्षणिः सूतः ऋग्वेदस्य २.४२ सूक्तस्य देवता कपिञ्जलः प्रतीयते।

कुञ्जलोपरि टिप्पणी

# ऋग्वेदः सूक्तं २.४३

| | | |
|---|---|---|
| | **ऋग्वेदः - मण्डल २** | |
| ← सूक्तं २.४२ | सूक्तं २.४३<br>गृत्समद (आङ्गिरसः शौनहोत्रः पश्चाद्) भार्गवः शौनकः | |

दे. शकुन्तः(= कपिञ्जलरूपीन्द्रः)। जगती, २ अतिशक्वरी अष्टिर्वा ।

---

प्रदक्षिणिदभि गृणन्ति कारवो वयो वदन्त ऋतुथा शकुन्तयः ।

उभे वाचौ वदति सामगा इव गायत्रं च त्रैष्टुभं चानु राजति ॥१॥

उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि ।

वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमा वद विश्वतो नः शकुने पुण्यमा वद ॥२॥

आवदँस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः ।

यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥३॥

## सायणभाष्यम्

' प्रदक्षिणित् ' इति तृचमेकादशं सूक्तं गार्त्समदं जागतम् । तथा चानुक्रान्तं-' प्रदक्षिणिज्जागतं मध्येऽतिशक्वर्यष्टिर्वा ' इति । द्वितीयातिशक्वरी अष्टिर्वा । इतरे जगत्यौ । कपिञ्जलरूपीन्द्रो देवता । वयसाममनोज्ञां वाचं श्रुत्वा ' प्रदक्षिणित् ' इति सूक्तं जपेत् । सूत्रं प्रागेवोदाहृतम् ।।

प्र॒द॒क्षि॒णिद॒भि गृ॑णन्ति का॒रवो॒ वयो॒ वद॑न्त ऋतु॒था

श॒कुन्त॑यः ।

उ॒भे वाचौ॑ वदति साम॒गा इ॑व गाय॒त्रं च॒ त्रैष्टु॑भं॒ चानु॑ राजति ॥१

प्र॒ऽद॒क्षि॒णित् । अ॒भि । गृ॒ण॒न्ति॒ । का॒रवः॑ । वयः॑ । वद॑न्तः । ऋ॒तु॒ऽथा । श॒कुन्त॑यः ।

उ॒भे इति॑ । वाचौ॑ । व॒द॒ति॒ । सा॒म॒गाःऽइ॑व । गा॒य॒त्रम् । च॒ । त्रैस्तु॑भम् । च॒ । अनु॑ । रा॒ज॒ति॒ ॥१

प्रऽदक्षिणित् । अभि । गृणन्ति । कारवः । वयः । वदन्तः । ऋतुऽथा । शकुन्तयः ।

उभे इति । वाचौ । वदति । सामगाःऽइव । गायत्रम् । च । त्रैस्तुभम् । च । अनु । राजति ॥१

शकुंतयः कपिञ्जलाः ऋतुथा कालेकाले वयोन्नं वदन्तः सूचयन्तः कारवः स्तोतारइव प्र- दक्षिणित् प्रदक्षिणं अभिगृणन्ति अभिवदन्तु बहुवचनं पूजार्थं किञ्च उभे

वाचौ गानं च श्रौतं च सामगा इव गायत्रं च त्रैष्टुभं च सामनीव शकुन्तिर्वदति अनुराजति च शृण्वतोनुरक्तान्करोतीत्यर्थः ।। १ ।।

उ॒द्गा॒तेवं शकु॒ने॒ साम॑ गायसि ब्रह्मपु॒त्र इं॑व॒ सव॑नेषु शंससि ।

वृषेंव वा॒जी शिशुं॑मतीर॒पीत्यां स॒र्वतों नः शकुने भ॒द्रमा वंद वि॒श्वतों नः शकु॒ने॒ पुण्य॒मा वंद ॥२

उ॒द्गा॒ताऽइंव । श॒कु॒ने॒ । साम॑ । गा॒य॒सि॒ । ब्र॒ह्म॒पु॒त्रःऽइंव । सव॑नेषु । श॒ंस॒सि॒ ।

वृषांऽइव । वा॒जी । शिशुं॑ऽमतीः । अ॒पि॒ऽइत्यं । स॒र्वतः॑ । न॒ः । श॒कु॒ने॒ । भ॒द्रम् । आ । व॒द॒ । वि॒श्वतः॑ । न॒ः । श॒कु॒ने॒ । पुण्यं॑म् । आ । व॒द॒ ॥२

उद्गाताऽइव । शकुने । साम । गायसि । ब्रह्मपुत्रःऽइव । सवनेषु । शंससि ।

वृषाऽइव । वाजी । शिशुऽमतीः । अपिऽइत्य । सर्वतः । नः । शकुने । भद्रम् । आ । वद । विश्वतः । नः । शकुने । पुण्यम् । आ । वद ॥२

शकुने हे कपिञ्जल उद्गातेव साम यथोद्गाता साम गायति तथा त्वं गायसि गानस्वनं करोषि ब्रह्मपुत्र इव यथा ब्राह्मणाच्छंसी सवनेषु शस्त्राणि शंसति तथा त्वं कालेषु शंससि श्रौतस्वरं करोषि वृषेव वाजी सेचनसमर्थोश्वः शिशुमतीर्वडवा अपीत्य अभिगत्य यथा शब्दं करोति तथा त्वमपि वद शिष्टं स्पष्टम्।। २ ।।

आ॒वद॒ँस्त्वं शंकुने भ॒द्रमा वंद तू॒ष्णीमासींनः सुम॒तिं चिंकिद्धि नः ।

यदु॒त्पत॒न्वद॑सि कर्क॒रिर्य॑था बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥३

आ॒ऽवद॑न् । त्वम् । श॒कु॒ने॒ । भ॒द्रम् । आ । व॒द॒ । तू॒ष्णीम् । आसी॑नः । सु॒ऽम॒तिम् । चि॒कि॒द्धि॒ । नः॒ ।

यत् । उ॒त्ऽपत॑न् । वद॑सि । क॒र्क॒रिः । य॒था॒ । बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥३

आऽवदन् । त्वम् । शकुने । भद्रम् । आ । वद । तूष्णीम् । आसीनः । सुऽमतिम् । चिकिद्धि । नः ।

यत् । उत्ऽपतन् । वदसि । कर्करिः । यथा । बृहत् । वदेम । विदथे । सुऽवीराः ॥३

शकुने हे कपिञ्जल आवदन्शब्दं कुर्वन्त्वं भद्रमावद मङ्गलं वद तूष्णीमासीनः तूष्णीं तिष्ठन्नपि नोस्माकं सुमतिं चिकिद्धि बुद्ध्यस्व यद्यदा उत्पतन्वदसि तदा कर्करिर्यथा

कर्करिर्वदति कर्करिर्वाद्यविशेषः अन्यद्व्याख्यातचरम् ।।
३ ।।

।। इतिद्वितीयस्याष्टमेद्वादशोवर्गः ।। १२ ।।

।। इतिद्वितीयेमण्डले चतुर्थोनुवाकः ।। ४ ।।

।। इतिगार्त्समदं द्वितीयं मण्डलं समाप्तम् ।। २ ।।

